C. 5. 319
B. 5. 10. 28
K. 5. 10. 28

ब्रवीमि यदहं देवास्तत्सर्वं क्रियतामिह ।
ततः सर्वं करिष्यामि यदूचुर्मां द्विजर्षभाः ॥ २८
न शुष्केण न चार्द्रेण नाश्मना न च दारुणा ।
न शस्त्रेण न वज्रेण न दिवा न तथा निशि ॥ २९
वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः ।
एवं मे रोचते संधिः शक्रेण सह नित्यदा ॥ ३०
बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ ।
एवं कृते तु संधाने वृत्रः प्रमुदितोऽभवत् ॥ ३१
यत्तः सदाभवच्चापि शक्रोऽमर्षसमन्वितः ।
वृत्रस्य वधसंयुक्तानुपायाननुचिन्तयन् ।
रन्ध्रान्वेषी समुद्विग्नः सदाभूद्बलवृत्रहा ॥ ३२
स कदाचित्समुद्रान्ते तमपश्यन्महासुरम् ।
संध्याकाल उपावृत्ते मुहूर्ते रम्यदारुणे ॥ ३३
ततः संचिन्त्य भगवान्वरदानं महात्मनः ।
संध्येयं वर्तते रौद्रा न रात्रिर्दिवसं न च ।
वृत्रश्चावश्यवध्योऽयं मम सर्वहरो रिपुः ॥ ३४
यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महासुरम् ।
महाबलं महाकायं न मे श्रेयो भविष्यति ॥ ३५

---

$M_{3-5}$ समयं तमहं ब्रूयां. — $^{b}$) K (except $K_{2}$) transp. तत् and सर्वं. $B_{2.4.5}$ D (except $D_{1.2.3}$) क्रियते (for क्रियताम्). K (except $K_{2}$) $D_{1.2.3}$ $G_{4}$ इति; $B_{2.4.5}$ Dn Ds $D_{3-7.9.10}$ यदि (for इह). $M_{3-5}$ तेन संधिर्भवेद् द्वयोः. — $^{c}$) $M_{3-5}$ नापि रात्रौ न च दिवा. — $^{d}$) K (except $K_{1}$) $D_{2.3}$ यन्मां ब्रूत; $D_{1}$ यत्प्रब्रूत; $G_{4}$ मां यदूचुः (by transp.). $K_{1.3.4}$ $D_{10}$ द्विजोत्तमाः; $K_{2}$ नरर्षभाः; $K_{5}$ तपोधनाः; $B_{1.3}$ सुर°; $B_{2.4}$ महर्षयः; $T_{1.2}$ (before corr.) G $M_{1.2}$ दिवौकसः. $M_{3-5}$ हंतव्यो भूरितेजसा.

29 $^{b}$) $M_{3-5}$ न लोष्टेन न दारुणा. — $^{c}$) $K_{1.2.5}$ $D_{2.3.9}$ transp. शस्त्रेण and वज्रेण. $K_{4}$ B चास्त्रेण; $D_{1}$ वास्त्रेण (for शस्त्रेण). $K_{3}$ Dn Ds $D_{3-7}$ चास्त्रेण; B $D_{1}$ शस्त्रेण; $D_{10}$ शापेन (for वज्रेण). — $^{d}$) T G $M_{1.2}$ अपि वा (for तथा). $M_{3-5}$ सर्वप्रहरणैरपि.

30 $^{a}$) $M_{2}$ अहमेव (for भवेयं). $M_{3-5}$ अवध्योहं भवेयं च. — $^{b}$) Some MSS. देवतैः. — $^{d}$) $K_{2}$ transp. शक्रेण and सह. K (except $K_{1}$) $D_{1.2.3-10}$ नान्यथा (for नित्यदा). $T_{1}$ $G_{1}$ युष्माकं यदि रोचते.

31 $^{a}$) K (except $K_{1}$) $D_{2.3}$ M एवम् (for एव). $D_{9.10}$ मुनयः; $G_{2}$ ते सर्वे (for ऋषयः). — $^{c}$) D (except $D_{1.2.3.9}$) वृत्ते (for कृते). $K_{1.4.5}$ च; $M_{3-5}$ हि (for तु). $M_{3-5}$ संधौ तु (for संधाने). — $^{d}$) $M_{3-5}$ शक्रः (for वृत्रः). $K_{5}$ T G $M_{1.2}$ स (for प्र-). — After 31, T G $M_{1.2}$ ins.:

85* ततः संधिं मिथः कृत्वा ऋषयो दीप्ततेजसः ।
शक्रस्य सह वृत्रेण पुनर्जग्मुर्यथागतम् ।

T G cont.: M subst. for $32^{ab}$:

86* अथ दीर्घस्य कालस्य शक्रः संचिन्त्य भारत ।
[ M (except $M_{1}$) इंद्रः (for शक्रः). ]

32 For $32^{ab}$, M subst. 86*. $G_{4}$ transp. $32^{ab}$ and $32^{cd}$. — $^{a}$) $K_{4.5}$ $B_{5}$ D (except $Ds_{1}$ $D_{2.3-10}$) युक्तः; $Cd.s$ यत्तः (as in text). $T_{2}$ $G_{4}$ यत्नवान् (for यत्तः सदा). B (except $B_{5}$) समभवत् (for सदाभवत्). — $^{b}$) $K_{4}$ B D (except $D_{1.2.10}$; $D_{5}$m as in text) G हर्ष° (for ऽमर्ष°). $Cd.s$ cite अमर्षः. — $^{c}$) $K_{5}$ तु वधसंयुक्तान्; $M_{3-5}$ वधसंयुक्तं. — $^{d}$) $M_{3-5}$ उपायं (for उपायान्). K (except $K_{1}$) $B_{1.3}$ $Dn_{2}$ $D_{1.2.6.8.9}$ T G $M_{1.2}$ अन्व($K_{3}$ बह्व-; $K_{4.5}$ बहु)चिंतयत्; $G_{4}$ स विचिंतयन्; $M_{3-5}$ त्वभ्य($M_{5}$ °न्व)चिंतयत्. — T G $M_{1.2}$ ins. after $32^{cd}$ ($G_{4}$, which transp. $32^{ab}$ and $32^{cd}$, ins. after $32^{ab}$):

87* अभिसंधिर्महेन्द्रस्य संधिकर्मणि यः कृतः ।
ऋषिभिस्त्वीरितं यच्च महेन्द्रस्तदनुस्मरन् ।

— $^{e}$) $K_{3}$ $B_{3.5}$ D (except $D_{1.2.3-10}$) $M_{3-5}$ छिद्रान्वेषी. $M_{3-5}$ च वृत्रस्य (for समु°). — $^{f}$) K (except $K_{2}$) T $G_{1.4.5}$ $M_{1.2}$ तदा ($T_{2}$ तथा) (for सदा). $G_{5}$ आसीद् (for अभूद्). $B_{5}$ D (except $D_{1}$) $T_{2}$ $G_{2-4}$ वसति ($D_{2.3}$ $T_{2}$ $G_{2-4}$ भवति) देवराट् (for -भूद्बलवृत्रहा).

33 $^{b}$) $B_{5}$ $T_{1}$ G (except $G_{4}$) सम° (for तम°). $M_{3-5}$ वृत्रमिन्द्रो ददर्श ह. — $^{c}$) $M_{3-5}$ उपव्यूढे (for उपा°). $K_{2}$ संध्याकालमुपासीनं; $M_{2}$ उपावृत्ते महाघोरे. — $^{d}$) $K_{1.4}$ $B_{1.3.5}$ $D_{8.9}$ रौद्र°; $K_{2}$ सौम्य°; $B_{2.4}$ Dn Ds $D_{3-7}$ चाति°; $D_{10}$ [ऽ]तिभयंकरे; $T_{2}$ राग° (for रम्य°). $M_{3-5}$ रौद्रे कालेथ भारत.

34 $^{a}$) $K_{3}$ T $G_{1.5}$ मघ° (for भग°). — $^{b}$) $M_{2}$ महामनाः; $M_{3-5}$ महाद्युतेः. — $^{d}$) K $Dn_{1}$ $D_{1.3.4.7.9}$ दिवसो. $T_{1}$ $G_{1.5}$ न च वासरः; $M_{3-5}$ न दिवाप्युत (for दिवसं न च). — After $34^{cd}$, K $D_{3}$ ins.:

88* वरश्चानेन संप्राप्तो ह्यवध्यो दैवतैरपि ।
तत्कथं त्विह कर्तव्यमुपायं चिन्तये सदा ।

— $M_{3-5}$ om. $34^{e}$–$36^{b}$. — $^{f}$) $K_{4.5}$ स मे (for मम).

35 $M_{3-5}$ om. 35 (cf. v. l. 34). — $^{a}$) $D_{3}$ (before corr.) T G $M_{1.2}$ नि- (for न). — $^{d}$) $T_{1.2}$ (before

एवं संचिन्तयन्नेव शक्रो विष्णुमनुस्मरन् ।
अथ फेनं तदापश्यत्समुद्रे पर्वतोपमम् ॥ ३६
नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा ।
एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नशिष्यति ॥ ३७
सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान् ।
प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत् ॥ ३८
निहते तु ततो वृत्रे दिशो वितिमिराभवन् ।
प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तदा ॥ ३९
ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः ॥ ४०
नमस्कृतः सर्वभूतैः सर्वभूतानि सान्त्वयन् ।
हतशत्रुः प्रहृष्टात्मा वासवः सह दैवतैः ।
विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित् ॥ ४१
ततो हते महावीर्ये वृत्रे देवभयंकरे ।
अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्मनाः ।
त्रैशीर्षयाभिभूतश्च स पूर्वं ब्रह्महत्यया ॥ ४२
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ।
न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकल्मषैः ।
प्रतिच्छन्नो वसत्यप्सु चेष्टमान इवोरगः ॥ ४३
ततः प्रनष्टे देवेन्द्रे ब्रह्महत्याभयार्दिते । C. 5. 337 B. 5. 10. 46 K. 5. 10. 49

---

corr.) G M1.2 तत् (for न).

36 M3–5 om. $36^{ab}$ (cf. v. l. 34). — a) D8 स (for सं-). K3 एवं चिंतापरो राजन्. — c) M3–5 अथ फेनोत्करं पश्यन्. — d) D10 सामुद्रं (for समुद्रे).

37 a) K4 transp. अयं and शुष्को. M3–5 चाप्यार्द्रो (for चार्द्रोऽयं). — b) M3–5 महत् (for तथा). — c) K1.3.5 D9 T G M1.2 एतत्; D1.2.5 एवं; D7.8.10 M3–5 एतं (for एनं). T2 G4 M3–5 क्षिपामि (for क्षेप्स्यामि). — d) K1.3.5 D10 एनं; K2.4 B1 D5.6 एवं; M1.2 इव (for एव). K1.3.5 D10 वधिष्यति; K4 विनंक्ष्यति; D2.9 नशिष्यते; M1.2 विनश्यति. T G तत्क्षणाद्विनशि°; M3–5 क्षिप्रं स न भविष्यति.

38 a) K4 D8 (before corr. as in text).10 T2 सामुद्रम् (for सवज्रम्). K1 D9 तु; K2.3 D8 T G1.3.5 M1.2 तत् (for तं). G4 स वज्री फेनं तत्क्षिप्रं. — b) G4 वृत्रं समभिसृष्ट°. — For $38^{ab}$, M3–5 subst.:

89* जग्राह च स तं फेनमिन्द्रो वृत्रनिबर्हणम् ।
निगृह्य शक्रो बाहुभ्यां प्राहिणोद्वृत्रमस्तके ।

— c) M3–5 transp. फेनं and विष्णुः K4 T G1.2 M1.2 तद् (for तं). — d) K5 Dn2 D8 T2 G2 M2 विनाश°; T1 G1.5 ह्यनाश°; G3 स नाश°; M3–5 न्यसूद°.

39 D10 om. $39^{ab}$. — a) K1.4 D1.2 G1.5 तदा; D9 तथा (for ततो). M3–5 हते तु वृत्रे शक्रेण. — b) D1 वितमसो° (for वितिमिरा°). — c) B1 तदा; D8 ततो; D10 शुभो (for शिवो). D2.8 ववौ शिवः सुखो वायुः; D9 M3–5 ववौ च सुशिवो (D9 °खदो) वायुः. — d) D2.3 प्रजहृषुः; T1 G1.5 च तुतुषुः; M1.2 च मुमुदुः; M3–5 च सुखिनः (for च जहृषुः). D (except D1–5.8.10) T1 G5 तथा; M3–5 अभवन् (for तदा). K3 जहृषुर्देवतास्तथा.

40 a) M1 च (for स-). — b) B4 D (except D1.2.8.9) यक्षरक्षोमहोरगाः. — d) D2 प्रास्तुवन्; M (except M1) तुष्टुवुर् (for अस्तुवन्).

41 a) Dn1 °भूतान् (for °भूतैः). — b) Dn1 इति प्रोवाच (for सर्वभूतानि). Dn2 D2–6 असांत्वयत् (D2.5 °न्). — c) K2 B1–4 D8 हत्वा वृत्रं; K4 B5 Dn D3–7 हत्वा शत्रुं; D1 हते शत्रौ; D10 हतवृत्रः; M3–5 हतारयः. D10 प्रसन्नात्मा; M3–5 प्रहृष्टेंद्राः. — d) Some MSS. देवतैः. M3–5 देवा अग्निपुरोगमाः. — f) D9 धर्मतः (for °वित्). M3–5 मुहुः संपूजयंस्तदा.

42 c) M3–5 ब्रह्महत्याभिभूतश्च. — d) K3 परमदुःखितः. — e) K2.3 त्रिशीर्षस्य; K4 D1.7 त्रिशीर्षया; M2 त्रैशीर्षम्. K1 M1 अभिषक्तश्च; K3–5 M2 अभिषिक्त°; T1 G1.4.5 अभियुक्त°. M3–5 त्रिशिरोवधजं चापि. — f) M3–5 कश्मलं चाप्यदेवराट्. — After 42, T G ins.:

90* महादेवस्य भूतैश्च स पुनर्ब्रह्महन्निति ।
आक्रुष्टो निर्भयैर्भूयो व्रीडितो बलवृत्रहा ।

[ (L. 1) T2 G3 °देवैश्च (for °देवस्य). G3 विदुर्ब्रह्महरन्निति. — (L. 2) T G1.3 अभियुक्तोभव(T2 G1 °क्तो भवे)द्भूयः (T2 °तैः). T2 वेदितो (for व्रीडितो). ]

43 b) K2 B1.2.4 ह्यचेतनः (for विचे°). — c) K1.4 D1.7.8 G2–4 M1 प्रज्ञा° (for प्राज्ञा°). M2–5 ततोनश्यत्स देवेंद्रः. — d) G5 हि (for तु). K च कल्मषैः (K5 किल्बि°); B3.5 स कल्म°; D2.8 तु कल्म°; T1 G M1 स्वकर्मभिः; T2 स किल्बि°. M2–5 कश्मलेनाभिपीडितः. — e) K1 D10 M2.5 वसन्; B5 Dn D8 D3.4.6.9 -वसच्च; D1.5.7 वसंश्च; M3.4 -वसद् (for वसति). T1 G M1 अपि; M2–5 राजन् (for अप्सु). — f) K2 Ds2 D1 M3–5 वेष्ट°; T1.2 (m as in text) G M1.2 नष्टसंज्ञः. D2.3.9 निःश्वसन्निव चोरगः.

44 a) D10 G3.4 प्रणष्टे. D1 जातः प्रनष्टो देवेंद्रः. — b)

C. 5. 338
B. 5. 10. 47
K. 5. 10. 50

भूमिः प्रध्वस्तसंकाशा निर्वृक्षा शुष्ककानना ।
विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च ॥ ४४
संक्षोभश्चापि सत्त्वानामनावृष्टिकृतोऽभवत् ।
देवाश्चापि भृशं त्रस्तास्तथा सर्वे महर्षयः ॥ ४५
अराजकं जगत्सर्वमभिभूतमुपद्रवैः ।
ततो भीताभवन्देवाः को नो राजा भवेदिति ॥ ४६
दिवि देवर्षयश्चापि देवराजविनाकृताः ।
न च स्म कश्चिद्देवानां राज्याय कुरुते मनः ॥ ४७

इति श्रीमहाभारते उद्योगपर्वणि दशमोऽध्यायः ॥ १० ॥

## ११

शल्य उवाच ।
ऋषयोऽथाब्रुवन्सर्वे देवाश्च त्रिदशेश्वराः ।
अयं वै नहुषः श्रीमान्देवराज्येऽभिषिच्यताम् ।
ते गत्वाथाब्रुवन्सर्वे राजा नो भव पार्थिव ॥ १
स तानुवाच नहुषो देवानृषिगणांस्तथा ।
पितृभिः सहितान्राजन्परीप्सन्हितमात्मनः ॥ २
दुर्बलोऽहं न मे शक्तिर्भवतां परिपालने ।
बलवाञ्जायते राजा बलं शक्रे हि नित्यदा ॥ ३

---

K1 ब्रह्मवध्या°; D8 D10 वृत्रहत्या°; D1 °र्दितः. — d) K1.4.5 D9 S (except T2) निः(K1 D9 वि)श्लक्ष्णा; B4 D1 Cd.8 निवृत्ता (for निर्वृक्षा). — e) Some MSS. °श्रोतसो. — f) D2 सर्वाण्यंबुधराणि च.

45 G1 om. 45a–46b. — a) M संक्षयश्चापि. K2 भूतानां; G3 M2 लोकानां. — b) K5 ह्यभूत् (for ऽभवत्). — c) D10 सर्वे (for चापि). — d) D6 सर्वे चैव (for तथा सर्वे).

46 G1 om. 46ab (cf. v. l. 45). — a) K5 अराजकतया (for °जकं जगत्). G5 इदं (for जगत्). — After 46ab, K2.4 ins.:

91* राजा वा क्रियतामद्य महेन्द्रो वाथ मृग्यताम् ।

[ K4 शक्रश्चाप्यथ मृष्यति (for the posterior half). ]

— c) K5 भ्रांता (for भीता). — d) K1.3–5 तु; K2 B1 D2.9 -न्यः; Dn1 -पि; Ca.d.8 नः (as in text). K3.5 भविष्यति (for भवेदिति).

47 a) K (except K2) चैव; D10 भीताः (for चापि). — K3 om. 47cd. — c) D9 तत्र (for च स्म). K1.4.5 न स्म कश्चिद्धि; B3 Dn D8 D8–8.10 न स्म कश्चन (for न च स्म कश्चिद्). — d) K1.4.5 D (except D1.2.8.9) राज्ये वै (for राज्याय). D (except D1) मतिं (for मनः).

Colophon. K2.5 B1–4 D (except D1.9) G1.2 M1.2, all om. sub-parvan name, cite only इन्द्रविजय (G1.2 M1.2 इन्द्रविजयोपाख्यान). — *Adhy. name*: K1.4.5 D8 पुरोहितयानं; T1 G1.2 M वृत्रवधः (or °धं). — *Adhy. no.* (figures, words or both): K1 D5–7.10 S 10; D2 9. — *S'loka no.*: K5 52; Dn 50.

### 11

1 D9 om. 1. — a) D1 च (for अथ). — b) K1–4 B4m D (except Dn2 D1.2.8.9) G3.5 त्रिदिवेश्वराः; M (except M1) त्रिदिवौकसः. — c) T1 G1.5 M च (for वै). — d) D7 देवराज्येभितिष्ठतां. — After 1cd, B D (except D1.9; D2 marg.) ins.:

92* तेजस्वी च यशस्वी च धार्मिकश्चैव नित्यदा ।

[ D10 नित्यदा धार्मिको नृपः (for the posterior half). ]

— e) K1.4.5 D1.2.8 transp. गत्वा and अथ. D10 तं गत्वा (for गत्वाथ). K3 हि; Dn D3 D3–7 तु; D9 च (for अथ). T1 G1.5 देवगंधर्वाः (for अथाब्रुवन्सर्वे). — After 1e, M1 ins.:

93* देवाश्च त्रिदिवेश्वराः ।
नहुष त्वं महाबाहो.

2 b) K2 B2.3 D1.2.8 G2–4 M1.3.4 सर्षि° (for ऋषि°); cf. v. l. 4. K2 B2.5 Ds D10 G (except G3) M तदा (for तथा). — c) D2.9 मंत्रिभिः; T2 M ऋषिभिः (for पितृभिः). K4.5 D2.7 S सहितः (for सहितान्). D2.7.8 S राजा (for राजन्). — d) D6 परीप्सुर् (for परीप्सन्).

3 c) B4 G3 जायतां; B4m Ds D1.2.10m T G1.2.4 M ज्ञायतां (M2 ज्ञायते) (for जायते). S कश्चिद् (G3 sup. lin. शक्तिः) (for राजा). — d) S बली शक्रस्तु (for बलं शक्रे हि). G4 सर्वशः (for नित्यदा).

तमब्रुवन्पुनः सर्वे देवाः सर्षिपुरोगमाः ।
अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ॥ ४
परस्परभयं घोरमस्माकं हि न संशयः ।
अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे ॥ ५
देवदानवयक्षाणामृषीणां रक्षसां तथा ।
पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम् ।
तेज आदास्यसे पश्यन्बलवांश्च भविष्यसि ॥ ६
धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव ।
ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे ॥ ७
सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ।
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ॥ ८
देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च ।
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते ।
सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च ॥ ९
अप्सरोभिः परिवृतो देवकन्यासमावृतः ।
नहुषो देवराजः सन्क्रीडन्बहुविधं तदा ॥ १०
शृण्वन्दिव्या बहुविधाः कथाः श्रुतिमनोहराः ।
वादित्राणि च सर्वाणि गीतं च मधुरस्वरम् ॥ ११
विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः ।
ऋतवः षड्‌ देवेन्द्रं मूर्तिमन्त उपस्थिताः ।
मारुतः सुरभिर्वाति मनोज्ञः सुखशीतलः ॥ १२
एवं हि क्रीडतस्तस्य नहुषस्य महात्मनः ।
संप्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया ॥ १३
स तां संदृश्य दुष्टात्मा प्राह सर्वान्सभासदः ।
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ॥ १४
अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः ।

C. 5. 359
B. 5. 11. 13
K. 5. 11. 18

---

4 a) K2 B ततः; S (except G5) सुराः (for पुनः). — b) M2.3.5 दिव्याः (for देवाः). D (except D1.2.3,9) M3.5 ऋषि° (for सर्षि°); cf. v. l. 2. T2 गंधर्वर्षिपुरो°. — d) B त्रिपिष्टपे(!); D1 °ष्टपं.

5 a) K1.2 D7.10 परस्परं; Ds1 परंपर-. — b) K4 अस्मान्पाहि (for अस्माकं हि). G2.5 तु (for हि). — c) K1 Dn1 °षिंच्यस्व; D1.3 S °षिंचस्व. — d) B त्रिपिष्टपे(!).

6 a) K5 °सिद्धानां (for °यक्षाणां). — b) K5 ग्रहाणां; M5 रक्षसां (for ऋषीणां). M5 पक्षिणां (for रक्षसां). — c) K2.3 B (except B5) सिद्धगंधर्व°; T G1.2.4.5 °देवानां; G3 M1 °दैत्यानां; M2-5 °सिद्धानां. — d) S (T2 before corr.) दृष्ट्वा (for चक्षुर्-). S -वासिनां (for -वर्तिनाम्). — e) D1 आसाद्य मे; D3.4.7 चादास्यसे; T1 G5 °स्यते. K1 भवान्; K4.5 D9 T1 G M पश्चात्; D1.2.3 दृष्ट्वा (for पश्यन्). T2 तेज आसाद्य दिष्ट्या त्वं.

7 B1 om. 7ab. — a) T G4 स्व(T2 सु)धर्मं वै (T1 च) पुरस्कृत्य. — D5.6 om. 7cd. — c) K1 मह° (for ब्रह्म°). — d) T2 G1.2 गोपायाशु; G3-5 गोपयाशु; M1 गोपाय त्वं. K2.3.5 D8 T2 त्रिविष्टपं; B त्रिपिष्टपं(!). — B Dn Ds D2(marg.).3.4.7.10 ins. after 7: G1, after 15ab:

94* अभिषिक्तः स राजेन्द्र ततो राजा त्रिविष्टपे ।
धर्मं पुरस्कृत्य तदा सर्वलोकाधिपोऽभवत् ।

[ (L. 1) B1.2.4 Ds अभ्यषिच्यत; Dn1 अभ्यषिच्य स; Dn2 अभ्यषिंचत; D7 G1 °षिच्यत (for अभिषिक्तः स). B (except B3) त्रिपिष्टपे(!). — For line 1, D10 subst.:

95* ओमित्युक्तेऽथ नहुषो देवराज्येऽभिषेचितः ।

— (L. 2) D2-4.7.10 सदा (for तदा). ]

8 Before 8, K Dn1 D1.2.3 B5 S ins. शल्य उवाच (S om. उ°). — a) Dn2 Ds सुदुर्लभवरं; T2 सुदुर्लभान्वरान्. — b) B (except B3) त्रिपिष्टपे(!). — c) K1 काले (for भूत्वा).

9 b) K4 नंदनेषु च भारत; D1.2.3 नंदनोपवने तथा; M2 कंदरेषु वनेषु च. — c) Some MSS. कैलाशे. — e) K1.4.5 D7.9 G2 महेंद्रमलये.

10 b) M °कीर्त्या (for °कन्या-). K5 D1.2.3.10 -समन्वितः (for-समावृतः). — c) K1 च; K2 B स; K3-5 Dn Ds D3-7 अथ; D2.3 असौ (for सन्). — d) D1.7 (*sup. lin.* as in text) T2 G2.3 तथा (for तदा). K (except K2) D10 चिक्रीड विधिवत् (D10 विविधं) तदा.

11 a) M1 transp. दिव्याः and बहुविधाः. K (except K2) श्रृण्वन्बहुविधां दिव्यां (K1 रम्यां). — b) K (except K2) कथां श्रुतिमनोहरां; D2.3 कथाश्चातिमनो°. — c) K2.3 D1.2.3 B (except B5) च दिव्यानि; T2 विचित्राणि (for च सर्वाणि). — d) Dn2 D3 T2 °स्वनं (for °स्वरं).

12 a) K5 तुंबरु° (for नारद°). — c) M2 ऋषयः (for ऋतवः). G4 चापि (for षड्). — d) K2 (before corr.) D7.9 G4 मूर्तिमंतम्. K2 T1 G1.5 उपासते.

13 a) K1.2.4 D5.7.10 G1 M1 (*sup. lin.*) वि-; K3.5 B Dn Ds D1.6 T च (for हि). — b) B4m D (except D1.2.3.9; D10 marg.) दुरा° (for महा°).

14 a) K1.4.5 विलोक्य; T2 संप्रेक्ष्य (for संदृश्य). — b) K1.4.5 D2.3 M2 चिंतयामास भारत. — d) G1.5

C. 5. 360
B. 5. 11. 19
K. 5. 11. 19

आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनम् ॥ १५
तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह ।
रक्ष मां नहुषाद्ब्रह्मंस्त्वामस्मि शरणं गता ॥ १६
सर्वलक्षणसंपन्नां ब्रह्मंस्त्वं मां प्रभाषसे ।
देवराजस्य दयितामत्यन्तसुखभागिनीम् ॥ १७
अवैधव्येन संयुक्तामेकपत्नीं पतिव्रताम् ।
उक्तवानसि मां पूर्वमृतां तां कुरु वै गिरम् ॥ १८
नोक्तपूर्वं च भगवन्मृषा ते किंचिदीश्वर ।
तस्मादेतद्भवेत्सत्यं त्वयोक्तं द्विजसत्तम ॥ १९
बृहस्पतिरथोवाच इन्द्राणीं भयमोहिताम् ।
यदुक्तासि मया देवि सत्यं तद्भविता ध्रुवम् ॥ २०
द्रक्ष्यसे देवराजानमिन्द्रं शीघ्रमिहागतम् ।
न भेतव्यं च नहुषात्सत्यमेतद्ब्रवीमि ते ।
समानयिष्ये शक्रेण नचिराद्भवतीमहम् ॥ २१
अथ शुश्राव नहुष इन्द्राणीं शरणं गताम् ।
बृहस्पतेरङ्गिरसश्चुक्रोध स नृपस्तदा ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

transp. कस्मान् and मां. D7 M3.4 मा (for मां). K1.4 T1 °तिष्ठते; K3 °सर्पति (for °तिष्ठति).

15 a) K1.4 अथ; K2.5 अद्य; D1 च; D2 अपि; D8 हि (for अस्मि). — b) K2 महे° (for तथे°). — After 15ab, G1 ins. 94*. — d) K2 शीघ्रं मेद्य (for क्षिप्रमद्य). D9 मम (for अद्य).

16 a) K2 B अथाब्रवीत् (for उवाच ह). — d) K4 B4m D (except D1.2.3.9) M1 त्वामस्मि. K4 D2.5 शरणागता.

17 b) D3.4 मां (for त्वं). D3.4 G4 प्रति° (for मां प्र°). — d) D3.4.9 G2 अत्यर्थं; G5 M2.5 अत्यंतं (for अत्यन्त-). K1.4 -संगिनीं; G2.5 M2 -भोगिनीं (for -भागिनीं).

18 ab) K1 Dn2 D8 युक्तां वापि; K2 युक्तां मां; K3-5 B Dn1 Ds D2-7 युक्तां चापि; D9 युक्तां च (for संयुक्तां). Ds2 दृढव्रतां; D1 यतव्रतां; T1 G4.5 तपस्विनीं; G1-3 M यशस्विनीं (for पति°). — c) K2 transp. मां and पूर्वं. B2.4 यत्; M (except M2) मा (for मां). — D6 om. from मां up to भवेत् in 19c. — d) D2 तद्वतां (for ऋतां तां).

19 D6 om. up to भवेत् (cf. v. l. 18). — a) T1 G1.5 हि (for च). K1 मृषावाक्यं; D10 ते वचनं (for च भगवन्); see below. — b) Dn Ds D3-5.7 वृथा (for मृषा). K1 भगवन् (for मृषा ते); see above. K5 मृषा किंचिदिहेश्वर; D10 मृषा किंचन गीष्पते.

20 b) N (except D1.2.3; D3m as in text) शक्राणीं. Ds2 D1 T2 भयविह्वलां. — c) D9 हि त्वं (for देवि). — d) D3 transp. सत्यं and तत्. D9 देवि (for सत्यं). K4 T G ते; D7 च (for तद्).

21 a) D1 T1 G1.5 °राजं तं (for °राजानं). — b) K1 B D1 पुनर् (for शीघ्रम्). G2 इंद्रशं शीघ्रमागतं. — d) G3.5 एव (for एतद्). — e) Dn1 D8 G3 संमानयिष्ये; D9 समानेष्यामि; Cd.s as in text. — f) D6 इह (for अहम्).

22 a) K1 इति श्रुत्वा च (for अथ शुश्राव). — b) K1.3 D (except D1.2.3) शक्राणीं. K5 B5 D (except Dn1 D1.3.4.6.9) T1 G (except G5) शरणागतां. — c) K1 G1.5 बृहस्पतिं. K1 G1.5 चांगिरसं; K5 Dn2 D5 T G3.4 M3-5 आं(T चां)गिरसः; Ca as in text. — d) K4 T G1.5 नृपतिस्; B1.2.5 D1.2.3 G2-4 नहुषस् (for स नृपस्). D9 transp. नृपः and तदा. Dn2 चुक्रोध नृपसत्तमः.

Colophon. K1.2.4 B1-4 D T1 G1.2 M all om. sub-parvan name, cite only इंद्रविजय (D1 नहुषोपाख्यान and इंद्राणीविजय; T1 G1.2 M इंद्रविजयोपाख्यान). — *Adhy. name:* K1.4 D3 पुरोहितयानं; D3 नहुषराज्यं; G2 नहुषाभिषेकशल्युपरोधः; M1 नहुषाभिषेकः. — *Adhy. no.* (figures, words or both): K1 Ds1 D5.6.10 S 11; D2 10. — *S'loka no.:* K5 24; Dn 26.

## 12

1 a) K2 D (except D1.2.3.9) G5 दृष्ट्वा; G4 M (except M1) श्रुत्वा (for ज्ञात्वा). — b) K3 G4 सर्षिगणास्तथा (G4 °दा); D (except D1.3.9) ऋषि(D3 अग्नि)पुरोगमाः.

## १२

शल्य उवाच ।

क्रुद्धं तु नहुषं ज्ञात्वा देवाः सर्षिपुरोगमाः ।
अब्रुवन्देवराजानं नहुषं घोरदर्शनम् ॥ १
देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो ।
त्रस्तं सासुरगन्धर्वं सकिंनरमहोरगम् ॥ २
जहि क्रोधमिमं साधो न क्रुध्यन्ति भवद्विधाः ।
परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ॥ ३
निवर्तय मनः पापात्परदाराभिमर्शनात् ।
देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ॥ ४
एवमुक्तो न जग्राह तद्वचः काममोहितः ।
अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः ॥ ५
अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी ।
जीवतो भर्तुरिन्द्रेण स वः किं न निवारितः ॥ ६
बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा ।
वैधर्म्याण्युपधाश्चैव स वः किं न निवारितः ॥ ७
उपतिष्ठतु मां देवी एतदस्या हितं परम् ।
युष्माकं च सदा देवाः शिवमेवं भविष्यति ॥ ८

देवा ऊचुः ।

इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते ।
जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ॥ ९

शल्य उवाच ।

इत्युक्त्वा ते तदा देवा ऋषिभिः सह भारत ।
जग्मुर्बृहस्पतिं वक्तुमिन्द्राणीं चाशुभं वचः ॥ १०
जानीमः शरणं प्राप्तामिन्द्राणीं तव वेश्मनि ।

C. 5. 378
B. 5. 12. 11
K. 5. 12. 11

---

2 $^{b}$) $D_{10}$ transp. त्वयि and क्रुद्धे. $B_1$ $D_{1.2.8.9}$ T G प्रभो ($G_4$ पते) (for विभो). — $^{c}$) $D_1$ $T_1$ ग्रस्तं (for त्रस्तं). $D_{1.2}$ ससुर° (for सासुर°).

3 $^{a}$) $D_{2.8}$ $G_{2-4}$ वीर (for साधो). — $^{b}$) $G_4$ transp. न and क्रुध्यन्ति. $K_{3.4}$ D (except $D_{1.2.9}$) कुप्यंति (for क्रुध्यन्ति). — $^{c}$) $K_{1.4.5}$ शक्रस्य (for परस्य). — $^{d}$) $K_2$ $D_1$ प्रसीद त्वं (for प्रसीदस्व). $G_3$ सुरोत्तम.

4 $^{a}$) $G_4$ क्रोधात् (for पापात्). — $^{b}$) Some N MSS. °मर्षणात्. — $^{c}$) $G_{1.5}$ देवराड् (for °राजः). — $^{d}$) $K_1$ $D_{S1}$ प्रजां (for प्रजा).

5 $^{d}$) $K_2$ $M_4$ नराधिप; $B_{1.2.4}$ $M_{3.5}$ नराधिपः; $D_{1.2.10}$ $G_{3.4}$ सुराधिपं; $D_9$ मुनींस्तदा (for सुरा°).

6 $^{b}$) M (except $M_1$) तप° (for यश°). — $^{c}$) S पत्यौ ($M_{2-5}$ पतौ) जीवति सें($T_2$ $G_{3-5}$ चें)द्रेण. — $^{d}$) $=7^{d}$. $K_{4.5}$ $B_1$ $D_{10}$ T G च; $D_1$ वै (for वः). $G_3$ नु (for न). $M_{3-5}$ च (for नि-). $M_2$ स किं च न पराजितः.

7 $D_{1.9}$ om. (hapl.) 7. — $^{a}$) $K_{1.3.5}$ इह; $K_4$ हि (for च). — $^{b}$) $T_1$ $G_4$ सुराः (for पुरा). — $^{c}$) $K_{1.2.4}$ $D_n$ $D_{5.7}$ $G_4$ M (except $M_1$) वैधर्माणि; all comm. as in text. $D_S$ उपधा; $G_4$ उपायात्; $C_{a.d.s}$ उपधाः (as in text). $K_1$ उपधाभिश्च; $K_2$ उपरोधाश्च (for उपधाश्चैव). — $^{d}$) $=6^{d}$. $K_{1.4}$ च; $C_a$ वः (as in text). B $D_S$ $D_{5.7.10}$ $T_1$ $G_{1.4.5}$ कस्मान्न वारितः; M (except $M_1$) किं न च वारितः.

8 $^{a}$) $K_2$ B D (except $D_9$) transp. मां and देवी. $K_{1.3-5}$ सा (for मां). $G_{2-4}$ देवी सा (for मां देवी). — $^{b}$) $K_4$ यत्तद्; $K_5$ $T_1$ $G_{1.5}$ ह्येतद् (for एतद्). $K_2$ T $G_{1.5}$ M तस्याः (for अस्याः). $K_{1.4.5}$ $D_{9.10}$ $M_1$ transp. हितं and परं. $B_{2.4}$ भवेत्; $T_2$ $M_3$ वरं (for परम्). — $^{c}$) $K_2$ $B_1$ $T_2$ $G_4$ तु; $T_1$ $G_{1.5}$ हि (for च). $D_6$ (hapl.) om. $8^{d}$–$10^{a}$. — $^{d}$) $T_2$ $G_{3.4}$ एतद् (for एवं).

9 $D_6$ om. 9 (cf. v. l. 8). — $^{a}$) T आनयिष्याम. — $^{b}$) $D_9$ M यदि ($M_2$ यद्) (for यथा). $D_1$ दिवःसद; $T_2$ तथास्तु वै (for दिवस्पते). K (except $K_2$) $D_{10}$ देवराज तवांतिकं ($K_3$ $D_{10}$ °के); $T_1$ G सुराधिप यदी($G_4$ °दि)च्छसि. — $^{c}$) $D_9$ M देव (for वीर).

10 $D_6$ om. $10^{a}$ (cf. v. l. 8). $K_2$ $B_4$ $D_9$ S (except $T_2$ $G_{2.3}$) om. the ref. — $^{a}$) $K_2$ B $D_n$ $D_3$ $D_{1.3-5.7.10}$ तं; $D_9$ तां (for ते). $K_{2.3}$ $D_9$ $M_{3-5}$ ततो (for तदा). $D_9$ देवीं (for देवाः). — $^{b}$) $K_{1.4}$ मुनिभिः (for ऋषिभिः). — $^{c}$) $D_1$ °स्पतेर् (for °स्पतिं). $D_9$ विप्रं (for वक्तुं). $K_1$ जग्मुर्बृहस्पतिगृहं. — $^{d}$) $D_{10}$ शक्राणीं (for इन्द्राणीं). $D_1$ om. च. $K_{1.4.5}$ $B_1$ D (except $D_{n2}$ $D_S$ $D_6$) $T_1$ $G_1$ M (except $M_1$) शुभं (for अशुभं).

11 Before 11, $D_1$ $T_2$ ins. देवाः. — $^{a}$) M (except $M_1$) $G_4$ जानीम (for °मः). — $^{c}$) $D_7$ दत्त्वाभयं (for दत्ता°).

12 $^{a}$) $D_2$ $G_3$ ततो; $D_3$ नत्वा (for ते त्वां). $D_{S2}$ $D_1$

C. 5. 378
B. 5. 12. 11
K. 5. 12. 11

दत्ताभयां च विप्रेन्द्र त्वया देवर्षिसत्तम ॥ ११
ते त्वां देवाः सगन्धर्वा ऋषयश्च महाद्युते ।
प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयताम् ॥ १२
इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः ।
वृणोत्वियं वरारोहा भर्तृत्वे वरवर्णिनी ॥ १३
एवमुक्ते तु सा देवी बाष्पमुत्सृज्य सस्वरम् ।
उवाच रुदती दीना बृहस्पतिमिदं वचः ॥ १४
नाहमिच्छामि नहुषं पतिमन्वास्य तं प्रभुम् ।
शरणागतास्मि ते ब्रह्मंस्त्राहि मां महतो भयात् ॥ १५

बृहस्पतिरुवाच ।

शरणागतां न त्यजेयमिन्द्राणि मम निश्चितम् ।
धर्मज्ञां धर्मशीलां च न त्यजे त्वामनिन्दिते ॥ १६
नाकार्यं कर्तुमिच्छामि ब्राह्मणः सन्विशेषतः ।
श्रुतधर्मा सत्यशीलो जानन्धर्मानुशासनम् ॥ १७
नाहमेतत्करिष्यामि गच्छध्वं वै सुरोत्तमाः ।
अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम् ॥ १८
न तस्य बीजं रोहति बीजकाले
न चास्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
न सोऽन्तरं लभते त्राणमिच्छन् ॥ १९
मोघमन्नं विन्दति चाप्यचेताः
स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः ।

---

T1 G1.2 M त्वा (for त्वां). K3 बृहस्पते देवाः (for देवाः सग°). — b) K (except K2) D10 मुनयः (for ऋषयः). — c) K5 D8 प्रसादयंते; D1.2 T2 G2.4 °यंतः. K D10 शक्राणी; D1.8 T2 इंद्राणीं; D2 G2.4 इंद्राणी; T1 G1.5 सैंद्राणी (for चेन्द्राणी).

13 a) T1 G देवेशो (for नहुषो). — b) T1 G नहुषोयं; T2 देवेशोयं (for देवराजो). D9 देवराजसमद्युतिः. — c) G3.4 वरय (for वृणोतु). B (B4 m as in text) Dn2 D9 इमं; D10 असुं; G3.4 त्वं (for इयं). K5 वृणु तं त्वं वरारोहे; D1 वृणोति त्वां वरा°; D2 G5 वरयस्व (G5 °य त्वं) वरारोहे; T1 G1 (m as in text).2 M वरयत्वियं (M2 °मं) वरा° (hypermetric). — d) T1 G1.4.5 भर्तारं. K5 G5 °वर्णिनि.

14 a) K1.4.5 D8.10 T2 G2.3 उक्ता (for उक्ते). M1 तदा (for तु सा). G3 वरारोहा (for तु सा देवी). K1 D8 देवैः (for देवी). — b) Ds D10 (m as in text) अन्वास्य (for उत्सृज्य). K1.2.4.5 सुस्वरं; K3 Dn Ds D1.3–7.10 (m as in text) सस्वनं; D2.8 सत्वरं; G2 गद्गदं. — c) K4 तु तदा (for रुदती). K1.4 देवी; D2 भीता (for दीना).

15 Before 11, T2 ins. इंद्राणी उ°, G1 इंद्राणी. — a) G3 भजामि; M2 अर्हामि (for इच्छामि). — b) K1.4.5 B1–3 D8–10 M2 अन्वासितुं; Ca अन्वास्य तं (as in text). Cd.s cite अन्वास्य. K1.4.5 B2 D8.9 प्रभो; K3 विभो; D10 गुरो; G3 विभुं (for प्रभुम्). B4 m Dn Ds D3–7 T2 (m as in text) पतिं देवर्षिसत्तम; D2 इति मत्वास्म्यहं प्रभो; M1.3–5 पतिमन्वेषयाम्यहं. — c) Hypermetric! K2 D9 S शरणं (for शरणा-). M3–5 ब्रह्मंस्त्वं (for ते ब्रह्मन्). K4 भद्रं (for ब्रह्मन्). — d) K3 Dn Ds D5–7 त्रायस्व (for त्राहि मां). D9 त्वं महामते (for महतो भयात्). — After 15, K1–3 ins.:

96* एवमुक्तस्तया देव्या वाक्यमाह बृहस्पतिः ।

16 K2.3 om. the ref. — a) Hypermetric! K3.5 B D (except D8.9) °गतं (for °गतां). K1 D9 न त्यजेहं; D6 न भेतव्यं. — b) K (except K2) D (except D9) T2 निश्चयः (for निश्चितम्). T1.2 (before corr.) G इन्द्राणीं च यशस्विनीं; M त्वामिंद्राणि (M2.5 °णीं) मनस्विनीं (M1 °नि). — c) N (except D1) सत्यशीलां (for धर्म°). — D7 (hapl.) om. 16d–17c. — d) D (except D1.6.8.10; D7 om.) T G त्यजेयम् (for त्यजे त्वाम्). K1.3.5 D9 T1 G अनिंदितां.

17 D6 om. 17abc (cf. v. l. 16). — c) K1 सत्यधर्मः; K5 S (except G2) श्रुतधर्मः.

18 a) K (except K2) D2.6.8 एवं (for एतत्). — b) D2.8 च (for वै). — c) D10 om. च.

19 a) S चास्य (for तस्य). K Dn2 D1.9.10 T1 G1.3.5 M1.4 (*sup. lin.* as in text) रोह° (for बीज°). — b) Dn तस्य (for चास्य); cf. S above. K2.4 D1.9.10 T2 देवो (for वर्षं). — c) = 21c. Cf. 20c. D1 भीरुं (for भीतं). K4 (*sup. lin.*) च (for the second प्र-). — d) D1 transp. न and स. M1.2 om. स. M3–5 असौ (for सः). K2 D2 उत्तमान्; K3–5 उत्तरं; B (B4 m as in text) Dn Ds D2 m.3–7.10 M2 (m as in text) T2 (before corr. as in text) त्रातारं; D1 उत्तमं; M3–5 त्राणं (for अन्तरं). G3 भजते (for लभते). K2 ईप्सन् (for इच्छन्).

20 a) K1 D8 स मोघं; D2 (m as in text) नोष्णं; Cs मोघं (as in text). B4 Dn1 D2 m.3.4.7 अर्थं; D1 T2 सर्वं; Cs अन्नं (as in text). K2 D9.10 T1 G1 विंदते; C3

भीतं प्रपन्नं प्रददाति यो वै
न तस्य हव्यं प्रतिगृह्णन्ति देवाः ॥ २०
प्रमीयते चास्य प्रजा ह्यकाले
सदा विवासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं प्रददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ २१
एतदेवं विजानन्वै न दास्यामि शचीमिमाम् ।
इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियाम् ॥ २२
अस्या हितं भवेद्यच्च मम चापि हितं भवेत् ।
क्रियतां तत्सुरश्रेष्ठा न हि दास्याम्यहं शचीम् ॥ २३
शल्य उवाच ।
अथ देवास्तमेवाहुर्गुरुमङ्गिरसां वरम् ।
कथं सुनीतं तु भवेन्मन्त्रयस्व बृहस्पते ॥ २४
बृहस्पतिरुवाच ।
नहुषं याचतां देवी किंचित्कालान्तरं शुभा ।
इन्द्राणीहितमेतद्धि तथास्माकं भविष्यति ॥ २५
बहुविघ्नकरः कालः कालः कालं नयिष्यति ।
दर्पितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ २६
शल्य उवाच ।
ततस्तेन तथोक्ते तु प्रीता देवास्तमब्रुवन् ।
ब्रह्मन्साध्विदमुक्तं ते हितं सर्वदिवौकसाम् ।
एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम् ॥ २७
ततः समस्ता इन्द्राणीं देवाः साग्निपुरोगमाः ।
ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया ॥ २८

C. 5. 396
B. 5. 12. 28
K. 5. 12. 29

---

विन्दति (as in text). $K_2$ हि; $T_1$ $G_5$ वा (for च). $K_2$ $D_{9.10}$ T G अप्रचेताः; $K_3$ $D_1$ अल्पचेताः; $M_2$ अप्युपेतः (for अप्यचेताः). — $^b$) $D_1$ $G_2$ सर्वात्; $M_2$ धर्मात् (for स्वर्गात्). $K_{2.4}$ $T_2$ G नश्यति (for भ्रश्यति). $K_{1.4.5}$ $D_{s2}$ $D_2$(m as in text)$_{.3.4.9}$ $M_5$ नष्टचेताः; $D_{5-7}$ चाप्यचेष्टः; $D_8$ चाप्यचेताः; $T_2$ भ्रष्टचेताः; G $M_1$ भ्रष्टचेष्टः ($G_4$ हृष्टचेताः). — $T_1$ G om. $20^c$–$21^b$. — $^c$) Cf. $19^c$. $K_4$ (*sup. lin.*) च (for प्र-). $K_{2.3}$ $D_2$ शत्रवे; $M_5$ योत्र वै (for यो वै).

21 $T_1$ G om. $21^{ab}$ (cf. v. l. 20). — $^a$) M न जायते ($M_1$ *sup. lin.* प्रजायंते); $C_{a.d.s}$ प्रमीयते (as in text). $M_1$ (*sup. lin.*) अपि (for हि). M ($M_1$ *sup. lin.* as in text) काले (for अकाले). — $^b$) $K_1$ $D_{n1}$ $D_s$ $D_{3-8.10}$ m विवादं; $K_{2-5}$ $D_{10}$ विनाशं; $D_9$ विषादं; $C_s$ विवासं (as in text). — $^c$) = $19^c$. $K_{4.5}$ $D_{10}$ यो हि; $T_1$ $G_4$ च (for the second प्र-).

22 $^a$) $K_2$ $B_{1.2.4}$ प्रजानन्; $D_1$ प्रपन्नां (for विजानन्). — $^b$) $D_1$ ददामि (for दास्यामि). $T_2$ G अहं (for इमाम्). — $D_1$ om. $22^{cd}$. — $^c$) M देवीं (for लोके).

23 $^b$) $D_{10}$ यन्मम (for मम च). $T_1$ $G_4$ transp. च and अपि). $D_{s1}$ $D_{1.9}$ वा (for च). — $^c$) $K_{1.4.5}$ त्रिदश° (for तत्सुर°). — $^d$) $K_1$ $T_2$ om. हि. $K_1$ transp. अहं and शचीं. $T_2$ शचीमिमां (for अहं शचीम्).

24 $D_1$ M om. the ref. — $^a$) $D_n$ $D_s$ $D_{3-7.10}$ सगंधर्वाः (for तमेवाहुः). $D_1$ अथ देव्याश्च ते प्राहुः. — $^b$) S (except $T_2$) ऋषिं (for गुरुं). $B_{2.5}$ $T_1$ $G_{1.2}$ अंगिरसं. D (except $D_{1.2.8.9}$) गुरुमाहुरि($D_s$ °हमि-; $D_6$ °ह इ)दं वचः. — $^c$) $K_{1.5}$ $D_n$ $D_s$ $D_{1.3.4.6.7.10}$ नु; $K_3$ च; $D_{2.8}$ हि (for तु).

25 $G_4$ गुरुः (for बृह° उ°). — $^a$) $M_{2.5}$ देवि (for देवी). — $^b$) $D_5$ $G_{2.4}$ $M_{1.2}$ कंचित्. $D_2$ तदा (for शुभा). $D_1$ कंचित्कालं शुभांतरे. — $^c$) $M_{2.5}$ इंद्राणि हि°. T G हितमेतद्धि वै मन्ये. — $^d$) $K_5$ $T_2$ यथा; $D_8$ तदा (for तथा).

26 $G_3$ om. $26^{ab}$. — $^a$) $K_{2.5}$ B D (except $D_{2.8}$) °विघ्नः सुराः; $G_4$ °विघ्नतरः; $M_2$ °विघ्नकरं. $M_2$ कालं; $C_s$ कालः (as in text). — $^b$) $K_1$ transp. कालः and कालं. $K_4$ स्वयं; $D_9$ तस्मात् (for कालः). $G_2$ तं हि; $C_s$ कालं (as in text). $M_{1-4}$ निनेष्यति (for नयि°). $K_3$ रम्यः कालो भविष्यति; $D_{n1}$ कालं न क्षपयिष्यति; $D_1$ कालः कालेन गच्छति; T $G_{1.4.5}$ कालंस्तं घात($T_2$ $G_4$ नाश)यिष्यति; $M_5$ कालं विघ्नेन नेष्यति. — $^c$) D (except $D_{1.2.8-10}$) $M_2$ $C_s$ गर्वितो (for दर्पितो). — $^d$) B (except $B_4$) $D_{2.8.9}$ M (except $M_1$) बल° (for वर°).

27 $D_7$ om. $27^{ab}$. T G om. the ref. — $^a$) $K_4$ $D_8$ यथा (for तथा). $K_{1.4}$ $D_{2.8.9}$ $T_2$ उक्तेन (for उक्ते तु). $K_2$ अथ चांगिरसा प्रोक्ते. — $^b$) K $B_{2.3.5}$ $D_n$ $D_s$ $D_{1.3.6.9.10}$ तथा; $B_{1.4}$ $D_{4.5}$ तदा (for तम्). $K_2$ ध्रुवं (for अब्रुवन्). — $^d$) $K_4$ B $D_{s1}$ $D_{2-4.6.7}$ $M_1$ सर्वं (for सर्व-). — $^f$) $D_{10}$ शक्राणीयं प्रपद्यतां.

28 $^b$) = 5. 13. $8^b$. $B_1$ साग्निपुरोधसः; $D_n$ $D_{2-4}$ चाग्नि°; $D_3$ अग्नि°. — $^c$) $D_{1.2}$ एकाग्रा; $G_5$ अव्यग्रां (for अव्यग्रा). — $^d$) T $G_{1.2.5}$ देवानां (for लोकानां).

29 Before 29, $K_5$ $B_{3.4(marg.).5}$ D (except

G. 5. 397
B. 5. 12. 29
K. 5. 12. 29

त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम् ।
एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति ॥ २९
क्षिप्रं त्वामभिकामश्च विनशिष्यति पार्थिवः ।
नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ॥ ३०
एवं विनिश्चयं कृत्वा इन्द्राणी कार्यसिद्धये ।
अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ॥ ३१
दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम् ।
समहृष्यत दुष्टात्मा कामोपहतचेतनः ॥ ३२

इति श्रीमहाभारते उद्योगपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## १३

शल्य उवाच ।
अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट् तदा ।
त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते ।
भजस्व मां वरारोहे पतित्वे वरवर्णिनि ॥ १
एवमुक्ता तु सा देवी नहुषेण पतिव्रता ।
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा ॥ २
नमस्य सा तु ब्रह्माणं कृत्वा शिरसि चाञ्जलिम् ।
देवराजमथोवाच नहुषं घोरदर्शनम् ॥ ३
कालमिच्छाम्यहं लब्धुं किंचित्त्वत्तः सुरेश्वर ।
न हि विज्ञायते शक्रः प्राप्तः किं वा क्व वा गतः ॥ ४
तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो ।
ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते ।

---

$D_{1.2.3.9}$) ins. देवा ऊचुः. — $^{c}$) $D_{1}$ देवि; $T_{1}$ $G_{1.5}$ साध्वी (for सत्या). $D_{1}$ त्वं (for च). — $^{d}$) $D_{1}$ $G_{1.5}$ गच्छ त्वं (for गच्छस्व).

30 $^{a}$) $K_{5}$ अयं (for क्षिप्रं). $K_{1}$ $D_{9}$ तद्-; $K_{2.3.5}$ $D_{1.3.10}$ त्वद्- (for त्वाम्). $K_{2.3}$ $D_{1}$ अधि° (for अभि°). $K_{4}$ स; $D_{10}$ तु (for च). — $^{b}$) $K_{1}$ $D_{1}$ विनंक्ष($D_{1}$ °क्ष्य)ति स; $Ds_{2}$ विनश्यति च; $D_{7}$ $T_{1}$ G स विनश्यति; $D_{9}$ स विनंक्ष्यति. D (except $D_{1.2.3.9}$) $G_{5}$ पापकृत् (for पार्थिवः). — $^{c}$) $K_{3.5}$ M दिवि (for देवि). — $^{d}$) $K_{3.5}$ $Dn_{1}$ $D_{7}$ $G_{3}$ अवाप्स्यसि.

31 Before 31, T G (except $G_{5}$) ins. शल्यः. — $^{a}$) $D_{5.6}$ विनिश्चितं (for °श्चयं). $K_{1.3-5}$ मत्वा; $K_{2}$ $D_{1}$ ज्ञात्वा (for कृत्वा). — $^{b}$) K (except $K_{2}$) $D_{1.3.4.9.10}$ शक्राणी (for इन्द्राणी). — $^{c}$) $G_{2.3.5}$ °गच्छच्च (for °गच्छत). S सव्रीळा. — $^{d}$)=5. 13. 3$^{d}$.

32 $^{a}$) $D_{1.2.3}$ transp. दृष्ट्वा and तां. $K_{1.5}$ तु (for तां). $D_{10}$ राजा (for चापि). — $^{d}$) $K_{1.4}$ कालोपहृत°; $K_{3.5}$ $D_{2}$ कालोपहत°; $Ds_{2}$ $D_{1}$ कामोपहृत°.

Colophon. $K_{1.2.5}$ B D (except $D_{2}$) $T_{1}$ $G_{2}$ $M_{2}$ all om. sub-parvan name, cite only इंद्रविजय ($D_{3}$ इंद्रजय; $T_{1}$ $G_{2}$ $M_{2}$ इंद्रविजयोपाख्यान). — *Adhy. name*: $K_{1.4.5}$ पुरोहितयानं; $D_{2}$ नहुषनिश्चयः; $D_{3}$ पुरोहितयानं and नहुषनिश्चयः; $G_{1.2}$ नहुषातिक्रमे बृहस्पतिवाक्यं ($G_{2}$ °स्पतिसंवादः); $M_{1}$ नहुषशचीप्रार्थनं. — *Adhy. no.* (figures, words or both): $K_{1}$ $Ds_{1}$ $D_{5-7.10}$ S 12; $D_{7}$ 11. — *S'loka no.*: Dn $D_{3}$ 32.

### 13

1 $^{a}$) $B_{1}$ दुःखिताम् (for अथ ताम्). — $^{b}$) $K_{1}$ transp. नहुषः and देवराट्. $D_{1}$ तथा (for तदा). — $^{f}$) $K_{2}$ पतिं वै (for पतित्वे).

2 $^{a}$) $K_{4.5}$ $M_{1.3}$ उक्ते (for उक्ता). — $^{c}$) $D_{1}$ प्राकंपत (for प्रावे°).

3 $^{a}$) $K_{1.2}$ B Dn Ds $D_{1.3-8.10}$ प्रणम्य सा; $D_{9}$ नमस्कृत्य. $K_{2}$ B Dn Ds $D_{1.3-7}$ हि; $D_{9}$ च (for तु). $D_{3}$ भर्तारं (for ब्रह्माणं). $G_{4}$ ब्रह्माणं सा नमस्कृत्य. — $^{b}$) $K_{2}$ B D (except $D_{2.3-10}$) शिरसा तु कृतांजलिः; $K_{3.5}$ (also as in text) विष्णुं च शरणं ($K_{5}$ °णा-) गता. — $^{c}$) $K_{3.5}$ दुर्विनीतम् (for देव°). — $^{d}$)=5. 12. 31$^{d}$.

4 $^{a}$) $D_{9}$ संप्राप्तुं (for अहं लब्धुं). K (except $K_{2}$) प्राप्तुं; $T_{1}$ $G_{1.5}$ किंचित् (for लब्धुं). — $^{b}$) $K_{1.3}$ $G_{4}$ $M_{1.2}$ कंचित्; $M_{3-5}$ अद्य (for किंचित्). $K_{2}$ D (except $D_{1.2.3.9}$) $T_{2}$ $G_{2.3}$ त्वत्तः कं($T_{2}$ $G_{2}$ किं)चित्; $T_{1}$ $G_{1.5}$ त्वत्तो लब्धुं (for किंचित्त्वत्तः). — $^{d}$) $K_{2}$ क्वासौ कुत्र; B D (except $D_{1.2.3}$) किं वा प्राप्तः (by transp.); T G कुतः प्राप्तः; M प्राप्तः कुत्र. $K_{3}$ Dn $G_{4}$ च (for the second वा).

5 $^{a}$) $K_{2}$ एव; $B_{1}$ $D_{1.9}$ एवं (for एतत्). $K_{1}$ च (for तु). $K_{5}$ परिज्ञाय; $T_{2}$ तु वै ज्ञेयं (for तु विज्ञाय). — $^{b}$) $K_{4}$ $T_{2}$ $G_{1-3}$ वि- (for न). $K_{5}$ $D_{1.2.3.9}$ S विभो

एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥ ५

नहुष उवाच ।

एवं भवतु सुश्रोणि यथा मामभिभाषसे ।
ज्ञात्वा चागमनं कार्यं सत्यमेतदनुस्मरेः ॥ ६

शल्य उवाच ।

नहुषेण विसृष्टा च निश्चक्राम ततः शुभा ।
बृहस्पतिनिकेतं सा जगाम च तपस्विनी ॥ ७
तस्याः संश्रुत्य च वचो देवाः साग्निपुरोगमाः ।
मन्त्रयामासुरेकाग्राः शक्रार्थं राजसत्तम ॥ ८
देवदेवेन संगम्य विष्णुना प्रभविष्णुना ।
ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ॥ ९
ब्रह्महत्याभिभूतो वै शक्रः सुरगणेश्वरः ।
गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः ।
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ १०
त्वद्वीर्यान्निहते वृत्रे वासवो ब्रह्महत्यया ।
वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश ॥ ११
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ।
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ॥ १२
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ।
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः ॥ १३
स्वकर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः ।
कंचित्कालमिमं देवा मर्षयध्वमतन्द्रिताः ॥ १४
श्रुत्वा विष्णोः शुभां सत्यां तां वाणीममृतोपमाम् ।
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः ।

C. 5. 417
B. 5. 13. 17
K. 5. 13. 17

---

(for प्रभो). — $^{c}$) K (except $K_{2}$) त्वाहम् (for ऽहं त्वाम्). — $^{e}$) $D_{8}$ महेंद्राण्या; $D_{1}$ स चेंद्राण्या.

6 T G om. the ref. — $^{a}$) $D_{1.2.8}$ एवमस्तु महाभागे. — $^{b}$) N (except $D_{1.9}$) $G_{2}$ $M_{1}$ इह (for अभि-). — $^{d}$) $K_{1.4}$ $D_{8.10}$ S ($T_{2}$ after corr.) °स्मर; $K_{5}$ $T_{2}$ (before corr.) °स्मरन्.

7 $K_{2.5}$ B D (except $D_{2.8}$) S (except $T_{2}$) om. the ref. — $^{a}$) $D_{9}$ S (except $T_{1}$ $G_{3-5}$) सा (for च). — $^{c}$) K (except $K_{2}$) B D (except $D_{1.2.8}$) च (for सा). $T_{2}$ बृहस्पतेस्तु भवनं. — $^{d}$) $K_{1.4.5}$ जगामाथ; B D (except $D_{1.2.8}$) सा जगाम; T G (except $G_{3}$) प्रजगाम. $K_{8}$ सुदुःखिता; $B_{3.5}$ D (except $D_{1.8.9}$) यशस्विनी.

8 $^{a}$) M (except $M_{1}$) तु संश्रुत्य (for संश्रुत्य च). $D_{8}$ वचसः; $D_{9}$ सुवचः; $T_{1}$ $G_{1.5}$ वचनं (for च वचो). $K_{8}$ इंद्राण्याश्च प्रतिज्ञाते. — $^{b}$)=5. 12. 28$^{b}$. $K_{1}$ $D_{8}$ सर्षिं°; Dn $D_{2-4.6}$ चाग्निं°. — $^{c}$) $K_{2.3}$ B D (except $D_{2.8.9}$) चिंत° (for मन्त्र°). $D_{8}$ $D_{9}$ $T_{2}$ अव्यग्राः (for एका°).

9 $^{a}$) $K_{1.2}$ $D_{8}$ देवा (for देव-). — $^{c}$) $D_{1}$ तं; S (except $T_{2}$ $G_{4}$) एव (for एनं). — $^{d}$) S सर्वे दिवौकसः (for वाक्य°).

10 $^{a}$) K (except $K_{2}$) $B_{1.3.5}$ D (except $D_{1.2.8.9}$) ब्रह्मवध्या°. $D_{2.8}$ $T_{2}$ असौ (for वै). — $^{b}$) K (except $K_{2}$) $D_{1.2.8.9}$ $G_{2-4}$ सुरगणाधिपः; $T_{2}$ त्रिभुवनेश्वरः. — After $10^{ab}$, $K_{4}$ ins.:

97* क्व गतो नेति जानीमो देवदेव जगत्पते ।;

while $T_{2}$ ins.:

98* अविज्ञातः सुरगणैर्गतो न ज्ञायते प्रभो ।

— $^{d}$) $K_{2}$ $B_{1.8}$ $D_{9}$ $G_{3}$ सर्वतो; $B_{2.4}$ (m as in text) सर्वशो; $D_{1}$ सर्वस्य; $T_{2}$ सर्वं बो (for पूर्वजो). — $^{e}$) $T_{1}$ $G_{1}$ सर्वदेवानां. — $^{f}$) $K_{5}$ विष्णो त्वां; $D_{1}$ विष्णो त्वं; $D_{6}$ $T_{1}$ विष्णुस्त्वं; Cs विष्णुत्वं (as in text). $K_{4}$ $D_{6}$ अपि जग्मि°; $D_{5}$ अभिजग्मि°; $T_{1}$ अपि जज्ञि°; $G_{3}$ उपजज्ञि°.

11 $K_{3}$ om. $11^{ab}$. — $^{a}$) $K_{2}$ B D (except $D_{8.9}$) $G_{4}$ त्वद्वीर्यनिहते. — $^{b}$) $K_{1.4.5}$ ब्रह्मवध्यावृतः प्रभो ($K_{1}$ °भुः). — $^{c}$) K (except $K_{2}$) शक्रः (for वृतः). $K_{2}$ $D_{2.8}$ $G_{1}$ °श्रेष्ठः. — $^{d}$) $G_{1}$ त्वद्य (for तस्य).

12 $^{a}$) $T_{1}$ $G_{1.5}$ तु (for तद्). — $^{c}$) $D_{1}$ तपसा (for मामेव). $D_{1}$ युज्यतां; $G_{4}$ भज° (for यज°). — $^{d}$) $M_{3.4}$ पाल° (for पाव°).

13 $^{d}$) $K_{1.4}$ $D_{9}$ $M_{2}$ °भयं.

14 $^{a}$) $K_{2}$ स्वकर्मणैवं (for °भिश्च). — $^{c}$) $K_{5}$ $Dn_{2}$ $Ds_{2}$ $D_{1.6-9}$ $T_{1}$ $G_{3.5}$ किंचित् (for कं°). $K_{1}$ $D_{8.9}$ $T_{2}$ $G_{3}$ $M_{1.2.5}$ इदं (for इमं). — $^{d}$) $K_{1}$ $D_{8}$ ऋषयश्चाप्यतंद्रिताः. — $K_{3}$ ins. after 14: $K_{2}$, after $15^{ab}$:

99* शल्य उवाच ।
विष्णुर्विसर्जयामास देवान्सर्षिपुरोगमान् ।

15 $^{a}$) $T_{2}$ शुभं; $G_{3}$ तथा (for शुभां). $K_{2}$ $D_{2.8}$ $T_{1}$ $G_{1.5}$ वाणीं; $T_{2}$ वाक्यं (for सत्यां). — $^{b}$) $K_{3.5}$ Dn $D_{3-7.10}$ transp. तां and वाणीं. $K_{2}$ सत्यां ताम्; $T_{2}$ परमम् (for तां वाणीम्). $T_{1}$ $G_{1.5}$ सत्याम् (for वाणीम्). K (except $K_{2}$) Dn $D_{3-5}$ अशरीरिणीं; $G_{2}$ अकुतोभयां. — After $15^{ab}$, $K_{2}$ ins. 99*. — $^{c}$) T G transp. सर्वे and सुरगणाः. — $^{d}$) $B_{1}$ $Dn_{2}$ सुरर्षिभिः; $D_{1}$ $M_{3-5}$ मह°

G. 5. 417
B. 5. 13. 17
K. 5. 13. 17

यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः ॥ १५
तत्राश्वमेधः सुमहान्महेन्द्रस्य महात्मनः ।
ववृते पावनार्थं वै ब्रह्महत्यापहो नृप ॥ १६
विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च ।
पर्वतेषु पृथिव्यां च स्त्रीषु चैव युधिष्ठिर ॥ १७
संविभज्य च भूतेषु विसृज्य च सुरेश्वरः ।
विज्वरः पूतपाप्मा च वासवोऽभवदात्मवान् ॥ १८
अकम्प्यं नहुषं स्थानाद्दृष्ट्वा च बलसूदनः ।
तेजोघ्नं सर्वभूतानां वरदानाच्च दुःसहम् ॥ १९
ततः शचीपतिर्वीरः पुनरेव व्यनश्यत ।
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चचार ह ॥ २०
प्रनष्टे तु ततः शक्रे शची शोकसमन्विता ।
हा शक्रेति तदा देवी विललाप सुदुःखिता ॥ २१
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ।
एकभर्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि ॥ २२
पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे ।
देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः ॥ २३
प्रयता च निशां देवीमुपातिष्ठत तत्र सा ।
पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत् ॥ २४
यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे ।
इत्याहोपश्रुतिं देवी सत्यं सत्येन दृश्यताम् ॥ २५

इति श्रीमहाभारते उद्योगपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

---

(for सह°).

16 $^{a}$) $K_{3}$ ततः; $D_{9}$ तस्य (for तत्र). — $^{c}$) $K_{4.5}$ $T_{2}$ $G_{2.3}$ ववृधे; $G_{4}$ प्रवृत्तः (for ववृते). $B_{2}$ पावनार्थाय. — $^{d}$) K (except $K_{5}$) $D_{3}$ $D_{5.7.9.10}$ ब्रह्मवध्या°.

17 Before 17, $D_{3.4.7}$ ins. शल्य उ°. — $^{a}$) $M_{3-5}$ विभजन् (for °भज्य). $K_{1.2.4}$ $B_{1.2.4}$ ब्रह्मवध्यां. $B_{2}$ $D_{7}$ वै; $G_{3}$ च (for तु). — $^{d}$) $D_{10}$ महिलासु (for स्त्रीषु चैव).

18 $D_{3}$ $D_{10}$ om. $18^{ab}$. — $^{a}$) $D_{9}$ $T_{2}$ स (for सं-). — $^{b}$) $K_{5}$ निःसृत्य; $D_{4}$ विभज्य. — $^{c}$) $K_{2.4}$ B (except $B_{4}$) D (except $D_{3}$) धूत° (for पूत°). — $^{d}$) K (except $K_{2}$) वृत्रहा; $D_{9}$ बलहा; S विमुक्तो (for वासवो). $D_{1}$ आत्मना (for °वान्).

19 $^{a}$) $K_{3}$ अचाल्यं; B Dn $D_{3}$ $D_{2-7.9}$ अकंपत्; $D_{1}$ $M_{2}$ अकल्प्यं; $T_{2}$ आगम्य (for अकम्प्यं). $D_{1}$ तस्मात्; $G_{1.5}$ स्वस्थं (for स्थानात्). $K_{5}$ स्वस्थानस्थं च नहुषं. — $^{b}$) $K_{2}$ B D बलनिषूदनः (for च बल°). — $^{d}$) $B_{2}$ सु- (for च).

20 $^{a}$) $K_{3}$ B D (except $D_{1.2.3.9}$) $T_{2}$ देवः; $T_{1}$ $G_{1.3.5}$ $M_{2}$ भीतः (for वीरः). — $^{b}$) $D_{6}$ विनश्यति; $G_{5}$ न दृश्यत. — $^{d}$) $D_{1}$ $T_{2}$ G (except $G_{5}$) कालकांक्षी. $D_{1}$ $G_{4}$ च भारत (for चचार ह).

21 $^{a}$) $D_{3}$ $D_{1.3.10}$ $G_{3.4}$ प्रणष्टे (see below). $D_{2.3}$ च (for तु). K(except $K_{2}$) पुनः (for ततः). $T_{1}$ $G_{1.5}$ ततः प्रणष्टे देवेशे. — $^{c}$) $D_{3}$ $D_{2}$ ततो (for तदा). $G_{4}$ दीना (for देवी).

22 Cf. 1. 9. $4^{ab}$. — Before 22, M ins. शची. — $^{a}$) $K_{5}$ हुतं चापि (for यदि हुतं). — $^{c}$) $K_{1.4}$ $D_{1.2.3.1[illegible]}$ T G एकभर्तृकता मे ($D_{1}$ च); $B_{4}$ एकपत्नीत्वमेव (for °भर्तृत्वमेव). $Dn_{2}$ $D_{2.3}$ $G_{1.3.5}$ $M_{2}$ अस्ति; $D_{1}$ इति (for अस्तु). — $^{d}$) $D_{2.3}$ वै; M चेन् (for वा).

23 $^{a}$) $D_{1}$ पुण्यं; $T_{1}$ $G_{1.2.5}$ अर्घ्यां. $K_{1}$ चैताम्; $D_{[illegible]}$ चेदम्; $M_{3-5}$ त्विमाम् (for चेमाम्). $K_{1}$ विद्यां; $D_{1}$ दिव्यं. — $^{b}$) $D_{1}$ प्रवृत्तं; $T_{2}$ प्रवृत्ते. $K_{2.5}$ $Ds_{2}$ $D_{2.3}$ उत्तरायणीं ($K_{5}$ °णात्); $D_{1}$ $T_{2}$ चोत्तरा°. — $^{c}$) Some MSS. रात्रीं. — $^{d}$) K (except $K_{2}$) $Dn_{1}$ $D_{3.4.7.8.10}$ सिध्यंतां मे °रथाः.

24 $^{a}$) $K_{2}$ प्रीयतां; $K_{3}$ नियता; $D_{1}$ प्रयाता; $D_{5}$ $T_{[illegible]}$ प्रयतां. $D_{2}$ तां (for च). $K_{1}$ वच्मि तां (for च निशां). $K_{2}$ $G_{4}$ $M_{3.4}$ निशा- — $^{b}$) $K_{1.2}$ उपा($K_{2}$ °प)तिष्ठतु; $D_{[illegible]}$ $G_{3}$ उपतिष्ठति. $K_{1}$ सा मयि; $K_{2}$ मामिति; $T_{1}$ तत्र ह. — $^{c}$) $K_{1.4.5}$ $D_{1.2.10}$ पतिव्रतानां; $K_{2}$ $D_{7.8}$ $G_{3}$ $M_{[illegible]}$ °व्रतत्वात्; $D_{9}$ पातिव्रत्यस्य. — $^{d}$) $D_{9}$ $G_{5}$ उपाकरोत्; $G_{[illegible]}$ अथाशृणोत्. — After 24, $K_{4}$ ins.:

100* सा दृष्ट्वा तां ततो देवीं प्रत्युवाच यशस्विनी ।

25 $K_{3}$ transp. $25^{ab}$ and $25^{cd}$. — $^{a}$) G (except $G_{5}$) मे; M अपि (for असौ). — $^{b}$) $K_{3.4}$ वै सं- (for देशं). $G_{3}$ ह; $G_{4}$ नः (for मे). — $^{c}$) S प्र($G_{3}$ प्री)त्याहोपश्रुतिर् ($G_{2}$ तिं). K $B_{4}$ Dn $D_{2-4.8.9}$ $G_{4}$ देवीं. — $^{d}$) M (except $M_{2}$) सत्यासत्येन (for सत्यं स°). $Dn_{1}$ दृश्यते; $M_{2.5}$ दृश्यता.

Colophon. $K_{1.2.4.5}$ B D $G_{2}$ $M_{2-5}$ all om. sub-parvan name, cite only इंद्रविजय ($G_{2}$ $M_{2-5}$ इंद्र°

## १४

शल्य उवाच ।

अथैनां रूपिणीं साध्वीमुपातिष्ठदुपश्रुतिः ।
तां वयोरूपसंपन्नां दृष्ट्वा देवीमुपस्थिताम् ॥ १
इन्द्राणी संप्रहृष्टा सा संपूज्यैनामपृच्छत ।
इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने ॥ २

उपश्रुतिरुवाच ।

उपश्रुतिरहं देवि तवान्तिकमुपागता ।
दर्शनं चैव संप्राप्ता तव सत्येन तोषिता ॥ ३
पतिव्रतासि युक्ता च यमेन नियमेन च ।
दर्शयिष्यामि ते शक्रं देवं वृत्रनिषूदनम् ।
क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् ॥ ४

शल्य उवाच ।

ततस्तां प्रस्थितां देवीमिन्द्राणी सा समन्वगात् ।
देवारण्यान्यतिक्रम्य पर्वतांश्च बहूंस्ततः ।
हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत् ॥ ५
समुद्रं च समासाद्य बहुयोजनविस्तृतम् ।
आससाद महाद्वीपं नानाद्रुमलतावृतम् ॥ ६
तत्रापश्यत्सरो दिव्यं नानाशकुनिभिर्वृतम् ।
शतयोजनविस्तीर्णं तावदेवायतं शुभम् ॥ ७
तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत ।
षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः ॥ ८
पद्मस्य भित्त्वा नालं च विवेश सहिता तया ।
विसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम् ॥ ९

C. 5. 438
B. 5. 14. 11
K. 5. 14. 11

---

विजयोपाख्यान). — *Adhy. name:* K1.4.5 B1.2.4 D8 पुरोहितयानं; M1.2 ब्रह्महत्याप्रायश्चित्तकरणं (M2 °कथनं). — *Adhy. no.* (figures, words or both): K1 Ds1 D5.7.10 S 13; D2.6 12. — *S'loka no.:* K5 28; Dn 27.

### 14

1 [a]) D10 M2 एतां (for एनां). K3-5 D5.6.8.10 T1 G1.5 M (except M1) रूपिणी. G4 M देवीम् (for साध्वीम्). — [c]) K2 ततस्तां रूप°.

2 [a]) G2 सुश्रोणी (for इन्द्राणी). K (except K4) B2.3.5 D (except D2.3.9) सं(K5 D1 सा)प्रहृष्टात्मा (for °हृष्टा सा). — [b]) K2 T1 G (except G3) इदम् (for एनाम्). B1.3.5 D (except D1.2.3-10) अथाब्रवीत्; T1 G उवाच तां (G4.5 *sup. lin.* ह). T2 संपूज्य समुवाच तां. — [d]) K2 तत् (for का), and वरांगने (for वरान°). — After 2, T2 ins.:

101* एवमुक्ता तथेन्द्राण्या देवी वाक्यमथाब्रवीत् ।

3 K3 G3.4 om. the ref. — [a]) D5.9 देवी; M (except M1) भद्रे (for देवि). — [c]) D2.3 देवि (for चैव). G2 संप्राप्य. — [d]) K (except K2) transp. तव and सत्येन. K2 भामिनि; B D (except D1.2.3.10) भाविनि (for तोषिता). T G भवत्याः सत्यभाषितात्.

4 [a]) K2 B (except B2) D (except D1.2.3-10) T2 G3-5 च (for असि). D1.2.3 युक्तासि (for युक्ता च). — [b]) K1.5 D3 S शमेन; K2 तपसा; B2-4 दमेन; D2 समेन (for यमेन). B3 विनयेन; D2 विषमेन; G5 च दमेन (for निय°). — [d]) D1.2.3.9 देवि (for देवं). K1.5 शत्रुनिषू°; G3 यत्रारिसूदनं; some MSS. °निसूदनं. — [e]) T2 आगच्छ (for अन्वेहि). — [f]) D1 प्रेक्षसे (for द्रक्ष्यसे).

5 All MSS. except G5 om. the ref. — [a]) K5 Dn2 D5.7.10 Cn प्रहितां (for प्रस्थितां). — [b]) K2.3 पृष्ठमन्वगात्; B1-3 पृष्ठतोन्वया(B3 °गा)त् (for सा सम°). — [c]) D9 T1 G1.4.5 देवारण्यम्. — [d]) G1.4 ततः (for बहून्). K2 (*sup. lin.* as in text).5 Ds D2.3-10 तथा (for ततः). — [f]) B2.4 आसदत्; T G आगता (for आगमत्).

6 [a]) T1 G मुंजवंतं (G3 उन्नतं तं) (for समुद्रं च). — [b]) K D3.10 °विस्तरं. — [c]) G4 आजगाम (for आस°). — [d]) D9 T2 G1-3 °लताकुलं; T1 G4.5 °लतायुतं.

7 [b]) D2.3 °शकुनिसेवितं; T1 G1 °शकुनिनादितं; T2 °शकुनिसंवृतं; G5 °द्रुमलताकुलं.

8 [b]) K3 सुरभीणि समंततः. — [c]) T1 अनु° (for उप°). — [d]) K प्रोत्फुल्लानि (K2 पुष्कलानि). B1 च सर्वतः (for सह°). — After 8, K (except K5) D (except Ds D1.2.10; D2 marg. *sec. m.*) ins.:

102* सरसस्तस्य मध्ये तु पद्मिनी महती शुभा ।
गौरेणोन्नतनालेन पद्मेन महता वृता ।
[ (L. 2) K1-3 D3 °णोद्गतनालेन. ]

9 [a]) M transp. पद्मस्य and भित्त्वा. D9 तु; S सा

तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुम् ।
सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा ॥ १०
इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः ।
स्तूयमानस्ततो देवः शचीमाह पुरंदरः ॥ ११
किमर्थमसि संप्राप्ता विज्ञातश्च कथं त्वहम् ।
ततः सा कथयामास नहुषस्य विचेष्टितम् ॥ १२
इन्द्रत्वं त्रिषु लोकेषु प्राप्य वीर्यमदान्वितः ।
दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो ।
उपतिष्ठ मामिति क्रूरः कालं च कृतवान्मम ॥ १३
यदि न त्रास्यसि विभो करिष्यति स मां वशे ।
एतेन चाहं संतप्ता प्राप्ता शक्र तवान्तिकम् ।
जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् ॥ १४
प्रकाशयस्व चात्मानं दैत्यदानवसूदन ।
तेजः समाप्नुहि विभो देवराज्यं प्रशाधि च ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## १५

शल्य उवाच ।
एवमुक्तः स भगवाञ्शच्या पुनरथाब्रवीत् ।
विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ॥ १
विवर्धितश्च ऋषिभिर्हव्यैः कव्यैश्च भामिनि ।

---

(for च). — $^{e}$) $K_{2}$ $Ds_{1}$ $D_{5}$ $T_{1}$ $G_{1.2.5}$ $M_{1.3}$ बिसतंतुं प्रविष्टं; Cs as in text. $B_{2.4}$ S तु ($T_{2}$ $M_{2}$ तं) (for च). $K_{4}$ विश्रांतमुपतिष्ठंतं. — $^{d}$) $K_{4}$ तंसा (for तत्र). M शचीपतिं (for शतक्रतुम्).

10 $^{a}$) $K_{3}$ transp. दृष्ट्वा and च. $B_{1.3.5}$ अति-; $B_{2}$ $D_{2}$ तु; $D_{1}$ T $G_{1.2.5}$ M अथ (for च). $D_{9}$ सूक्ष्मरूपेण; $G_{3}$ चैव रूपेण; $G_{4}$ अथ सुरश्रेष्ठं (for च सुसू°). — $^{b}$) $K_{4.5}$ वेषेण; $G_{3.4}$ सूक्ष्मेण (for रूपेण).

11 Before 11, M (except $M_{1}$) ins. शल्यः. — $^{b}$) $D_{1}$ विशुद्धैः; Cs विश्रुतैः (as in text). — $^{c}$) $K_{2}$ $D_{9}$ स्मय° (for स्तूय°). $T_{1}$ $G_{1.5}$ तथा; $G_{4}$ $M_{1.2}$ तदा (for ततो). $T_{1}$ $G_{1.5}$ स्तोत्रैः (for देवः).

12 $^{a}$) $K_{1.4.5}$ $D_{2.8-10}$ $T_{2}$ $G_{5}$ इह; $D_{1}$ त्वसि; $G_{3}$ अपि (for असि). — $^{b}$) $D_{10}$ $G_{5}$ नु (for तु). — After $12^{ab}$, K (except $K_{5}$) $D_{8}$ ins.:

103* केन चास्मि तवाख्यात इहस्थो वरवर्णिनि ।

13 $^{b}$) $T_{1}$ G प्राप्तो (for प्राप्य). $K_{3-5}$ B (except $B_{1}$) D (except $D_{1.2.8.9}$) °समन्वितः (for °मदान्वितः). — $^{c}$) $K_{3}$ $B_{1}$ $D_{2}$ तु; $T_{2}$ स (for च). $M_{3-5}$ दुरात्मा स (for च दुष्टात्मा). — $^{e}$) Hypermetric! $K_{4}$ $T_{1}$ उपातिष्ठ; $T_{2}$ उपैहि; $G_{3}$ आतिष्ठ (for उप°). $K_{1}$ $B_{2-5}$ $Dn_{2}$ Ds $D_{3-7.10}$ $T_{1}$ $G_{1}$m.$_{4}$ इति स; $K_{3.4}$ $Dn_{1}$ $D_{1.8.9}$ इति मां; $B_{1}$ $D_{2}$ इति मा; $T_{2}$ मामिह (for मामिति). $K_{5}$ $G_{5}$ उपतिष्ठत ($G_{5}$ °ति) मां क्रूरः. — $^{f}$) $T_{1}$ $G_{1.3.5}$ M मयि; $G_{2}$ प्रभो (for मम).

14 $^{a}$) K (except $K_{2}$) आयास्यसि (for त्रास्यसि). — $^{b}$) $T_{2}$ $G_{2.3}$ M मा (for मां). — $^{c}$) $B_{1.3}$ M संत्रस्ता; $B_{5}$ Dn Ds $D_{3-10}$ $G_{4}$ °प्राप्ता (for °तप्ता). $K_{1}$ एतेन कारणेनात्र; $K_{3.4}$ $D_{2}$ एतेनाहं संप्रतप्ता ($K_{4}$ °प्य); $K_{5}$ एतेन चाहं संप्रतप्ता (hypermetric). — $^{d}$) $B_{5}$ $Dn_{2}$ द्रुतं; $Dn_{1}$ $D_{3-8.10}$ नूनं; $D_{9}$ तप्ता (for प्राप्ता). $G_{4}$ संतप्ताहं (for प्राप्ता शक्र). — T $G_{1.3-5}$ read $14^{ef}$ after 15, followed by 104*. — $^{f}$) $K_{3.5}$ तं दुष्टं (for नहुषं). $D_{1}$ क्रूरं (for पाप°).

15 $^{a}$) $B_{1}$ $D_{2}$ $M_{1.3.4}$ प्रकाशय स्व($B_{1}$ त्व)मात्मानं; $B_{2-5}$ Dn Ds $D_{3-8.10}$ प्रकाशयात्मनात्मानं. — $^{b}$) $G_{1}$ दैवेन हतचेतनः. — $^{c}$) $K_{2}$ स्वमा° (for समा°). $D_{1}$ प्रभो (for विभो). — After 15, T $G_{1.3-5}$ read $14^{ef}$. T $G_{1.3-5}$ ins. after $14^{ef}$ (transposed): $G_{2}$ M, after 15:

104* यथैव च महाराज त्वया वृत्रो निषूदितः ।
[ $T_{2}$ M (except $M_{4}$) स; $G_{3}$ हि (for च). ]

Colophon. $K_{1.4}$ B D (except $Dn_{2}$ $D_{2}$) $T_{1}$ $G_{1}$ $M_{3-5}$ all om. sub-parvan name, cite only इंद्रविजय ($M_{3-5}$ इंद्रविजयोपाख्यान). — *Adhy. name:* $K_{1.4}$ $B_{1.2.4}$ पुरोहितयानं; $D_{2}$ इंद्रप्रदर्शनं; $G_{1}$ शच्युपश्रुतिसमागमे इन्द्रोपलब्धिः; $M_{1}$ शच्युपश्रुतिसमागमः. — *Adhy. no.* (figures, words or both): $K_{1}$ $Ds_{1}$ $D_{5.7.10}$ S 14; $D_{2.6}$ 13. — *S'loka no.:* $K_{5}$ 17; Dn 18.

**15**

1 $^{a}$) K (except $K_{5}$) $D_{8}$ T G $M_{2}$ तु ($T_{1}$ $G_{1}$ च) (for स). — $^{b}$) $T_{2}$ शचीं (for शच्या). D (except $D_{1-4.9}$) तां पुनर् (for पुनरथ).

# २३

वैशंपायन उवाच ।
राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य संजयः ।
उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः ॥ १
स तु राजानमासाद्य धर्मात्मानं युधिष्ठिरम् ।
प्रणिपत्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत ॥ २
गावल्गणिः संजयः सूतसूनु-
रजातशत्रुमवदत्प्रतीतः ।
दिष्ट्या राजंस्त्वामरोगं प्रपश्ये
सहायवन्तं च महेन्द्रकल्पम् ॥ ३
अनामयं पृच्छति त्वाम्बिकेयो
वृद्धो राजा धृतराष्ट्रो मनीषी ।
कच्चिद्भीमः कुशली पाण्डवाग्र्यो
धनंजयस्तौ च माद्रीतनूजौ ॥ ४
कच्चित्कृष्णा द्रौपदी राजपुत्री
सत्यव्रता वीरपत्नी सपुत्रा ।
मनस्विनी यत्र च वाञ्छसि त्व-
मिष्टान्कामान्भारत स्वस्तिकामः ॥ ५
युधिष्ठिर उवाच ।
गावल्गणे संजय स्वागतं ते
प्रीतात्माहं त्वाभिवदामि सूत ।
अनामयं प्रतिजाने तवाहं
सहानुजैः कुशली चास्मि विद्वन् ॥ ६
चिरादिदं कुशलं भारतस्य
श्रुत्वा राज्ञः कुरुवृद्धस्य सूत ।
मन्ये साक्षाद्दृष्टमहं नरेन्द्रं
दृष्ट्वैव त्वां संजय प्रीतियोगात् ॥ ७
पितामहो नः स्थविरो मनस्वी
महाप्राज्ञः सर्वधर्मोपपन्नः ।
स कौरव्यः कुशली तात भीष्मो
यथापूर्वं वृत्तिरप्यस्य कच्चित् ॥ ८
कच्चिद्राजा धृतराष्ट्रः सपुत्रो
वैचित्रवीर्यः कुशली महात्मा ।

C. 5. 693
B. 5. 23. 9
K. 5. 23. 9

---

**23**

1 $^{c}$) $D_{1}$ उपप्लव्यां; S °प्लाव्यं. S (except $G_{2}$) शीघ्रं (for द्रष्टुं). — $^{d}$) S (except $G_{2}$) द्रष्टुं पार्थान् ($M_{2}$ पश्चान्) महौजसः.

2 $^{b}$) $K_{2.3}$ B Dn Ds $D_{3-8.10}$ कुंतीपुत्रं; $D_{1}$ धर्मराजं (for धर्मात्मानं). — $^{c}$) $K_{2.4}$ B D (except $D_{9}$) अभिवाद्य (for प्रणिपत्य). $K_{2}$ सर्वं; $K_{3}$ सर्वे; $K_{4}$ पूर्वान् (for पूर्वं).

3 $^{a}$) $G_{3-5}$ $M_{3}$ गावद्गणिः. $K_{3-5}$ °पुत्रो (for °सूनुर्). — $^{b}$) K (except $K_{2}$) अभ्यवदत्; S (except $G_{2}$) तमवोचत् (for अवदत्). $D_{10}$ सुप्रतीतः; $T_{1}$ $G_{1.2.5}$ प्रतीतं; $G_{4}$ प्रीतः; $M_{2}$ प्रकीर्तितं; Ca.d प्रतीतः (as in text). — After $3^{ab}$, M (except $M_{1}$) ins. संजयः. — $^{d}$) $D_{1}$ °तुल्यं (for °कल्पम्).

4 $^{a}$) $K_{5}$ आंबिकेयो; $D_{8.9}$ त्वामांबिकेयो (for त्वाम्बिकेयो). Ca cites त्वा (as in text). — $^{b}$) $B_{1}$ मनस्वी (for मनीषी). — $^{c}$) $K_{1}$ भारताग्र्यो (for पांडवा°). S (except $G_{2}$) कच्चित् कुशली ($T_{1}$ $G_{1.5}$ सुखी) पांडवाग्र्योऽप्रधन्वा. — $^{d}$) K (except $K_{2}$) $D_{8}$ धनंजयो माद्रवतीसुतौ च; S (except $G_{2}$) °यो भीमसेनो यमौ च.

5 $^{b}$) $K_{1}$ $T_{1}$ $G_{1.5}$ सु° (for स°). — $^{c}$) S (except $G_{2.4}$) मनस्विनी वांछति (T $G_{1}$ °सि) यत्र च त्वं. — $^{d}$) $M_{2}$ तासुत (for भारत).

6 $^{a}$) Some S MSS. गावद्गणे. — $^{b}$) K $D_{1.2}$ $G_{2}$ प्रीतात्मा त्वाम्; B Dn Ds $D_{3-10}$ प्री($B_{4}$ प्रि)यामहे; $T_{1}$ $G_{3.5}$ प्रीता($G_{5}$ °त्या)त्मानं (for प्रीतात्माहं). $K_{3.5}$ om. त्वा. $K_{1.2.4}$ $D_{1.2}$ $T_{1}$ $G_{1.4.5}$ अभि($T_{1}$ $G_{1.4}$ त्वाभि-; $G_{5}$ चाभि)नंदामि सूत; B Dn Ds $D_{3-10}$ ते ($D_{9}$ त्वद्-) वयं दर्शनेन; $G_{2}$ त्वाभिवक्ष्यामि सूत. — $^{d}$) $D_{8}$ °त्मजैः; $D_{10}$ °त्मजः; $T_{1}$ G (except $G_{2}$) °नुजः (for °नुजैः). K (except $K_{2}$) सहानुजैः संप्रति साधुवृत्तः ($K_{3}$ °त्त; $K_{5}$ °त्तं).

7 $^{a}$) $D_{8}$ दर्शनं (for कुशलं). — $^{d}$) $K_{2}$ च (for एव). $G_{4}$ transp. दृष्ट्वैव and त्वां. M त्वा (for त्वां).

8 $^{a}$) $D_{2}$ $G_{2}$ यशस्वी; $G_{5}$ मनस्विनां (for मनस्वी). — $^{b}$) $K_{4.5}$ महाप्रज्ञः. — $^{c}$) $K_{2}$ $D_{1.2.9}$ T $G_{2}$ स कौरवः. — $^{d}$) $K_{1}$ अप्यस्ति; $K_{2}$ अस्यास्ति; $K_{3}$ B (except $B_{1}$) Dn Ds $D_{3-8.10}$ अस्त्यस्य; $D_{1}$ अथास्य (for अप्यस्य).

9 $^{b}$) $D_{9}$ S (except $G_{2}$) सूतपुत्र (for महात्मा).

C. 5. 698
B. 5. 23. 9
K. 5. 23. 9

महाराजो बाह्लिकः प्रातिपेयः
कच्चिद्विद्वान्कुशली सूतपुत्र ॥ ९
स सोमदत्तः कुशली तात कच्चि-
द्भूरिश्रवाः सत्यसंधः शलश्च ।
द्रोणः सपुत्रश्च कृपश्च विप्रो
महेष्वासाः कच्चिदेतेऽप्यरोगाः ॥ १०
महाप्राज्ञाः सर्वशास्त्रावदाता
धनुर्भृतां मुख्यतमाः पृथिव्याम् ।
कच्चिन्मानं तात लभन्त एते
धनुर्भृतः कच्चिदेतेऽप्यरोगाः ॥ ११
सर्वे कुरुभ्यः स्पृहयन्ति संजय
धनुर्धरा ये पृथिव्यां युवानः ।
येषां राष्ट्रे निवसति दर्शनीयो
महेष्वासः शीलवान्द्रोणपुत्रः ॥ १२
वैश्यापुत्रः कुशली तात कच्चि-
न्महाप्राज्ञो राजपुत्रो युयुत्सुः ।
कर्णोऽमात्यः कुशली तात कच्चि-
त्सुयोधनो यस्य मन्दो विधेयः ॥ १३
स्त्रियो वृद्धा भारतानां जनन्यो
महानस्यो दासभार्याश्च सूत ।
वध्वः पुत्रा भागिनेया भगिन्यो
दौहित्रा वा कच्चिदप्यव्यलीकाः ॥ १४
कच्चिद्राजा ब्राह्मणानां यथाव-
त्प्रवर्तते पूर्ववत्तात वृत्तिम् ।
कच्चिद्दायान्मामकान्धार्तराष्ट्रो
द्विजातीनां संजय नोपहन्ति ॥ १५
कच्चिद्राजा धृतराष्ट्रः सपुत्र
उपेक्षते ब्राह्मणातिक्रमान्वै ।

— $^c$) K (except $K_4$) बाह्लिकः प्रातिपीयः; S (except $G_2$) बाह्लिकानां महात्मा. Ca प्रातिपेयः (as in text). — $^d$) $K_2$ $D_2$ वृद्धः (for विद्वान्). S (except $G_2$) प्रातिवीर्यः ($T_1$ $G_5$ $M_{2.5}$ °पीयः; $T_2$ प्रतीयमानः) कुशली तात कच्चित्; cf. $10^a$.

10 M (? hapl.) om. $10^a$. — $^a$) $G_{2.3}$ सौमदत्तिः (for सोम°). $K_1$ चापि विद्वन् (for तात कच्चिद्). — $^b$) $T_2$ $G_1$ $M_{1.2}$ सोमदत्तः; $G_{3-5}$ $M_{3-5}$ सो($G_{3-5}$ सौ)मदत्तिः (for सत्यसंधः). M च शल्यो (for शलश्च). — $^c$) K (except $K_2$) सकृपः (for च कृपः). $G_5$ महारथो भुवि (for कृपश्च विप्रो). K (except $K_{1.2}$) अथ विप्रो; $D_9$ च वीरो (for च विप्रो). — After $10^c$, $G_5$ ins.:

129* शारद्वतः कुशली तात विप्रः ।

— $^d$) $K_1$ महेष्वासौ. $D_{10}$ अन्ये (for एते). $K_{1.5}$ हि (for अपि). — After 10, B D read $12^{ab}$ ($D_{1.2}$ marg. $_5$ marg. *repeating* it in its proper place).

11 $D_1$ om. $11^{ab}$; $D_9$ om. 11. — $^a$) $K_3$ $B_1$ Ds $D_{6.8.10}$ $T_1$ $G_{3-5}$ $M_5$ महाप्रज्ञाः. Ds $D_5$ °शास्त्रेवदाता; $D_8$ °शास्त्रे च दांता; Ca °शास्त्रावदानाः; Cd as in text. — $^c$) Ds कच्चिद्दानं. K (except $K_2$) $D_2$ सर्वे लभंते (for लभन्त एते). Cd cites दानं, Cs कच्चिन्मानं लभन्ते (as in text). — $^d$) $G_2$ सर्वे एते (for कच्चिदेते). K (except $K_2$) $D_2$ आचार्यमुख्या भुवि विश्रुतास्ते ($D_2$ °ता ये).

12 B D read $12^{ab}$ after 10 ($D_{1.2}$ marg. $_5$ marg. *repeat* it here). — $^b$) $D_2$m $G_4$ धनुर्भृतो ($G_4$ °तां) (for °धरा). S (except $T_2$ $G_{2.3}$) च मह्यां (for पृथिव्यां). $K_3$ transp. पृथिव्यां and युवानः. B Dn Ds $D_{3-8}$ प्रधानाः (for युवानः). — $^c$) $D_2$ $G_4$ तेषां; Cs येषां (as in text). $K_2$ $D_1$ $G_2$ न्यवसद्; Cs निवसति (as in text). — $^d$) $D_9$ कुशली (for शीलवान्). $D_1$ °सूनुः; G °पुत्रः (as in text).

13 $^a$) $D_{10}$ G (except $G_1$) $M_4$ वैश्यापुत्रः. — Ds (hapl.) om. $13^{bc}$. — $^b$) $Dn_2$ $Ds_1$ $D_{3.4}$ (by corr.) $_{6.8}$ महाप्रज्ञो. — $^c$) $K_5$ $D_9$ $G_2$ मान्यः; T $G_{1.3-5}$ M (except $M_5$) मानी (for ऽमात्यः).

14 $^a$) $D_2$ च या (for वृद्धा). $K_{1.4.5}$ $D_{10}$ च नार्यो (for जनन्यो). — $^b$) $D_2$ महानसे; $T_1$ $G_{1.5}$ महादास्यो; $G_4$ मानाढ्या वै; $M_{1.2.4}$ Ca.d माहानस्यो; Cs महानस्यो (as in text). $M_2$ राजभार्याश्च. — $^c$) Ds वध्वश्च (for वध्वः). $D_{10}$ सपुत्रा; $G_4$ $M_5$ पुत्रो; $M_{1.3.4}$ पुत्र्यो (for पुत्रा). $G_{2.4}$ M (except $M_2$) भागिनेयो. — $^d$) G दौहित्रेयाः; M (except $M_2$) °त्र्यो वा (for °त्रा वा). K (except $K_3$) M अल्पव्यलीकाः; $B_{2.3}$ एते व्य°; Ds एतेप्यरोगाः (for अप्यव्य°). Cd.s अव्य° (as in text).

15 $^b$) $K_1$ पूर्ववच्चानुवृत्तिं; $K_{4.5}$ $D_2$ °वृत्तानुवृत्तिं; Ds °वन्मानवृ°. Cd cites वृत्तिं (as in text). — $^d$) D पार्थिवो (for संजय). $D_1$ नापहंति.

16 $^a$) S (except $G_2$ $M_2$) तातो (for राजा). — $^b$) S (except $G_2$) समीक्षते (for उपे°). $T_1$ $G_1$(m as in

कच्चिन्न हेतोरिव वर्त्मभूत
उपेक्षते तेषु स न्यूनवृत्तिम् ॥ १६
एतज्ज्योतिरुत्तमं जीवलोके
शुक्लं प्रजानां विहितं विधात्रा ।
ते चेल्लोभं न नियच्छन्ति मन्दाः
कृत्स्नो नाशो भविता कौरवाणाम् ॥ १७
कच्चिद्राजा धृतराष्ट्रः सपुत्रो
बुभूषते वृत्तिममात्यवर्गे ।
कच्चिन्न भेदेन जिजीविषन्ति
सुहृद्रूपा दुर्हृदश्चैकमित्राः ॥ १८

कच्चिन्न पापं कथयन्ति तात
ते पाण्डवानां कुरवः सर्व एव ।
कच्चिद्दृष्ट्वा दस्युसंघान्समेता-
न्स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ १९
मौर्वीभुजाग्रप्रहितान्स्म तात
दोधूयमानेन धनुर्धरेण ।
गाण्डीवमुक्तान्स्तनयित्नुघोषा-
नजिह्मगान्कच्चिदनुस्मरन्ति ॥ २०
न ह्यपश्यं कंचिदहं पृथिव्यां
श्रुतं समं वाधिकमर्जुनेन ।

C. 5. 706
B. 5. 23. 22
K. 5. 23. 22

---

text). 4 ब्राह्मणानव्यलीकं; T2 M ब्राह्मणानां व्यलीकं; G5 विप्रवर्यानलीकं. — c) K2.3 D2 कच्चिच्च हेतोरिह (K3 °व). D1.2 G4 धर्मभूतं; T G1.3.5 सव्यलीकं; M वर्त्मभूतं (M2.5 °तां) (for वर्त्मभूतः). B Dn Ds D3-8 स्वर्गस्य कच्चिन्न (B1 Dn Ds D3.4 om. न) तथा वर्त्मभूतां; D10 सुवर्गलोकस्य च वर्त्मभूतं. Ca cites हेतोर्वर्त्मभूतां, Cd.s हेतोर्वर्त्मभूतः. — d) B1 D (except D1.6.9) अपेक्षते. K2.3 न न्यून°; K5 सदानु°; B D सदैव वृत्तिं (D1 राज्यं मदीयं; D2.9 सत्वानु°); T1 स द्यूत°; T2 G3.5 च न्यून° (for स न्यूनवृत्तिम्). Ca.d cite न्यूनां वृत्तिं.

17 a) K2.3 B D (except D1.2.9.10) T1 M1 ज्योतिश्चोत्तमं. — b) Ds1 D7.9 G3 शुक्रं; Ca.d.s शुक्लं (as in text). D1.2 S प्रजातं (for प्रजानां). — c) K4 G3-5 ते वै; D2 तच्च; T1 G1 तान्वै; T2 तं वै (for ते चेल्). K1.2.4.5 Ca.d दंभं; K3 B D दोषं (D1.2 इदं; D9 दंभान्); T G लोभा(G3.4 °का)न् (for लोभं). D1 दंभात् (for मन्दाः). — d) D5 S (except G2) वै कुरूणां (for कौरवाणाम्).

18 a) M1 धृतराष्ट्रपुत्रो (for °ष्ट्रः सपुत्रो). — c) D8 om. न. G3 भेदेषु; Cs भेदेन (as in text). — d) K2 प्रहृष्टरूपाः; D1 सुहृद्रूपान्; Ca.d सुहृद्रूपाः (as in text). K2.3.5 Ds2 D1.3.9 सुहृदः (for दुर्हृदः). K D7.8.10 चाप्यमात्याः (K2 चैव सूत); B Ds D5 चैकमत्यात्; Dn D3.4.6.9 T2 चैव (D6 T2 °क-) मान्याः (Dn2 च मान्याः); D1.2 G2 अस्याप्यमात्याः; G4 चाप्यमित्राः; G5 चैव मित्राः (for चैकमित्राः).

19 T2 G3.4 M transp. $19^{ab}$ and $19^{cd}$. — a) K1 D9 Ca.d नु पापं; K3 उपायान्; K4 न पापात्; K5 न पापाः; S (except G2) तु पापं (for न पापं). K2 पापाः; G2 सूत (for तात). — b) K1 D1.9 S (except G2) न (for ते). — B D (except D9; D2 [marg.] om. lines 1-2; D4 marg.) T2 G3.4 M (all eight S MSS. om. lines 3-4) ins. after $19^{ab}$: T1 G5 (both om. lines 3-4), after 19:

130* द्रोणः सपुत्रश्च कृपश्च वीरो
नास्मासु पापानि वदन्ति कच्चित् ।
कच्चिद्राज्यं धृतराष्ट्रं सपुत्रं
समेत्याहुः कुरवः सर्व एव ।

[ (L. 1) M विप्रः (for वीरो). — (L. 2) T G3-5 M पितामहो विदुरो बाह्लिकश्च. — (L. 3) B1.2.4 राज्ये; Ds D10 गुह्यं; D1.2 ग्राह्यं (for राज्यं). D1 °राष्ट्रस्य पुत्रं. ]
— c) K1.4.5 D10 अनेकान् (for समेतान्).

20 a) K1 Dn1 D3.8 मौर्वीं भुजाग्रप्रहितां (D8 °तान्; D3 °ग्रात्सहितां); S मौर्वीं भुजाग्रे (G3 °भ्यां) प्रहितां. K3.5 तु तात; S स्मरंतः (T2 G1.3 स्मरंति) (for स्म तात). — b) B4 Ds D4.8.10 Cs °गुणेन (for °धरेण). T2 दोधूयमानस्य धनुर्धरस्य; G5 दोर्मूलदंडस्य धनुर्धरस्य. — c) B4 Dn D1-4.9 S (except T2) °नुन्नान् (for °मुक्तान्). — After 20, S (except G2) ins.:

131* न तं दृष्ट्वा कच्चिदत्र प्रतीपं
गन्ता गृहान्जातु जगाम रङ्गात् ।

[ (L. 1) T1 G (except G2) अस्ति (for अत्र). — (L. 2) G (except G2.3) गतो; M1 (*inf. lin.*) गत्वा (for गन्ता). T1 G (except G2) गृहं. ]

21 a) K2 B D (except D1.9) G3 च; T1 G1.4.5 अस्य; T2 अन्यम् (for हि). K (except K2) Ds D1.9 G3.4 कच्चिद्; G2 क्वचिद् (for कंचिद्). — b) N (except K1.4.5 D1) योधं; T2 शूरं; G2 ध्रुवं (for श्रुतं). K2.3

C. 5. 706
B. 5. 23. 22
K. 5. 23. 22

यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः
सुवाससः संमतो हस्तवापः ॥ २१
गदापाणिर्भीमसेनस्तरस्वी
प्रवेपयञ्शत्रुसंघाननीके ।
नागः प्रभिन्न इव नड्वलासु
चङ्क्रम्यते कच्चिदेनं स्मरन्ति ॥ २२
माद्रीपुत्रः सहदेवः कलिङ्गा-
न्समागतानजयद्दन्तकूरे ।
वामेनास्यन्दक्षिणेनैव यो वै
महाबलं कच्चिदेनं स्मरन्ति ॥ २३
उद्यन्नयं नकुलः प्रेषितो वै
गावल्गणे संजय पश्यतस्ते ।
दिशं प्रतीचीं वशमानयन्मे
माद्रीसुतं कच्चिदेनं स्मरन्ति ॥ २४
अभ्याभवो द्वैतवने य आसी-
दुर्मन्त्रिते घोषयात्रागतानाम् ।
यत्र मन्दाञ्शत्रुवशं प्रयाता-
नमोचयद्भीमसेनो जयश्च ॥ २५
अहं पश्चादर्जुनमभ्यरक्षं
माद्रीपुत्रौ मीमसेनश्च चक्रे ।
गाण्डीवभृच्छत्रुसंघानुदस्य
स्वस्त्यागमत्कच्चिदेनं स्मरन्ति ॥ २६
न कर्मणा साधुनैकेन नूनं
कर्तुं शक्यं भवतीह संजय ।
सर्वात्मना परिजेतुं वयं चे-
न्न शक्नुमो धृतराष्ट्रस्य पुत्रम् ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

---

$D_{5.6.8}$ $G_2$ च (for वा). $K_2$ वार्जुनेन; $D_{1.2}$ फा($D_2$ फ)ल्गुनेन; $D_{5-8}$ चार्जुनेन; T G (except $G_{2.3}$) अर्जुनस्य (for अर्जुनेन). — $^c$) $D_5$ $D_8$ यस्यैष षष्टिर्. $D_7$ त्रिशिखास्; $T_1$ $G_{1.3.5}$ M निहितास् (for निशितास्). K (except $K_3$) सुधाराः; $D_{10}$ तिग्मधाराः (for तीक्ष्णधाराः). — $^d$) S संम($T_1$ °ह)ता (for संमतो). $B_2$ $G_{2-4}$ $M_{1.3-5}$ हस्तवापाः; $T_2$ °चापाः; $G_5$ हस्तिवाहाः; all comm. as in text.

22 $^b$) $T_1$ $G_{1.3-5}$ $M_{1.3-5}$ प्राद्रावयञ्; $T_2$ प्रधावयच् (for प्रवेपयञ्). $K_{3.4}$ $B_2$ अनेकान्; $D_1$ समीपे; $D_2$ $T_1$ G M समीके; $T_2$ समाजौ (for अनीके). — $^c$) $K_{3.5}$ B D (except $D_1$) T $G_1$ Ca.s नड्व($D_9$ तद्व)लेषु; $G_{3.5}$ षष्टिहायनः; $M_5$ (*inf. lin.*) शड्वलासु; Cd नड्वलासु (as in text). — $^d$) $G_5$ चाक्रम्यते; Ca.d चङ्क्र° (as in text). $D_2$ अनु-; Ca.d एनं (as in text).

23 $T_2$ transp. 23 and 24. $D_1$ *repeats* 23 (with v. l.) after 24. — $^a$) $D_1$ (second time) °सुतः (for °पुत्रः). — $^b$) $K_3$ युद्धकाले; $K_4$ अवकूरे; $K_5$ क्षंतक्कूरे (sic); $Dn_1$ $D_{2-4.7}$ अब्धिकूले; $D_1$ (first time) यत्र रेवा and (second time) देवरूपः; $D_5$ दंतवक्रं; $D_9$ अंतकूले; T $G_{1.2}$ M दंतवक्रे ($M_2$ °पते); $G_{3.4}$ दंतवक्रे; $G_5$ दंतवक्रं; Ca.n दन्तकूरे (as in text). — $^c$) $B_1$ $D_{2.5}$ T $G_{1.5}$ योधैः ($G_1$ also यो वै as in text); $G_3$ युद्धे; $G_4$ M यो($M_{3.4}$ यौ)धान्. — $^d$) $G_3$ $D_2$ अनु- (for एनं).

24 $K_2$ $G_2$ om. 24. $K_{1.3.4.5}$ $D_2$ read 24 after 26. $T_2$ transp. 23 and 24. — $^a$) B D (except $D_{1.2.9}$) पुरा जेतुं (for उद्यन्नयं). $D_5$ प्रोषितो. $K_{1.3}$ यो; $K_4$ यद्; $K_5$ B D अयं ($D_{1.2}$ अभूद्); M (except M) मे (for वै). — $^b$) B D (except $D_{1.2.9}$) शिबींस्त्रिगर्तान्; a few S MSS. गावद्गणे (for गावल्गणे). — $^c$) D आनयेद्यो (for °यन्मे). — $^d$) S ($G_2$ om.) माद्रीपुत्रं; $K_1$ एवं; $D_2$ अनु- (for एनं). — After 24, $D_1$ *repeats* 23 (with v. l., cf. v. l. 23).

25 $^a$) $K_2$m $Dn_2$ $D_{1-4}$ अत्याहवो; B $Dn_1$ $D_5$ $D_{6-10}$ पराभवो; S अभ्यागमो ($T_2$ अभ्यागते and पराभवो); Cd अभ्याभवो (as in text). K (except $K_3$) $D_2$ G यदासीद् (for य आसीद्). — $^b$) $K_4$ दुर्मंत्रितैर्; $D_1$ °त्रत्वे; $D_3$ °त्रितं; $G_4$ °त्रितो (for °त्रिते). $K_4$ $Dn_1$ °यात्रां गतानां; $G_2$ °यात्रांगसंधौ. — $^c$) $D_2$ अनयात् (for मन्दान्). $B_4$ S प्रपन्नान् (for प्रयातान्). — $^d$) $K_1$ न वांछेत्; S अर्जुनश्च (for जयश्च). $K_2$ न मोचयितुं भीमसेनोभिवांछेत्.

26 $^b$) $D_1$ $T_2$ $G_{2-4}$ Cn °सुतौ (for °पुत्रौ). $K_3$ $T_1$ $G_{1.3}$ °सेनं (for °सेनश्च). K च चक्रं ($K_3$ तथैव); B (except $B_1$) D (except $D_{2.9}$) $G_2$ अप्य($G_2$ °भ्य)रक्षत; T $G_4$ च संख्ये ($G_4$ °ख्ये); $G_{1.3.5}$ च युद्धे (for च चक्रे). — $^c$) K $B_4$ Dn $D_{3.4.7-9}$ $G_5$ °धन्वा (for °भृत्). $T_1$ शत्रुसेनां; $G_5$ °गणान् (for °संघान्). $K_{1.2.4}$ उदस्यन्; D

## २४

संजय उवाच ।

यथार्हसे पाण्डव तत्तथैव
 कुरून्कुरुश्रेष्ठ जनं च पृच्छसि ।
अनामयास्तात मनस्विनस्ते
 कुरुश्रेष्ठान्पृच्छसि पार्थ यांस्त्वम् ॥ १
सन्त्येव वृद्धाः साधवो धार्तराष्ट्रे
 सन्त्येव पापाः पाण्डव तस्य विद्धि ।
दद्याद्रिपोश्चापि हि धार्तराष्ट्रः
 कुतो दायाँल्लोपयेद्ब्राह्मणानाम् ॥ २
यद्युष्माकं वर्ततेऽसौ न धर्म्य-
 मद्रुग्धेषु द्रुग्धवत्तन्न साधु ।
मित्रध्रुक्स्याद्धृतराष्ट्रः सपुत्रो
 युष्मान्द्विषन्साधुवृत्तानसाधुः ॥ ३
न चानुजानाति भृशं च तप्यते
 शोचत्यन्तः स्थविरोऽजातशत्रो ।
शृणोति हि ब्राह्मणानां समेत्य
 मित्रद्रोहः पातकेभ्यो गरीयान् ॥ ४
स्मरन्ति तुभ्यं नरदेव संगमे

C. 5. 717
B. 5. 24. 5
K. 5. 24. 5

---

°व्युदस्य; S प्रणुद्य (T2 °साद्य; G2 °णुद्यन्); Ca उदस्य (as in text). — $^{d}$) K1.2 स्वस्त्यागमन्; K4 D2 °गतः; Ds D8 °गमं; Cd स्वस्त्यागमत् (as in text). K1 केचिद् (for कच्चिद्). — T2 *repeats* 23–26 after 26. K1.3.4.5 D2 read 24 after 26.

27 $^{a}$) D2 साधुकृतेन; all comm. साधुनैकेन (as in text). M1 शक्यं; Ca.d.s नूनं (as in text). — $^{b}$) N (except B5 Ds D1.2) सुखं; T G1.3–5 M Cs कार्यं (M1 नूनं); Ca.d कर्तुं (as in text). B Dn Ds D3–8 शक्यं वै; D9 हि शक्यं; G4 शिष्यं; G5 कर्तुं; M1 कार्यं; Cs शंक्यं; Ca.d शक्यं (as in text). — K1 om. $27^{cd}$. — $^{c}$) K4 B2 Ds D1.2 Ca.d.s.np °णेतुं (for °जेतुं). B (except B4) T2 च (for चेन्). K (K1 om.) D1.2.9 धृतराष्ट्रं सपुत्रं; S (except G2 M5) °ष्ट्रस्य पुत्रान्.

Colophon om. in K1. — *Sub-parvan:* K2.4.5 B Dn2 Ds D1.2.5–8.10 G1.2 M2–5 संजययान. — *Adhy. name:* D2 युधिष्ठिरप्रश्नः; G1 M2–5 कुशलप्रश्नः. — *Adhy. no.* (figures, words or both): D2.6 21; D7.8.10 S 23. — *S'loka no.:* K5 27; Dn 28; D8 29.

### 24

1 $^{a}$) K1 यथार्हसि; B (except B1) D (except D1.2.9) यथात्थ मे (for यथार्हसे). G5 पांडवानां (for पाण्डव). G5 om. तत्. T1 G1 तान् (for तत्). G3 वक्तुमीदृशं (for तत्तथैव). — $^{b}$) G5 °श्रेष्ठगुरून् (for °श्रेष्ठजनं). T2 पश्यसि (for पृच्छसि). K1.2 गुरून्कुरूञ्श्रेष्ठतमं (K2 °जनं) च पृ°. — $^{c}$) T1 G4.5 M मनस्विनो वै विमनस्विनस्तान् (T1 G4.5 °नस्ते). — $^{d}$) K1.2 Ds D5 °श्रेष्ठाः; Dn1 श्रेष्ठ (for °श्रेष्ठान्). S (except T2 G2 M1) पृच्छसे. K3 M पार्थिवांस्त्वं; D9 पार्थिव त्वं; G3.4 पांडवांस्त्वं (for पार्थ यांस्त्वम्).

2 $^{a}$) K D8–10 रिपूणामपि; B Dn D1–4.7 G1.2 रिपुभ्योपि हि; Ds D5.6 विप्रेभ्योपि हि; M2 रिपोर्वापि हि (for रिपोश्चापि हि). — D6 (hapl.) om. from $2^{d}$ up to धृतराष्ट्रः (in $3^{c}$). — $^{d}$) K4.5 D3 (marg. *sec. m.*) क्रुद्धो (for कुतो). T G1.3.4 M दापयेत्; G5 नार्पयेत् (for लोपयेत्).

3 K3 om. $3^{abc}$ and *repeats* 4. 23. $16^{b}$ (with v. l. स for वै) instead; D6 om. $3^{abc}$ (up to धृतराष्ट्रः); cf. v. l. 2. — $^{a}$) K1.2 युष्मासु यद्; Dn1 युष्माकं; D1.9 यत्तु युष्माकं; D2 T2 G (except G2) M यत्तद्युष्माकं (G1.5 °सु) (for यद्युष्माकं). D1 सौम्य (for ऽसौ न). S (for T1 see below) अ(G2 ह्य)धर्म्यं (for न धर्म्यं). Cn वर्तते सौनधर्म्यं! T1 हापयेद्वा यत्तद्युष्मासु धर्म्यं. Ca.s as in text. ❀Nil.: सौनः सूनावान् हिंस्रः। तद्धर्मादनपेतं सौनधर्म्यं क्रौर्यं । A curious aberration of the great scholiast!❀ — $^{b}$) K5 D8 त्वन्मित्रेषु; D2 अभक्तेषु; T2 अक्लिष्टेषु (for अद्रुग्धेषु). K4.5 D3 द्रोहवान्; Dn D2–4 द्रुह्यवान् (Dn1 °वत्); T2 क्लिष्टवत्; G5 मूढवत्; Cn द्रुग्धवत् (as in text). — $^{c}$) K1.2 मित्रद्रोग्धा (for °ध्रुक्स्याद्). D8.10 S (except T2 M5) धृतराष्ट्रस्य पुत्रो. — $^{d}$) K5 न साधुः; T1 G2.4.5 असाधु; G1 M2 न साधु.

4 $^{a}$) K1 न वानु°; K5 D8 G2 न जातु; D9 तथानु°; T1 स चापि; T2 G1.3–5 M न चापि (M1 न चाभि°) (for न चानु°). D1 ह्ययं न (for भृशं च). K4.5 तप्येत् (for तप्यते). — $^{b}$) K1 Dn1 D1.5.8 G1.3.5 M2–5 अतः K4.5 Ds D10 असौ; T2 G2 M1 अथ; G4 अपि (for अन्तः)

C. 5. 717
B. 5. 24. 5
K. 5. 24. 5

युद्धे च जिष्णोश्च युधां प्रणेतुः ।
समुत्कृष्टे दुन्दुभिशङ्खशब्दे
गदापाणिं भीमसेनं स्मरन्ति ॥ ५
माद्रीसुतौ चापि रणाजिमध्ये
सर्वा दिशः संपतन्तौ स्मरन्ति ।
सेनां वर्षन्तौ शरवर्षैरजस्रं
महारथौ समरे दुष्प्रकम्प्यौ ॥ ६
न त्वेव मन्ये पुरुषस्य राज-
न्ननागतं ज्ञायते यद्भविष्यम् ।
त्वं चेदिमं सर्वधर्मोपपन्नः
प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ॥ ७
त्वमेवैतत्सर्वमतश्च भूयः
समीकुर्याः प्रज्ञयाजातशत्रो ।
न कामार्थं संत्यजेयुर्हि धर्मं
पाण्डोः सुताः सर्व एवेन्द्रकल्पाः ॥ ८
त्वमेवैतत्प्रज्ञयाजातशत्रो
शमं कुर्या येन शर्माप्नुयुस्ते ।
धार्तराष्ट्राः पाण्डवाः सृञ्जयाश्च
ये चाप्यन्ये पार्थिवाः संनिविष्टाः ॥ ९
यन्माब्रवीद्धृतराष्ट्रो निशाया-
मजातशत्रो वचनं पिता ते ।
सहामात्यः सहपुत्रश्च राज-
न्समेत्य तां वाचमिमां निबोध ॥ १०

इति श्रीमहाभारते उद्योगपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

— $^{d}$) $D_{1.2}$ $T_{1}$ $G_{1.4.5}$ $M_{1.2}$ °द्रोहं; $D_{9}$ $G_{3}$ $M_{3-5}$ °द्रुह्यं; $G_{2}$ °ध्रुकत्वं (for °द्रोहः). $D_{1.2.9}$ S (except $T_{2}$) गरीयः.

5 $^{a}$) K जिष्णोर् (for तुभ्यं). $K_{1}$ B D $T_{1}$ $G_{5}$ संयुगे (for °गमे). — $^{b}$) $K_{4}$ जितं वापि (for च जिष्णोश्च). $G_{2}$ प्रतिश्रुतः (for प्रणेतुः). $K_{1.2}$ युद्धं युद्धे चापि युधां प्र°; $K_{5}$ युद्धे युतां चापि युधां प्र°; $D_{2}$ युद्धेषु जिष्णुं च युधां प्रधानं; $T_{1}$ $G_{1.3-5}$ M युद्धे चापि युयुधानप्र°. — $^{c}$) $K_{2.4.5}$ Ds $D_{5}$ $M_{1}$ समुत्क्रुष्टे; $D_{1}$ °न्नद्धे; $T_{1}$ $G_{4.5}$ °द्धुष्टे; $G_{2}$ °द्धृष्टे. $K_{1.2}$ °शंखनादे.

6 $^{a}$) $K_{1-3}$ $D_{2}$ $M_{1}$ °पुत्रौ (for °सुतौ). $K_{1.2}$ $B_{1}$ Ds $D_{5-8.10}$ रणाजिरेषु; $K_{3-5}$ $D_{2}$ रणे व्यवस्थितौ; $D_{1}$ $G_{2}$ महाजिमध्ये; T $G_{1.4.5}$ तथाजिमध्ये. — $^{c}$) K शरवर्षेण राजन्; $D_{2}$ शरजालैरजस्रं. — $^{d}$) $K_{1.2}$ समरे दुष्प्रसह्यौ; $K_{4.5}$ B D (except $D_{9.10}$) °रे दुष्प्रकंपौ; $T_{1}$ $G_{1.5}$ $M_{1-4}$ °रेष्वप्रकंप्यौ; $T_{2}$ °रे निष्प्रकंपौ.

7 $^{a}$) $M_{1}$ किंचिद् (for राजन्). — $^{b}$) $G_{3}$ $M_{1.3.4}$ जायते (for ज्ञा°). $D_{1.2.7}$ S यद्भविष्यत्. — $^{c}$) S (except $M_{2.5}$) त्वां (for त्वं). B Dn Ds $D_{8-10}$ चेत्तथा; $D_{1}$ चेदिदं; $G_{2}$ चेदयं (for चेदिमं). S (except $M_{2.5}$) °धर्मोपपन्नं. — $^{d}$) S (except $G_{4}$ $M_{2}$) क्लेशः. S (except $M_{2}$) कृच्छ्ररूपः.

8 $^{a}$) $K_{3}$ B $Dn_{1}$ $D_{3.4}$ $M_{2}$ कृच्छ्रगतश्च; $Dn_{2}$ सर्वगताभि-; $D_{1}$ °मतश्च; $D_{2}$ $G_{2}$ °तमं च; $D_{8}$ सर्वमवेक्ष्य (for सर्वमतश्च). — $^{b}$) $K_{5}$ Dn $D_{1.3.7}$ शमीकुर्याः; S (except $G_{1.2}$) समीक्ष्य कुर्याः; Cd.s समीकुर्याः (as in text). — $D_{6}$ om. $8^{c}$–$9^{b}$. — $^{c}$) $G_{4}$ ते कामार्थौ (for न कामार्थं). $Ds_{2}$ $T_{1}$ च; $G_{4}$ न (for हि). $Ds_{2}$ धर्म्यं (for धर्मं). — $^{d}$) $K_{1.2}$ $D_{1.2}$ $T_{2}$ $G_{3.4}$ पुत्राः (for सुताः).

9 $K_{1.2}$ om. $9^{a}$; $D_{6}$ om. $9^{ab}$ (cf. v. l. 8). — $^{a}$) $D_{2}$ एकः (for एतत्). — $^{b}$) B D $G_{2}$ स(Dn $D_{1-5.7.10}$ श)मीकुर्यां; T $G_{1.3-5}$ M क्षमं ($T_{1}$ $G_{1.5}$ क्षेमं; $T_{2}$ क्षमीकुर्या (for शमं कुर्या). $T_{2}$ $G_{1}$ $M_{5}$ शमाप्नु°; $G_{4}$ शममाप्नु (for शर्माप्नु°). Cs has शमाप्नुवंति. — $^{c}$) Ds $D_{10}$ समागताः (for धार्तराष्ट्राः). $D_{2}$ S (except $T_{2}$) सृंजयाः पांडवाश्च (by transp.); cf. v. l. 5. 25. $1^{a}$. — $^{d}$) $K_{1.2}$ $D_{8}$ पार्थिवाः संति वृद्धाः; $K_{3-5}$ B Dn Ds $D_{1.3-7.9.10}$ संनिविष्टा ($K_{3-5}$ संति वृद्धा; Ds $D_{5.10}$ संनिकृष्टा) नरेंद्राः; $D_{2}$ पार्थिवाः संनिबोध (for पार्थिवाः संनिविष्टाः). — After 9, $K_{1.2}$ ins.:

132* तेषां सर्वेषां शममेवं विदध्याः ।

10 $^{a}$) $K_{1}$ B D (except Ds $D_{9.10}$) $T_{2}$ G यन्मां; $K_{3}$ यस्माद् (m यन्मां) (for यन्मा). T G सभायाम् (for निशायाम्). — $^{d}$) $K_{3-5}$ समेत्य तत्वं वचनं निबोध; S (except $G_{2}$) समेत्य तच्छ्रोष्यसि संनियोगं.

Colophon missing in $B_{4}$. — *Sub-parvan:* $K_{1-4}$ $B_{1-3.5}$ Ds $D_{1.2.5-10}$ $M_{2-5}$ संजययान. — *Adhy. name:* $T_{1}$ $G_{1}$ $M_{2-5}$ संजयप्रतिवचनं ($T_{1}$ $G_{1}$ °प्रतिवाक्यं). — *Adhy. no.* (figures, words or both): $K_{1}$ 23; $D_{5.7.8}$ S 24; $D_{6}$ 22. — *S'loka no.:* $K_{5}$ $Dn_{2}$ $D_{8}$ 10.

## २५

युधिष्ठिर उवाच ।

समागताः पाण्डवाः सृञ्जयाश्च
जनार्दनो युयुधानो विराटः ।
यत्ते वाक्यं धृतराष्ट्रानुशिष्टं
गावल्गणे ब्रूहि तत्सूतपुत्र ॥ १

संजय उवाच ।

अजातशत्रुं च वृकोदरं च
धनंजयं माद्रवतीसुतौ च ।
आमन्त्रये वासुदेवं च शौरिं
युयुधानं चेकितानं विराटम् ॥ २
पाञ्चालानामधिपं चैव वृद्धं
धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ।
सर्वे वाचं शृणुतेमां मदीयां
वक्ष्यामि यां भूतिमिच्छन्कुरूणाम् ॥ ३
शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत्त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञ-
स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ ४
सर्वैर्धर्मैः समुपेताः स्थ पार्थाः
प्रस्थानेन मार्दवेनार्जवेन ।
जाताः कुले अनृशंसा वदान्या
ह्रीनिषेधाः कर्मणां निश्चयज्ञाः ॥ ५
न युज्यते कर्म युष्मासु हीनं
सत्त्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत्त-
च्छुक्ले वस्त्रे यद्भवेत्किल्बिषं वः ॥ ६
सर्वक्षयो दृश्यते यत्र कृत्स्नः
पापोदयो निरयोऽभावसंस्थः ।
कस्तत्कुर्याज्जातु कर्म प्रजान-
न्पराजयो यत्र समो जयश्च ॥ ७
ते वै धन्या यैः कृतं ज्ञातिकार्यं
ये वः पुत्राः सुहृदो बान्धवाश्च ।

C. 5. 780
B. 5. 25. 8
K. 5. 25. 8

### 25

1 $^{a}$) T G सृंजयाः पांडवाश्च (by transp.); cf. v. l. 5. 24. 9$^{c}$. — $^{c}$) K $D_{10}$ धृतराष्ट्रोन्वशासत् ($K_{1.4.5}$ °शास्ते); $D_2$ °राष्ट्रादुपात्तं; $D_7$ धार्तराष्ट्रानुशिष्टं. — $^{d}$) Some S MSS. गावद्गणे.

2 $^{ab}$) S (except $G_{2.5}$) transp. वृकोदरं and धनंजयं. — $^{d}$) $D_{1.2}$ $G_2$ससात्यकिं (for युयुधानं).

3 $^{a}$) B and some other MSS. पंचाला°. $K_{3-5}$ चापि (for चैव).

4 $D_2$ reads 4 after 5$^{ab}$. — $^{a}$) $K_1$ स मां; $D_6$ Cap समं; $G_4$ धर्मं; Ca.d शमं (as in text). — $^{b}$) $K_1$ $G_3$ $M_{1.3.4}$ न्ययोज°; $T_1$ अबोध°; $G_4$ नियोज°; $G_5$ निवेद° (for अयोज°). $T_1$ $G_4$ -थ धर्मैं (for रथं मे). — $^{c}$) $K_1$ Dn $D_3$ स्व- (for स-). $K_1$ सर्वं; $K_{2.5}$ राजन् (for राज्ञस्).

5 $^{a}$) $K_1$ $G_3$ सर्वै धर्मैः; $D_1$ सहैव तैः. Cd cites तैः. $T_1$ $G_5$ समवेताः; Cd समुपेताः (as in text). $K_{1.3.5}$ $B_{1.2.4}$ D (except $D_{1.9}$) $T_2$ तु; Cd स्थ (as in text). S सर्वे (for पार्थाः). — $^{b}$) $K_3$ B Dn Ds $D_{3-8.10}$ सं($D_{s1}$m $D_7$ संप्र)स्थानेन; $D_1$ प्रस्थायमानं; T G (except $G_3$) प्रज्ञानेन; M प्रस्थाने वा; Cd.s प्रस्थानेन (as in text). $K_{1.4.5}$ प्रस्थापने मार्दवे चार्जवे च. Cd मार्दवेनार्जवेन (as in text). — After 5$^{ab}$, $D_2$ reads 4. — $^{c}$) $K_{3-5}$ B $D_{1.2.5-8.10}$ कुले जाता (by transp.). $K_4$ त्वनृशंसा; B D (except $D_{1.2}$) S ह्यनृ°. — $^{d}$) $K_{2.3}$ B D (except $D_{s1}$ $D_{2.9}$) Cs ह्रीनिषेवाः (Csp as in text).

6 $^{a}$) $K_4$ Ds $D_{1.9}$ $G_2$ Cd.s दीनं; Ca हीनं (as in text). — $^{b}$) $G_4$ सत्यं; Ca सत्त्वं (as in text). $K_1$ वै; Ca वः (as in text). $B_1$ भीमवेगाः; S (except T $G_2$) भैमसेनाः; all comm. as in text. — $^{c}$) $M_1$ उद्भाव्यते; Ca उद्भासेत्; Cd उद्भासेत. — $^{d}$) $K_3$ B D (except $D_{1.2.5.7.9}$) शुभ्रे (for शुक्ले). $D_9$ transp. यद्भवेत् and किल्बिषं.

7 $^{a}$) $K_{1-3}$ सर्वा($K_2$ °र्वां)पायो; $K_4$ सर्वं भूयो मे (for सर्वक्षयो). $D_{10}$ युद्धे (for कृत्स्नः). — $^{b}$) S (except $G_2$) पापोदयोभावसंस्थः कुरूणां. — $^{c}$) $K_4$ B (except $B_1$) $D_{n1}$ $D_{1.5.6.9}$ $G_2$ तत्र (for तत्). — $^{d}$) $K_3$ वा नियमो; $K_4$ यत्र शमो (for यत्र समो). $K_1$ Cd यत्र यमोजयः!

8 $^{b}$) $K_{3.5}$ B Dn Ds $D_{2.5-8.10}$ $G_2$ ते वै; $D_{3.4.9}$ ते वः (for ये वः). $G_5$ पांडवाश्च (for बान्ध°). — $^{c}$) $K_1$ उपन्यस्तं; $D_8$ °कृष्टं; S (except $M_5$) उपक्रु($G_3$ उत्क्रु)ष्टा;

C. 5. 790
B. 5. 25. 8
K. 5. 25. 8

उपक्रुष्टं जीवितं संत्यजेयु-
स्ततः कुरूणां नियतो वै भवः स्यात् ॥ ८

ते चेत्कुरूननुशास्य स्थ पार्था
निनीय सर्वान्द्विषतो निगृह्य ।
समं वस्तज्जीवितं मृत्युना स्या-
द्यज्जीवध्वं ज्ञातिवधे न साधु ॥ ९

को ह्येव युष्मान्सह केशवेन
सचेकितानान्पार्षतबाहुगुप्तान् ।
ससात्यकीन्विषहेत प्रजेतुं
लब्ध्वापि देवान्सचिवान्सहेन्द्रान् ॥ १०

को वा कुरून्द्रोणभीष्माभिगुप्ता-
नश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे प्रसोढुं विषहेत राज-
न्राधेयगुप्तान्सह भूमिपालैः ॥ ११

महद्बलं धार्तराष्ट्रस्य राज्ञः
को वै शक्तो हन्तुमक्षीयमाणः ।
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किंचित् ॥ १२

कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ।
सोऽहं प्रसाद्य प्रणतो वासुदेवं
पाञ्चालानामधिपं चैव वृद्धम् ॥ १३

कृताञ्जलिः शरणं वः प्रपद्ये
कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।

---

all comm. उपक्रुष्टं (as in text). Cs ये (for सं-). — $^{d}$) B (except $B_1$) Dn $D_{2-7}$ $G_3$ $M_5$ यतः; $G_5$ सुताः; Cs ततः (as in text). $K_{1.2}$ $D_{1.2.9}$ $G_2$ नियतो भवः ($K_1$ °तो वधः; $D_1$ °तो मतः) स्यात्; $K_{3-5}$ T $G_{1.3-5}$ M नियतः स्यादभावः (for नियतो वै भवः स्यात्). Ca.d cites भवः, Cs भावः.

9 $^{a}$) $K_{1.2}$ $D_2$ तांश्चे($K_2$ तां चे)त्; $K_3$ तान्वै; $K_{4.5}$ ए($K_4$ जे)तान्; $D_8$ M नो चेत्; $D_9$ ते वै; T G (except $G_5$) न चेत्; Cs ते चेत् (as in text). Ca.d cite ते (as in text). $K_1$ अनुशिष्या स्थ; $K_2$ °शास्य वः; $K_5$ °शिष्यांश्च; B Dn $D_{2-10}$ °शिष्याथ; $D_1$ °वृत्ताः स्थ; S °ने($G_2$ °शि)-ष्यामि; Cd.s °शास्य स्थ (as in text). Ca cites स्थ (as in text). $K_4$ अनुशिष्याश्चचारैः (for °शास्य स्थ पार्था). Dn $D_{3.4}$ $G_1$ पार्थान्. — $^{b}$) $K_{2.5}$ B Dn $D_{2-8.10}$ S निर्णी($D_2$ °र्नी-; $G_5$ °न्नी)य; $K_4$ Ds निणीय; $D_9$ विनीय; Ca.d.s निनीय (as in text). $D_1$ विद्विषो; Ca.d.s द्विषतो (as in text). $Dn_2$ $Ds_1$ वै निगृह्य; $D_1$ $G_3$ विगृह्य; all comm. निगृह्य (as in text). — $^{c}$) $K_1$ $D_5$ च वस्तत्; $K_2$ च तत्; $D_2$ ततं; $G_2$ वस्तु; Ca.d.s वस्तत् (as in text). — $^{d}$) $D_2$ यज्जीवितं; Ca.d.s °वध्वं (as in text). $K_4$ °वधान्न; $K_5$ °वधात्तन्न; $D_1$ °नाशाय; $G_5$ °वधो न; Ca.d.s °वधे न (as in text). $D_1$ साधुः; Ca.d.s साधु (as in text).

10 $^{a}$) Ds $G_4$ $M_{3.4}$ को ह्येष; $D_{10}$ को न्वेष; $G_5$ कोम्येत्य (for को ह्येव). — $^{b}$) $K_1$ $Dn_1$ $D_{5.8.9}$ $T_1$ सचेकितान्; $K_{4.5}$ $D_6$ सभीमसेनान्. $K_{1.2}$ पार्थिव° (for पार्षत°). — $^{c}$) $K_{4.5}$ $D_{1.8.9}$ ससात्यकान्; $Dn_1$ $D_{3.4.9}$ °सात्यकीन्को. $Ds_1$ $D_{3-5.7.10}$ विषहेतेह (for विषहेत). $Dn_1$ $Ds_1$ $D_{3-5.7.9.10}$ जेतुं; S (except $G_2$) प्रहर्तुं (for प्रजेतुं). — $^{d}$) $K_{3-5}$ $D_2$ समहें($D_2$ सहें)द्रांस्तथैव; B (except $B_2$) Ds $D_{5-7}$ सचिवानपींद्रः; $D_9$ सेंद्रान्सहायान् (for सचिवान्सहेन्द्रान्). $D_1$ लब्ध्वा सहायानपि देवान्स शक्रान्.

11 $^{a}$) $K_1$ क्रुद्धान् (for को वा). $K_3$ भीष्मद्रोणाभि° (by transp.); $G_3$ $M_1$ °दिगुप्तान्. — $^{c}$) $K_{1.2}$ $D_2$ S युद्धे; $D_1$ युद्धं (for रणे). $K_1$ B Dn Ds $D_{3-8.10}$ विजेतुं; $D_1$ प्रकर्तुं (for प्रसोढुं). $B_1$ प्रसहेत (for विष°). T $G_{1.3.5}$ $M_{2.3.5}$ वीरान्; $G_2$ राजा; $G_5$ कस्मात् (for राजन्).

12 $^{ab}$) T G (except $G_2$) $M_1$ बृहद्बलं. $K_2$ राजन् (for राज्ञः). $T_2$ transp. राज्ञः and को वै. $K_4$ $D_1$ $M_1$ वा (for वै). — $^{c}$) $D_{10}$ पार्थ (for चैव), and वा (for the second च). — $^{d}$) $D_1$ नाभिजानामि; $G_3$ नाभिग°; $G_4$ चाधिग° (for नाधिग°).

13 $^{a}$) $K_1$ Ds Ca नीताः; Cd.s.ap नीचाः (as in text). $G_5$ दौष्कुलेन. — $^{b}$) $D_1$ विधर्मार्थं; $D_2$ अधार्मिकं (for निर्धर्मार्थं). $D_1$ कुर्युर्हि; $D_2$ कुर्वंति (for कुर्युश्च). — $^{c}$) $K_{1.2}$ प्रपद्ये; $D_2$ प्रपद्य (for प्रसाद्य); cf. $14^{a}$. $B_1$ प्रयतो. — $^{d}$) Some MSS. पंचाला°. $D_9$ चाधिपतिं च वृद्धं; $D_{10}$ अधिपं पार्षतं च; S (except $G_2$) अधिपं चापि वृद्धं.

14 $B_2$ om. $14^{ab}$. — $^{a}$) $B_1$ $D_1$ $T_1$ $G_{1.4.5}$ M वै; $G_3$ अहं (for वः). — $^{b}$) = 5. 26. $18^{b}$. $G_4$ °पांडवानां (for °सृञ्जयानाम्). — $^{c}$) $K_3$ $B_{1-4}$ $Dn_2$ Ds $D_{2-6}$ ह्येवमेवं; $B_5$ $D_{10}$ ह्येवं मे; $D_9$ ह्येष ते; $G_1$ ह्येवमेव; $G_3$ ह्येवं

न ह्येव ते वचनं वासुदेवो
धनंजयो वा जातु किंचिन्न कुर्यात् ॥ १४
प्राणानादौ याच्यमानः कुतोऽन्य-
देतद्विद्वन्साधनार्थं ब्रवीमि ।
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## २६

युधिष्ठिर उवाच ।
कां नु वाचं संजय मे शृणोषि
युद्धैषिणीं येन युद्धाद्बिभेषि ।
अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युध्येत सूत ॥ १
अकुर्वतश्चेत्पुरुषस्य संजय
सिध्येत्संकल्पो मनसा यं यमिच्छेत् ।
न कर्म कुर्याद्विदितं ममैत-
दन्यत्र युद्धाद्बहु यल्लघीयः ॥ २
कुतो युद्धं जातु नरः प्रजान-
न्को दैवशप्तोऽभिवृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था

C. 5. 740
B. 5. 26. 3
K. 5. 26. 3

---

ते (for ह्येव ते). Dn1 D8 T G5 मे (for ते). Cn cites ह्येवमेवं. — [d]) K3 मृषाभूतं (for धनंजयो). K1.2 Ds D1 G5 om. वा. D1 कुर्यान्न किंचित् (by transp.).

15 [a]) K5 प्राणानाजौ; Dn D2–4.6.7.9 °न्दद्याद्; Ds D5 Cap °न्ददौ; Ca.d.s प्राणानादौ (as in text). Dn D8.4.6.9.10 G4 याचमानः; Ca °मानान्; Cd.s as in text. K3.4 प्रयच्छे; K5 D10 प्रयच्छेत्; D1 ततोन्यद्; Ca.d कुतोऽन्यद् (as in text). — [b]) K1.2 एवं विद्मः; K3–5 D10 कुतोन्यदेतत्; D1 T2 G (except G5) एतद्विद्वान्; D2 एतद्वचनं; Cs एतद्विद्वन् (as in text). — After 15[ab], D10 (marg.) ins.:

133* धनानि रत्नानि बहूनि राज्यं
कल्याणरूपाणि च वाहनानि ।
न दुर्लभानीह नरप्रधाना
वृद्धस्य राज्ञः शासने तिष्ठतां वः ।

— [d]) D10 उत्तरं (for उत्तमा). K1.2 मतं च वः सम्य-गिहोत्तरं स्यात्.

Colophon. — *Sub-parvan*: K1.2.4 B Ds D1.2.5–10 M2 संजययान. — *Adhy. name.*: Dn2 संजयवाक्यं; D2 संदेशप्रदानं; T1 संजयवचनं; G1 संजयवचनश्रवणं; M2 संजयप्रतिवचनं. — *Adhy no.* (figures, words or both): K1 D7 24; D5.8 S 25; D6 23. — *S'loka no.*: K5 Dn D8 15.

### 26

1 [a]) K D8.10 कांश्चिद्; B3 कां त्वं; D1.2 कच्चिन्न; G3 कदा नु; M2 कां सु- (for कां नु). D7 श्रृणुयात्संजयो मे and also संजय मे श्रृणोषि (as in text). — [c]) K2 M2 तात; D7 चैतद् (for वै तात). — [d]) K1.2 कथं; K5 D1.5.6 G4.5 M3 कस्तं; D9 M4 कः स्वं; G3 कष्टं; M1 कः सं- (for कस्तल्). S (except T1 G1.2) साधु (for जातु). B (except B1; B5 m as in text) मूढः (for सूत).

2 [b]) D1 कामो (for संकल्पो). G4 M5 om. the first यं. — [c]) K5 कः; Ca.s न (as in text). K5 ममैव तद्; D2 वै ममैतद्; G5 मे तदन्यद् (for ममैतद्). — [d]) K1.2 अपि; Ca.d.s बहु (as in text). K4 T1 G1.4.5 तल्लघीयः; G3 तुल्यवीर्यः; Ca यल्ल° (as in text). K5 बहुलायासपापात् (for बहु यल्ल°).

3 [a]) K को वा; D1.2 को नु (for कुतो). D9 युध्येत् (for युद्धं). K5 M कश्चित्; T1 G (except G2) किंचित्; T2 कच्चिद् (for नरः). K (except K5) G2 प्रशंसेद् (K4 °सन्); B Dn Ds D3–8.10 अवगच्छेत्; D2 प्रपश्येत्; G4 सुखाय (for प्रजानन्). — [b]) K1.4 Cd.s दैवसक्तो; K3 B Dn D3.4.6.10 T G1.3.5 M देवशप्तो; Ds2 D2 दैवशक्तो; D1 वा शक्तो हि; D7 G2 देवशक्तो; Ca दैवशप्तो (as in text). K1.2 वि-; B D (except D1) T1 G4.5 M2 हि (for अभि-). K1.2.4 दुःखं (for युद्धम्). — [c]) G4 शुभै°; Ca सुखै° (as in text). — [d]) K1.2 युद्धाद्; Ca.d

G. 5. 740
B. 5. 26. 3
K. 5. 26. 3

धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ३
कर्मोदयं सुखमाशंसमानः
कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ।
सुखप्रेप्सुर्विजिघांसुश्च दुःखं
य इन्द्रियाणां प्रीतिवशानुगामी ।
कामाभिध्या स्वशरीरं दुनोति
यया प्रयुक्तोऽनुकरोति दुःखम् ॥ ४
यथेध्यमानस्य समिद्धतेजसो
भूयो बलं वर्धते पावकस्य ।
कामार्थलाभेन तथैव भूयो
न तृप्यते सर्पिषेवाग्निरिद्धः ।
संपश्येमं भोगचयं महान्तं
सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ५
नाश्रेयसामीश्वरो विग्रहाणां
नाश्रेयसां गीतशब्दं शृणोति ।
नाश्रेयसः सेवते माल्यगन्धा-
न्न चाप्यश्रेयांस्यनुलेपनानि ॥ ६
नाश्रेयसः प्रावरानध्यवस्ते
कथं त्वस्मान्संप्रणुदेत्कुरुभ्यः ।
अत्रैव च स्यादवधूय एष

---

धर्माद् (as in text).

4 [a]) $K_{1.5}$ B D (except $D_8$) $G_{1.2}$ धर्मो°; Ca.s कर्मो° (as in text). $K_1$ B D (except $D_{10}$) आशंसमानाः. — [b]) $K_1$ $T_2$ $G_{1.3}$ $M_{1.3-5}$ कृच्छ्रापायं; $T_1$ $G_5$ $M_2$ कृच्छ्रापयन्; all comm. as in text. K कर्म कुर्वीत ($K_1$ °र्वंति); $D_1$ किं त्विति कर्म; $D_{2-4.7-9}$ तत्त्वतिकर्म (for तत्त्वतः कर्म). Ca.d.s cite अतिकर्म. $D_{10}$m वस्तुतः (probably gloss for तत्त्वतः). — $B_1$ (hapl.) om. 4[cdef]. — [c]) $K_1$ B ($B_1$ om.) D (except $D_{1.9.10}$) $T_2$ $G_{1.2.5}$ $M_2$ Cs सुखं प्रेप्सुर्; Ca.d as in text. K निजिघांसुश्च; Ds वै जिघां°; $G_2$ विजिगीषुश्च; $G_4$ M विजिहा°. $D_9$ सुखप्रेप्सुर्विजित्वा सुखदुःखं. — After 4[c], $D_2$ ins.:

134* कुलान्तकं संजय कोऽभिवाञ्छेत्;

while S ins.:

135* कर्मारभेद्यच्च धर्मानपेतम्.

— [d]) $D_1$ T $G_{1.3.5}$ क; $D_8$ यद् (for य). $K_{3-5}$ °वशानुगश्च; Dn $D_{3.4.8.10}$ °रसानुगामी; $D_9$ S (except $T_2$ $M_5$) °वशानुगानां. — [e]) T $G_{1.2.5}$ M कर्मा($T_2$ $M_1$ [*sup. lin.*]$._{2.4.5}$ कामा)भिज्ञः; $G_3$ को हि प्राज्ञः; $G_4$ यैः कर्मभिः; all comm. कामाभिध्या (as in text). $D_1$ $T_2$ $G_{2.3}$ धुनोति (for दु°). — [f]) $K_5$ Ds $G_2$ यथा; Cs यया (as in text). $B_4$ Dn $D_{3-7}$ $T_1$ $G_{2-4}$ प्रमुक्तो; Cs °युक्तो (as in text). $B_4$ Dn $D_{1-7}$ $G_{3-5}$ न; $T_2$ अपि; Cd नु; Cs अनु- (as in text). $K_{1.2}$ $D_2$ (in addition to the variant shown above)$._9$ यया प्रयुक्तः पुरुषः कर्म कुर्यात्. — After 4, S ins.:

136* तृष्णां त्यजेत्सर्वधर्मादपेतां.

5 [a]) $K_3$ प्रवृद्ध°; $Ds_2$ आसिच्य°; Cs यथेध्य° (as in text). $M_{1.2}$ समृद्ध°. — [c]) $K_1$ कामार्थभावेन; $K_4$ $D_8$ $T_2$ °लोभेन; $G_{1-3}$ $M_{3.4}$ कामोर्थै°; $G_4$ काम्यार्थै°. — [d]) $K_5$ न वै तृप्येद्; Cs न तृप्यते (as in text). $K_{3-5}$ हवि[illegible] (for सर्पिषा). — [e]) K यद्; $D_8$ मे; $T_2$ वै (for इमं) $D_2$ भोग्यचयं; T $G_{3.5}$ भोगमोहं; $G_{1.2.4}$ M °महं; Cd as in text. — [f]) $G_3$ गृहाद्यांति; Ca.s सहास्माभिर् (as in text). — After 5, $K_4$ ins.:

137* संमोहनं तस्य महत्तथैत-
द्यदस्माभिर्विप्रयोगो नृपस्य ।

6 [a]) $K_1$ नोश्रेयसाम्; $K_3$ (by corr.) $M_2$ न श्रे°; K[illegible] $B_4$ $D_{5-7}$ $T_2$ Cn नाश्रेयान्; Dn $D_{3.4}$ न चाश्रेयाणाम्; D[illegible] नाश्रेयान्स्याद्; $G_3$ संश्रेयसाम्; Cn नाश्रेयान्; Cd.s नाश्रेयसाम् (as in text). — [b]) $K_1$ नोश्रेयसां; B Dn D[illegible] $D_{3-8.10}$ नाश्रेयान् ($B_1$ °श्रेयसां) वै (for नाश्रेयसां). K[illegible] गीतनृत्यादिकानां; $D_7$ गीतवृत्तं शृणोति. — [c]) $K_1$ नोश्रेयसः $K_{2.4.5}$ $D_9$ $T_2$ नाश्रेयसां; B $Dn_2$ Ds $D_{3-8.10}$ नाश्रेया[illegible] ($B_1$ °यसां) वै; $Dn_1$ निश्रेयसान्वै (for नाश्रेयसः). C[illegible] cites नाश्रेयान्. $D_{2.9}$ सेवति; $T_2$ वहते (for सेवते). $K_{1-3}$ $T_1$ $G_{1.3.4}$ गंधमाल्यान्; $K_{4.5}$ $T_2$ $G_5$ गंधमाल्यं; D[illegible] $M_{3-5}$ माल्यगंधं. — [d]) B Dn Ds $D_{3-5.7.10}$ न चाप्यश्रेयान्; $D_{6.8}$ नाप्यश्रेयान्; S (except $G_2$) नाश्रेयसश्चापि (for न चाप्यश्रेयांसि).

7 [a]) $K_5$ B D (except $D_{1.2.9}$) नाश्रेयान्वै; Ca न चाश्रेयान् (for नाश्रेयसः). B $Dn_1$ Ds $D_{3-8}$ Ca.n प्रावारान्; $D_{1.2}$ $G_{1-4}$ प्रवरान्; $T_2$ प्रवराणि; Cd प्रावरान् (as in text). $K_4$ प्रावरणोति वस्त्रं; $D_9$ प्रावरान्यध्यास्ते; G[illegible] पारराष्ट्राधिपास्ते (for प्रावरानध्यवस्ते). $K_{1.2}$ एष वस्ते; K[illegible] $T_2$ अप्य($T_2$ °ध्य)वस्ते; $K_5$ Ds $D_{3.10}$ Ca संनिवस्ते; B D[illegible] $D_{3-7}$ संविवस्ते; $D_1$ $G_4$ नाविवस्ते; $G_2$ वाधिवस्ते (for अध्यवस्ते). — [b]) $K_{1-3}$ तु ($K_1$ न; $K_3$ तु) सोस्मान्; B[illegible] Dn $D_{3-8}$ तस्मात्; $D_9$ $G_4$ Cn अस्मान्; $G_3$ मम स्यात्; G[illegible] $M_2$ न्वस्मान्; $M_4$ त्वमस्मात् (*sup. lin.* °न्); Cs अर्था[illegible]

कामः शरीरे हृदयं दुनोति ॥ ७
स्वयं राजा विषमस्थः परेषु
सामस्थ्यमन्विच्छति तन्न साधु ।
यथात्मनः पश्यति वृत्तमेव
तथा परेषामपि सोऽभ्युपैति ॥ ८
आसन्नमग्निं तु निदाघकाले
गम्भीरकक्षे गहने विसृज्य ।
यथा वृद्धं वायुवशेन शोचे-
त्क्षेमं मुमुक्षुः शिशिरव्यपाये ॥ ९
प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा
लालप्यते संजय कस्य हेतोः ।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं
पुत्रं मन्दं मूढममन्त्रिणं तु ॥ १०
अनाप्तः सन्नाप्ततमस्य वाचं
सुयोधनो विदुरस्यावमन्य ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
संबुध्यमानो विशतेऽधर्ममेव ॥ ११
मेधाविनं ह्यर्थकामं कुरूणां
बहुश्रुतं वाग्मिनं शीलवन्तम् ।
सूत राजा धृतराष्ट्रः कुरुभ्यो

C. 5. 750
B. 5. 26. 13
K. 5. 26. 13

---

(for त्वस्मान्). D2–4 स प्रणुदेत्; D9 Ca. d. s प्रणुदेत् (for संप्रणुदेत्). B1. 2. 4 कुरून्वै; Ca. d. s कुरुभ्यः (as in text). — c) T2 G4. 5 चास्मान् (for एव च स्याद्). G3. 5 M1 अवधूत; Ca. d. s अवधुर्यः (for अवधूय). K1 अत्रैव स्याद-वधुर्य एष; K2 °व न स्यादवबुध्य कामः; K3 °व न स्यादव-बुद्धिमानः; K4 °व तस्य ह्यवधुर्यकामः; K5 °व स्यादनुबध्य कामः; B1 Ds D10 °व च स्यादबुधस्यैष (B1 om. एष) कामः; B2–5 Dn D3–7 °व स्यादबुधस्यैव (D5. 6 °ष) कामः; D1. 2 °व च स्यादवतीर्ण (D2 °धुर्य) एष; D8 °व स्यादवधुर्यः स कामः; D9 °व च स्यादवनिंद्य एष. — d) K (except K1) शरीरभूतो; B D (except D1. 2. 9) Cs प्रायः शरीरे (for कामः शरीरे). D1 T1 G3 धुनोति; Cs संदुनोति; Ca. d दुनोति (as in text).

8 b) K3 सामस्थान्; K4 B D (D10 m as in text) S Cap सामर्थ्यम् (Ds सामस्त्यम्; D2 संस्थाम्); Ca. d. s सामस्थ्यम् (as in text). — c) K1 यश्चात्मनः; Ds यथा पुनः; D2 यथात्मना; Cs as in text. B1 T2 G (except G5) M1. 3. 4 वृत्तिम्; M2 वृत्तिर् (for वृत्तम्). K2. 3 B1 D1 Ca. d. s एवं; K4 D2. 9 T2 M एषां; T1 G एष (for एव). — d) B1. 2 Ds D6. 3. 10 m S (except T2) Cn. s सोऽभ्युपैतु.

9 a) D9 समिद्धम् (for आसन्नम्). D9 G3 च (for तु). D1 निधाय काले; G2 विधाय कामं (for निदाघकाले). — b) K1. 2 Ca गंभीरवार्क्षे (Cap as in text). Cd cites वार्क्ष. — c) K3 T1 G1. 4. 5 M प्रवृद्धे; K4. 5 B4 Dn2 D3. 4. 7. 9 विवृद्धं; B3 G2 वृद्धे; T2 प्रवृद्धं; G3 विवृद्धे (for वृद्धं). K1. 2 B1. 2. 5 D2 G2 M3–5 °वेगेन; B3 Ds D8 °पथेन (for °वशेन). Dn2 D3. 4. 7. 9 सेवेत्; Cn. s शोचेत् (as in text). — d) Dn2 D2–4. 7. 9 क्षिप्रं; T1 G1. 2. 5 कक्षं; T2 G4 कक्षे; all comm. क्षेमं (as in text). D1 शरदो व्य°; Cs शिशिरव्य° (as in text).

10 a) K1. 2. 5 D1 आर्त्तै°; D2. 9 T G Cs आप्तै° (for प्राप्तै°). — b) S (except T1 G1. 2. 5) संमुह्य ते; Cd. s लालप्यते (as in text). — c) B1 अनादरे (for अनार्जवे). — d) G2 transp. पुत्रं and मन्दं. K3 T G1. 4 M1 transp. मन्दं and मूढं. K5 सं- (for मन्दं). D9 M (except M5) अमित्रिणं (for अमन्त्रिणं). K B2 D9 च; B1 T2 M (except M2) तं (for तु). D2 T1 G1–3 अमंत्रणे रतं; G4. 5 अमित्रमेषः (G5 °वंतं) (for अमन्त्रिणं तु).

11 a) K D10 अनात्मवान्; B Dn Ds D1–9 T2 G2 अनाप्तवच्च; Ca. d अनाप्तवत् (for अनाप्तः सन्). K आत्म-वतश्च (K3 °तोस्य) (for आप्ततमस्य). K3. 4 B D (except D2. 10) G2 Cs वाचः (for वाचं). — b) M2 दुर्योधनो; Cs सुयो° (as in text). B1. 4. 5 D3. 4 T G1. 3–5 M Cn अवमत्य; D1 G2 °मेने; Cs अवमन्य (as in text). D9 om. अवमन्य and 11cd. — d) S (except M5) संयुज्य° (G2 संबोध्य°); Ca. d संबुध्य° (as in text). K1. 2 मन्यते; T1 G1 द्विषते; Cn. s संविशते; Ca. d विशते (as in text).

12 a) D1 om. हि. D2 ह्यर्थकालं and °कामं also. — b) T1 G1 शीलवृद्धं; T2 °वृत्तं; G5 वीर्यवंतं (for शीलवन्तम्). — c) K1 Ds1 संतं; K3 तथा; K4 B1 Dn D2–9 G2 स तं; K5 सौते; B2–5 Ds2 D10 सूतं; D1 स तु (for सूत). T G1. 3–5 M सुतस्यार्थे (for सूत राजा). D1 सुव्रतं; D2 G2 सम्रू(G2 °मि)द्धो; D10 प्रवृद्धो; T G1 प्रमोहाद्; G3–5 M कुरूणां (for कुरुभ्यो). — d) K4 B D (except D8) G2 न सस्मार; K5 नासंसरद्; T G1. 3–5 M अवासृजद् (for न सोऽस्मरद्). K D2. 8 T2 G3 °कामात्

12

C. 5. 750
S. 5. 26. 13
K. 5. 26. 13

न सोऽस्मरद्विदुरं पुत्रकाम्यात् ॥ १२
मानघ्नस्य *आत्मकामस्य चेर्ष्योः
संरम्भिणश्चार्थधर्मातिगस्य ।
दुर्भाषिणो मन्युवशानुगस्य
कामात्मनो दुर्हृदो भावनस्य ॥ १३
अनेयस्याश्रेयसो दीर्घमन्यो-
र्मित्रद्रुहः संजय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
प्रपश्यमानः प्रजहाद्धर्मकामौ ॥ १४
तदैव मे संजय दीव्यतोऽभू-
न्नो चेत्कुरूनागतः स्यादभावः ।
काव्यां वाचं विदुरो भाषमाणो
न विन्दते धृतराष्ट्रात्प्रशंसाम् ॥ १५
क्षत्तुर्यदा *अन्ववर्तन्त बुद्धिं
कृच्छ्रं कुरून्न तदाभ्याजगाम ।
यावत्प्रज्ञामन्ववर्तन्त तस्य
तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥ १६
तदर्थलुब्धस्य निबोध मेऽद्य
ये मन्त्रिणो धार्तराष्ट्रस्य सूत ।
दुःशासनः शकुनिः सूतपुत्रो
गावल्गणे पश्य संमोहमस्य ॥ १७
सोऽहं न पश्यामि परीक्षमाणः

---

(for °काम्यात्).

13 [a]) $K_{1-3}$ $D_{1.3}$ सन्मानघ्नस्यात्म($K_2$ $D_1$ °र्थं)कामस्य; $K_{4.5}$ $D_2$ Cd मानघ्न($K_4$ °स्त)स्यात्मकामस्य; B Dn Ds $D_{3-7}$ मा($D_6$ संमा)नघ्नस्यासौ मानकामस्य; $D_9$ मानार्थस्यात्मकामस्य; $D_{10}$ Ca. s मानघ्नस्य मानकामस्य; T $G_{1.3.5}$ मानघ्नस्याप्यर्थं($T_2$ °नर्थं-; $G_3$ °प्यात्म)कामस्य; $G_2$ संतानघ्नस्यात्मकामस्य; $G_4$ मानस्तस्याप्यन्यकामस्य; M मानात्मनश्चात्मकार्यं ($M_1$ °म)स्य (for मानघ्नस्य *आत्मकामस्य). B $D_{2-4}$ $T_2$ $G_2$ चेर्षो:; $G_1$ राज्ञ:; $G_3$ $M_{3-5}$ चेष्ट्या; $G_4$ $M_2$ corrupt (for चेर्ष्योः). — [b]) $G_3$ संरंभेण (for °रम्भिणः). $T_1$ G (except $G_2$) M स्वार्थं° (for चार्थ°). $T_2$ त्वं भीषणस्यार्थं°. — [c]) K $D_{1.9}$ $G_2$ निष्टू($K_{3.4}$ $D_1$ $G_2$ °ष्टु)रिणो; T $G_{1.3.4}$ M दुर्वारि($T_2$ °दि)णो (for दुर्भाषिणो). $K_2$ $B_1$ $D_{1.2.9}$ $T_1$ $G_{3.5}$ °तिगस्य (for °नुगस्य). — [d]) $K_3$ दुर्हृदौ; B D (except $D_{2.9}$) $T_2$ दौर्हृदैर् ($B_2$ °देर्; Ds $D_{10}$ °दे; $D_1$ सुहृदो); $T_1$ G M दुर्हृदां (for दुर्हृदो). B D (except Ds $D_{1.2.9}$) $T_2$ भावितस्य; Cap. dp अभावनस्य; Ca. d. s भावनस्य (as in text).

14 [a]) $K_4$ $D_{1.2}$ $G_4$ अनयस्य; $K_5$ अज्ञाय तस्य; Ca. d अनेयस्य (as in text). $K_{3-5}$ °दृष्टेः (for °मन्योः). — $M_2$ om. 14[c]–15[b]. — [c]) $K_{4.5}$ साक्षाद् (for राजा). — [d]) $D_1$ $G_{3.4}$ $M_5$ °दृश्य°; $T_1$ $G_2$ $M_{1.3.4}$ °दृश्यं°; $G_1$ °बुध्य°; $G_5$ °दह्य° (for °पश्य°). K B D (except $Dn_2$ $D_{5-8}$) प्राजहा($K_{3.4}$ $D_9$ °ह)द्; S (except $G_2$; $M_2$ om.) प्रजहाति (for प्रजहाद्). S (except $G_2$; $M_2$ om.) अर्थधर्मौ (for धर्मकामौ).

15 $M_2$ om. 15[ab] (cf. v. l. 14). — [a]) S ($M_2$ om.) सदैव (for तदै°). S ($T_2$ before corr; $M_2$ om.) वै; Ca. d. s अभूत् (as in text). — [b]) $K_1$ $D_{1.3}$ न चेत् B Dn Ds $D_{3-7.10}$ $T_2$ (before corr.) मतिः; Ca. d. s [न] चेत् (as in text). $K_3$ B D (except $D_{3.9}$) $T_2$ $G_1$ Ca. s कुरूणाम्; Cd कुरून् (as in text). — [c]) $D_1$ श्रव्यां S (except $G_1$) काम्यां ($T_2$ काव्यां also); Ca. d काव्यां (as in text). K $D_{2.3}$ विदुरं भाषमाणं ($K_{3-5}$ $D_3$ [ब्रु]ब्रुवाणं). — [d]) $D_{10}$ नाविंदत; Ca. d न विन्दते (as in text). K $D_3$ धृतराष्ट्रो नृशंसः; B Dn $D_{3-5.7.10}$ यद्धार्त($B_1$ वै धृत-; $B_4$ $Dn_2$ यद्धृत)राष्ट्रात्प्रशंसां; $D_{1.2}$ धृतराष्ट्र प्रशस्तां ($D_2$ °स्तं); $D_6$ धार्तराष्ट्रात्प्र°; $M_2$ धृतराष्ट्रप्र° (for धृतराष्ट्रात्प्र°).

16 [a]) $G_{3.4}$ यथा (for यदा). — Before अन्ववर्तन्त to avoid hiatus, $K_2$ $G_2$ ins. च; $K_{3-5}$ $D_3$ ते; B Dn Ds $D_{2-7.10}$ $T_2$ $M_3$ न; $D_{1.9}$ $G_{3.4}$ $M_{1.2.4.5}$ तु; $T_1$ $G_1$ हि; $G_5$ अपि! $D_{1.5.6}$ $G_5$ अनु° (for अन्व°). $K_1$ क्षत्तुर्यदान्वावर्तते तत्त्वबुद्धिं. — [b]) B D (except $D_{1.2.3.9}$) $T_1$ सूत (for न). $D_{10}$ जगाम; $G_5$ $M_2$ ह्याजगाम (for अभ्याज°). — [c]) M राज्ञः; Cs तस्य (as in text). — [d]) $D_2$ $M_{1.2}$ °बुद्धिर् (for °वृद्धिर्).

17 [a]) $Ds_1$ $M_5$ तदा (for तद्). $T_1$ $G_1$ M अर्थलुब्धेषु; $G_3$ °ब्धे तु; $G_5$ °ब्धेथ (for °ब्धस्य). K मे($K_4$ ते)स्य; $G_2$ मे त्वं (for मेऽद्य). — [b]) $K_4$ $D_{10}$ दुर्मन्त्रिणो; $G_4$ लुब्धस्य वै (for ये मन्त्रिणो). $K_1$ B $D_{1.3}$ T G धृत° (for धार्त°). — [c]) $K_{1.2}$ B $Dn_2$ Ds सौबलश्च (for सूत°). — $M_2$ (hapl.) om. 17[d]–19[a]. — [d]) Some S MSS. गावद्गणे. $K_5$ संमोहितस्य (for °हमस्य).

18 $M_2$ om. 18 (cf. v. l. 17). — [a]) $K_{1.2}$ $D_{1.3}$ $T_1$ $G_{1.5}$ निरी°; $T_2$ समी° (for परी°). — [b]) = 5. 25.

कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
आत्तैश्वर्यो धृतराष्ट्रः परेभ्यः
प्रव्राजिते विदुरे दीर्घदृष्टौ ॥ १८
आशंसते वै धृतराष्ट्रः सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलं नोपलभ्यो
अत्यासन्नं मद्गतं मन्यतेऽर्थम् ॥ १९
यत्तत्कर्णो मन्यते पारणीयं
युद्धे गृहीतायुधमर्जुनेन ।
आसंश्च युद्धानि पुरा महान्ति
कथं कर्णो नाभवद्द्वीप एषाम् ॥ २०
कर्णश्च जानाति सुयोधनश्च
द्रोणश्च जानाति पितामहश्च ।
अन्ये च ये कुरवस्तत्र सन्ति
यथार्जुनान्नास्त्यपरो धनुर्धरः ॥ २१
जानन्त्येते कुरवः सर्व एव
ये चाप्यन्ये भूमिपालाः समेताः ।
दुर्योधनं चापराधे चरन्त-
मरिंदमे फल्गुनेऽविद्यमाने ॥ २२
तेनार्थबद्धं मन्यते धार्तराष्ट्रः
शक्यं हर्तुं पाण्डवानां ममत्वम् ।
किरीटिना तालमात्रायुधेन
तद्वेदिना संयुगं तत्र गत्वा ॥ २३
गाण्डीवविस्फारितशब्दमाजा-

C. 5. 762
B. 5. 26. 25
K. 5. 26. 25

---

14[b]. D2 G2 °पांडवानां; D9 °जांगलानां (for °सृञ्जयानाम्). — [c]) K4 B1 G2 आप्तै°; D8 अत्यंतै°; T G1. 3-5 M1. 3-5 प्राप्तै° (for आत्तै°). D6 °राष्ट्रस्य पुत्रो; G4 °राष्ट्रः सपुत्रः (for °राष्ट्रः परेभ्यः).

19 M2 om. 19[a] (cf. v. l. 17). — [a]) K4. 5 D1. 9 S (except G2; M2 om.) आशास्ते (for आशं°). K1. 3 Ds D10 G2 om. वै. D6 G4 धृतराष्ट्रस्य पुत्रो; D10 संविधातुं सपुत्रो. — [b]) S मोहाद् (for महा-). — [c]) G4 अस्मिन्; Ca. d. s तस्मिन् (as in text). Ds D8 Ca. d. s क्षेमः (for शमः). K1 D3-7. 9 केवलो नोप°; K3 Dn1 D8 Cd. s केवले नोप°; Ca केवलैर्नोप° (for केवलं नोप°). — [d]) K D1-4. 8. 9 G2 लब्धं संतं (K8 स्वकं; D1. 8. 4 सर्वं; D2 अर्थं); B Dn Ds D5-7. 10 Cs सर्वं स्वकं (B1 स्वकर्मभूतं); T G1. 3 M ह्य(T1 G1 प्र)त्यासन्नं; Ca. d बद्धं संतं (for अत्यासन्नं). K8 D5-7 G4 मन्यते; B M5 Cn मद्गते; Dn Cd. s संगतं; Ds D10 केवलं; Cdp मद्गतं (as in text). K3 चैव सोर्थं; D5-7 G4 मद्गते(D7 °ता)र्थं; Ca. d. s मन्यतेऽर्थम् (as in text).

20 [a]) K3-5 यत्तं (for यत्तत्). K (except K3) D1 T2 G2. 4. 5 कर्णं; Cs कर्णो (as in text). Dn1 D7 S (except M2. 5) वारणीयं; all comm. as in text. — [b]) Dn1 D1. 3. 4. 7. 9 G2. 3 M गृहीत्वायुधम्. B D (except D1. 2. 9) अर्जुनं वै (for अर्जुनेन). — [c]) G3 बहूनि तत्र (for पुरा महान्ति). — [d]) T G1 तदा कर्णो; G3 कस्मात्कर्णो; G4 तदाभवन्; G5 तदा क्वचिन्; M तदा (M2 भो) कथं (for कथं कर्णो). K Dn1 D1 G3 M1 Cd द्वीपम्; T G1. 2. 4. 5 M3-5 वीर्यम्; Ca. n द्वीपः (as in text).

21 [b]) K3-5 द्रोणोपि (for द्रोणश्च). K4 तथा कृपश्च (for पिता°). — [c]) K1 तथान्ये (for अन्ये). K2-4 अपि (for च). G5 वै (for ये). G5 संवसंति (for तत्र सन्ति). — [d]) D2 परो; G2 वरो (for अपरो).

22 [a]) K1. 5 D2 G2 एवं; K3 ते; B Dn Ds D3-8. 10 T G1. 4. 5 एतत्; D1 एनं; D9 एव (for एते). — [c]) K5 B D (except D1. 8. 9) T2 (after corr.) G4 दुर्योधने; T (T2 before corr.) G1. 3. 5 M °धनो (for °धनं). B Dn Ds D3-8. 10 T2 राज्यमिहाभवद्यथा; D1 चापराधेन रक्तं; T1 G1. 2. 5 M1 नापराध्येच्चरंतं; G3 नापरध्ये च°; G4 नापराध्यो च°; M2-4 नापराद्धे च°; M5 नापरार्थे च°. Ca. d cite दुर्योधनस्यापराधेन चरंतं. — [d]) D10 ह्यरिंदमे. N (except D1) G1. 2 T2 फाल्गुने.

23 [a]) K5 Ds2 D10 केन; S (except G2) ततो; Ca. d. s तेन (as in text). B Dn D3-7. 9 अनुबंधं; Ds1 D2. 10 S (except M3. 4) अर्थबंधं; Ca. d. s अर्थबद्धं (as in text). — [b]) K4. 5 G2 हंतुं; Ds D1 कर्तुं; Ca. d. s हर्तुं (as in text). Ds1 D1. 10 T2 G3. 4 M Cs पांडवानां ममेति (Ds1 D1 Cs ममत्वं; D10 ममत्तं); T1 G1. 5 जीवतां पांडवानां. Ca. d cite ममत्वं (as in text). — [d]) K2 Ds2 D7 तद्वेदिता; T G (except G2) °दिनः; Ca. d. s °दिना (as in text). K1. 3. 4 Dn1 D9 संयुगे; T1 G4 संगरं; Cn संयुगं (as in text).

24 [a]) D10 गांजीव°; S °शब्दमात्रं. — [b]) K3-5 अश्रृण्वंतो; S (except G2) श्रुत्वैव (T2 M3-5 °वै-) ते (for अशृण्वाना). D2 ह्रियंते; T G (except G2) त्रियंते; M ह्रि(M2 प्रि)यंते; Ca. d भ्रियन्ते (as in text) — [c]) B

C. 5. 913
B. 5. 30. 47
K. 5. 30. 50

न हीदृशाः सन्त्यपरे पृथिव्यां
ये योधका धार्तराष्ट्रेण लब्धाः ।
धर्मस्तु नित्यो मम धर्म एव
महाबलः शत्रुनिबर्हणाय ॥ ४५
इदं पुनर्वचनं धार्तराष्ट्रं
सुयोधनं संजय श्रावयेथाः ।
यस्ते शरीरे हृदयं दुनोति
कामः कुरूनसपत्नोऽनुशिष्याम् ॥ ४६
न विद्यते युक्तिरेतस्य काचि-
न्नैवंविधाः स्याम यथा प्रियं ते ।
ददस्व वा शक्रपुरं ममैव
युध्यस्व वा भारतमुख्य वीर ॥ ४७

इति श्रीमहाभारते उद्योगपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

## ३१

युधिष्ठिर उवाच ।
उत सन्तमसन्तं च बालं वृद्धं च संजय ।
उताबलं बलीयांसं धाता प्रकुरुते वशे ॥ १
उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २
अलं विज्ञापनाय स्यादाचक्षीथा यथातथम् ।

45 B1 missing (cf. v. l. 37). — a) D3 D5.6.8.10 T2 G3.4 M परे; T1 पुरे; G5 हि ते (for अपरे). — b) D2 ये वै योधा; G4.5 ये ये योधा; M ये यौधका. Ca.d cites योधकाः. S (except G2) °राष्ट्रस्य (for °राष्ट्रेण). T1 G1 सूत; T2 G3.5 M राज्ञः; G4 संति (for लब्धाः). — c) T G1.3.4 M युक्तो; G5 स्तुत्यो; Ca.d.s नित्यः (as in text). D1.9 सम-; Ca.d.s मम (as in text). S नित्यं (G2 एकः); Ca.d.s धर्मः (as in text). Ds2 एष; Ca.s एव (as in text).

46 B1 missing (cf. v. l. 37). — a) K5 D3 एवं (for इदं). D3 पूर्वं (for पुनर्). — b) S (except G2) सुयोधनं मद्वचनेन ब्रूहि. — G3 is broken from 46c up to 47a. — c) K1 शरीरं; Cd.s शरीरे (as in text). — c) Ca हृत्+अयं; Cd.s हृदयं (as in text). — d) K3 B (B1 missing) सपत्नो; D2 न सकामो; D9 संपन्नो; Ca असपत्नः (as in text). Cd cites असपत्नान्; Cs सपत्नान्.

47 B1 missing (cf. v. l. 37). — a) G3 broken (cf. v. l. 46). K हेतुरस्याजमीढ (for युक्तिरेतस्य काचिन्). Ca.d cite युक्तिः, Cs युक्तं. — b) K1.2 नैवं करिष्यामि; K3.4 D3 T1 G3-5 M1.3.4 नैवं विधास्यामि (K4 D3 M1.3.4 °म). — c) D1 तद्देहि; Ca ददस्व (as in text). T G (except G2) वै; Ca वा (as in text). K3 B (B1 missing) Dn D3-5.7 G5 Ca शक्रपुरीं; D6 शत्रुपुरीं; Cs शक्रप्रस्थं; Cd शक्रपुरं (as in text). — d) D9 वीरैः (for वीर).

Colophon om. in B1. — *Sub-parvan:* K B2-5 D T1 G1 M2-5 संजययान. — *Adhy. name:* B3 युधिष्ठिरसंदेशः; T1 M1 कुशलवाक्यप्रेषणं; G1.5 कुशलवाक्यप्रस्थानं (G5 °स्थापनं); M2.3.5 कुशलप्रश्नवाक्यं; M4 कुशलप्रश्नं. — *Adhy. no.* (figures, words or both): K1 D5.7 29; B3 S 30; D6 (*sec. m.*) 31. — *S'loka no.:* K5 46; Dn 48; D3 51.

**31**

☞ This adhy. is missing in B1 (cf. v. l. 5. 30. 37).

1 a) G3 broken. D1 ततः; Ca.d उत (as in text). K (except K4) B5 Dn D3.4.6-8 G2 वा (for च). — b) T1 जितं; T2 G1 जडं; G2-5 M जळं (for बालं). B2 T2 G3.5 M वीरं; B3.4 Ds D1.8-10 T1 G1.2 धीरं (for वृद्धं). K3 तथैव च (for च संजय). — c) B3.5 Dn2 D6 बालं (for अबलं). G3 M उत बालमबालं च (G3 वा).

2 2cd = (var.) 3. 31. 21cd. — c) K1.2 M दधा(M1 *sup. lin.* दा)ति; Ca ददाति (as in text). — d) G4 Ca.d.s शुक्र उचरन्; Cap.sp शुक्रमु° (as in text).

3 a) G3 broken. B (B1 missing) D (except D1.2.8.9) बलं; Cd.s अलं (as in text). K (except K4) विज्ञापनं यस्माद्; B (B1 missing) Dn Ds D3-8.10 जिज्ञासमानस्य; D1 विज्ञायमानस्य; D2 विज्ञापनायास्य; M1.2 विज्ञापनाय स्यां; M3.5 विज्ञापनाय त्वं (for विज्ञापनाय स्याद्). Cd cites अलं विज्ञापनाय, Cs अलं विज्ञापनं. — b) D1

अथो मन्त्रं मन्त्रयित्वा अन्योन्येनातिहृष्टवत् ॥ ३
गावल्गणे कुरून्गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ॥ ४
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम् ।
तवैव राजन्वीर्येण सुखं जीवन्ति पाण्डवाः ॥ ५
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिंदम ।
राज्ये तान्स्थापयित्वाग्रे नोपेक्षीर्विनशिष्यतः ॥ ६
सर्वमप्येतदेकस्य नालं संजय कस्यचित् ।
तात संहत्य जीवामो मा द्विषद्भ्यो वशं गमः ॥ ७
तथा भीष्मं शांतनवं भारतानां पितामहम् ।
शिरसाभिवदेथास्त्वं मम नाम प्रकीर्तयन् ॥ ८
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः ।
भवता शंतनोर्वंशो निमग्नः पुनरुद्धृतः ॥ ९
स त्वं कुरु तथा तात स्वमतेन पितामह ।
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ १०
तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ।
अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरः ॥ ११
अथो सुयोधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनमनुनीय पुनः पुनः ॥ १२
अपश्यन्मामुपेक्षन्तं कृष्णामेकां सभागताम् ।

C. 5. 928
B. 5. 31. 13
K. 5. 31. 13

ins. अपि before आचक्षीथा. M3-5 यथा तथा; Cs °तथम् (as in text). — G2 om. 3[cd]. — [c]) K1 अपि; K2.3.5 अलं; K4 B2.4.5 Dn D3.4.7 अथ (for अथो). S (G2 om.) अथोपमंत्रयेथास्त्वम्. — [d]) Before अन्योन्येन, D1 ins. तु; D9 हि. T2 Cd अन्योन्यम् (for °न्येन). G3 अत्र (for अति-). K1 D2.9 अभिघृष्ट(D9 °ष्ण)वत्; K2-5 अतिधृ(K3 °हृ)ष्ट° (for अतिहृष्ट°). B4.5 Dn Ds D3-8.10 याथातथ्येन हृष्टवत्; Cs अतोऽन्यैरभिघृष्टवत्. Cd cites धृष्णवत्.

4 [a]) G3-5 spell गावद्गणे. — [b]) D1 महामतिं; M1 जनेश्वरं (for महाबलम्). — [c]) K3-5 °संगम्य (for °संगृह्य). — [d]) K3 पुनः (for ततः).

5 [a]) K4.5 D9 चैव (for चैनं). K4.5 एनम्; G4 उप-; G5 तम्; M सम्- (for त्वम्). — [c]) D9 तथैव (for तवैव).

6 [a]) K3 संप्राप्ता; K4.5 प्राप्तास्ते (for बालास्ते). — [b]) K2 अनुत्तमं; D9 अरिंदमाः. K3-5 राज्यं चैव सुखानि च. — [c]) D9 राष्ट्रे (for राज्ये). S (except T G2) च (for तान्). K3-5 आदौ (for अग्रे). — [d]) G3 broken. K5 D9 M मा (M1 *sup. lin.* न as in text). K1.2.4 मो(K4 नो)पेक्षीवैं विनंक्ष्य(K2 °नश्य)तः; B (B1 missing) Ds D5-7.10 नोपेक्षस्व विनश्यतः; D1 नोपेक्षिष्टाश्च शिष्यते; T1 G1.2 नोपेक्षेथा विनश्यतः; T2 नोपेक्षिष्टा नशिष्यतः; G4 नोपेक्षेथा नशिष्यथाः; G5 नोपेक्षीर्विनशिक्ष्यसि.

7 [b]) S (except T2) भारत (for संजय). D8 कर्हि° (for कस्य°). — [c]) G4 नाथ; M तस्मात्; Cs तात (as in text). T1 G1.5 M2 संगत्य (for संहत्य). — [d]) B (B1 missing) D (except D1.2.9) द्विषतां मा (for मा द्विषद्भ्यो). Cs cites द्विषतां. K4 Ds2 T1 G1 गताः (for गमः).

8 T1 reads 8[ab] twice (with v. l.). — [a]) D1.9 T1 (both times) G अथ (for तथा). — [b]) K1 B3 Ds D5.9.10 T2 भरतानां. K1.2 अनुत्तमं; D9 T1 (first time) M2 असमंचपं; G3 M1.3-5 अमध्यमं (for पितामहम्). — [c]) K1 (hypermetric!) शिरसाभिवादयेथास्त्वं; K3 शिरसाभिववंदेथाः; T1 G (except G2) शिरसा चाभिवंदेथाः. — [d]) K3 त्वं मे (for मम).

9 [b]) D1 तातो; D9 तथा; S (except T2 G2) त्वया (for ततो). — [c]) A few MSS. शांतनोर्.

10 [a]) K4 सर्वं (for स त्वं). K2.4 यथा (for तथा). — [b]) D2 सुखेनैव (for स्वमतेन). — [c]) K3 D7 ते पुत्राः; M1 पौत्रास्ते (by transp.). — [d]) S (except T2 G2) °युक्ताः (for °मन्तः).

11 [c]) D1 सौम्यभावश्च; S (except T2 G2) सौम्य भाषेथाः. — [d]) D1 G2 मित्र°; D9 मैत्र°; T G1.3-5 M शम° (for हित°). K D (except Ds D1.9) T2 युधिष्ठिरे (K4 °रं).

12 [a]) K5 B3.4 D T2 G2 अथ (for अथो). K4 B3 D (except D9) T2 G2 दुर्योधनं. — [d]) Ds अवमन्य; M अनुमान्य (for अनुनीय).

13 [a]) K1.3.5 अपाप्मानम्; K2 अपापां ताम्; B (B1 missing) Dn2 Ds D3-8.10 T2 अपापां यद्; Dn1 अपायं यद्; D1 अपश्येस्ताम्; T1 G M3.4 अपश्यं माम् (for अपश्यन्माम्). K (except K4) B3.4 Dn D3-8 T2 उपैक्षस्त्वं; B2.5 उपैक्षंतं; Ds D10 उपै(Ds2 °पे)क्षंत; D1 उपेक्ष्यंतीं; D2 उपेष्यंति; T1 G3.5 अपेक्षंतीं; G1.4 अत्रेक्षंतीं; G2 उपेक्षंतीं (for उपेक्षन्तं). — [b]) B3-5 Dn Ds D3-7.9.10 T2 कृष्णामेतां; D1 दृष्ट्वा कृष्णां. B2 G3 सभां गतां. — 13[cd] = 15[cd]. — [c]) K D7 च तितिक्षामो; B2.4 Dn D3.4 वै तिति°; B3 D9 T2 G4 M अतितिक्षामो; D2 व्यतितिक्षामो; D8 संतिति°; Cd.n अतितिक्षाम (as in text).

C. 5. 928
B. 5. 31. 13
K. 5. 31. 13

तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ १३
एवं पूर्वापरान्क्लेशानतितिक्षन्त पाण्डवाः ।
यथा बलीयसः सन्तस्तत्सर्वं कुरवो विदुः ॥ १४
यन्नः प्राव्राजयः सौम्य अजिनैः प्रतिवासितान् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ १५
यत्तत्सभायामाक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ १६
यथोचितं स्वकं भागं लभेमहि परंतप ।
निवर्तय परद्रव्ये बुद्धिं गृद्धां नरर्षभ ॥ १७
शान्तिरेवं भवेद्राजन्प्रीतिश्चैव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥ १८
कुशस्थलं वृकस्थलमासन्दी वारणावतम् ।
अवसानं भवेदत्र किंचिदेव तु पञ्चमम् ॥ १९
भ्रातॄणां देहि पञ्चानां ग्रामान्पञ्च सुयोधन ।
शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह संजय ॥ २०
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।

---

— [d]) K (except K5) D8.9 वधीः स्म; D1 वधीस्त्वं; G3-5 M वधिष्ठाः; Cn वधीम (for वधीष्म).

14 T1 G5 om. 14; M1 om. 14–15. G1 reads 14 after 16. — [a]) Ds पूर्वान्परान्. G2 दुःखान्; G3 दोषान् (for क्लेशान्). — [b]) K4 तितिक्षंति च; G1.3.4 M (M1 om.) तितिक्षंत्येव (for अतितिक्षन्त). — [c]) D2 सर्वे; M (M1 om.) अथो (for यथा). K4 राजन् (for सन्तः). K1.2 D3 यथावलीढमर्धं (K1 °र्थं) च; B (B1 missing) Dn Ds D3-7.10 T2 बलीयांसोपि संतो यत्; D1.9 G2 अद्धा (G2 युद्धाद्) बलीयसः संतः; G1 अतो बलीयांसः संतः; G3 अतो बलीय्याः शंसंतः; G4 अथो बलीयांसं तस्माः. Ca cites अर्धं, Cd अर्धं अवलीढं. — [d]) D8 सत्यं (for सर्वं).

15 M1 om. 15 (cf. v. l. 14). — [a]) K3-5 यत्तत्; D1 यत्तान् (for यन्नः). K प्रव्राजनं; B3 D5 T2 प्रव्राजयः; Dn D7 प्राव्राजयेः; D1.2 प्रव्राजयन्; D3.4 T1 G1.2.5 M (M1 om.) प्रव्राजयेः; D8 प्रव्राजितं; D9 प्राव्राजयत्; G3.4 प्रव्राजयेत् (for प्राव्राजयः). D1 G5 सौम्यान्; D2 सम्यग्; G3 सर्वान् (for सौम्य). — [b]) K (except K3) प्रतिवासनं; S (except T2 G2; M1 om.) परिवारितान् (for प्रतिवासितान्). — $15^{cd} = 13^{cd}$. — [c]) K3 च तितिक्षाम; K4.5 D3 संतितिक्षामो; Dn1 D3.4.7 G4 अतितिक्षामो. B (B1 missing) Ds D5.6.10 T2 अ(D5.6 प्र)तितिक्षामहि च तत् (B2.4 °महे तच्च; Ds °महि च तं; D10 °म दुःखं तत्; T2 °म च तत्). — [d]) K D8.9 वधीः स्म; D2 G3-5 M3-5 वधिष्ठाः; M2 पतिष्ठाः (for वधीष्म).

16 For sequence of G1, cf. v. l. 14. — [a]) B2.3.5 Ds D1.2.5-8.10 G2 यत्तत् (B2 D2 यत्तु; D5m.7 यत्र) कुंतीम् (D1 धर्मम्; G2 धर्म्यम्) अतिक्रम्य; B4 Dn D3.4.9 T2 (before corr.) यत्कुंतीं समतिक्रम्य. — [b]) K B2.5 D1 अकर्षं° (for अधर्षं°). — After 16, T1 G5 *repeat* 14 (v. l.: तितिक्षंत्येव for अतितिक्षन्त, and अतो for यथा).

17 [a]) K D9 यथोदितं; B4 Dn D3.4.7.10 T2 अथोचितं (for यथोचितं). D7 निजं (for स्वकं). — [c]) K2 कृतां बुद्धिं; B (B1 missing) D (except D1.2.9) T2 परद्रव्यात् (for °द्रव्ये). — [d]) K कृतां बुद्धिं (K2 परद्रव्ये) (for बुद्धिं गृद्धां). Dn1 गूढां; Ds2 D9 गृध्नां; D1 गृध्रां; D3.4.7 ऋद्धां; T1 G1.4.5 श्रद्धां; Cn गृद्धां (as in text). K3.5 नराधिप; D1 G2 परंतप; D9 नरेश्वर (for नरर्षभ).

18 [a]) Ds1 T1 G1.3.4 M एव; D1.2 G2 चैव (for एवं).

19 =(var.) 5. 70. 15; (var.) 5. 80. $7^{cd}$–$8^{ab}$. — [a]) K Dn D1-4.5(*sup. lin.*).7-10 M2 अविस्थलं; Ds कुशस्थूणं (for कुशस्थलं). Ds1 वृकस्थूणं; G3 वृकस्थं च (for वृकस्थलं). — [b]) K2 D1 M1.3.4 आसंदीं; K3 B (B1 missing) Dn D2-4.6.8.9 M2 माकंदीं; Ds D5.7.10 माकंदी; T1 वावंतीं; T2 G5 अवंतीं; G1 वसंतीं; G2 माकंदं; G3 अप्यवंतीं; G4 अवंतं (for आसंदी). — [c]) K1.2 G5 °स्थानं; T1 °सन्नं; G4 °धानं; M (except M2) °साने (for °सानं). B4 Dn D3.4.7.9 भवतु (for भवेद्). D2 यत्र; T1 G1.4.5 M (except M2) तत्र (for अत्र). K5 भवेत्किंचित्; G3 च भवतः (for भवेदत्र). G2 प्रयच्छ चतुरो ग्रामान्. — [d]) Ds D5.8.9 T2 G2.4 कंचिद् (for किंचिद्). K4 B (B1 missing) D (except D1.2.9) M2 एकं; G3 त्वपि (for एव). N (except D1.2.9; B1 missing) G3 M2 च (for तु). K5 देयं चैवात्र पंचमं. — G2 *repeats* 19, with v. l.: अविस्थलं कुशस्थलं (for [a]) and कंचिदेव तु पंचमं (for [d]).

20 [a]) B3 मम (for देहि). D9 सर्वेषां (for पञ्चानां). — [b]) K5 B5 D (except D1.2.9) T2 पंच ग्रामान् (by transp.). — Cf. 5. 80. $7^{ab}$. — [c]) Ds मे (for नो). K2.3 Ds D5-7 °प्रज्ञ (for °प्राज्ञ). — [d]) T1 G1.4.5 M1.3.4 भ्रातृ° (for ज्ञाति°). T1 G (except G2) भारत (for संजय).

21 [a]) D10 G5 अभ्येतु (for अन्वेतु). — [c]) T1 G4

स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह ॥ २१
अक्षतान्कुरुपाञ्चालान्पश्येम इति कामये ।
सर्वे सुमनसस्तात शाम्याम भरतर्षभ ॥ २२
अलमेव शमायास्मि तथा युद्धाय संजय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## ३२

वैशंपायन उवाच ।
अनुज्ञातः पाण्डवेन प्रययौ संजयस्तदा ।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥ १
संप्राप्य हास्तिनपुरं शीघ्रं च प्रविवेश ह ।
अन्तःपुरमुपस्थाय द्वाःस्थं वचनमब्रवीत् ॥ २
आचक्ष्व मां धृतराष्ट्राय द्वाःस्थ
उपागतं पाण्डवानां सकाशात् ।
जागर्ति चेदभिवदेस्त्वं हि क्षत्तः

C. 5. 942
B. 5. 32. 4
K. 5. 32. 12

---

स्तूय° (for स्मय°). K5 Dn सभां यांतु (for समायान्तु). — d) K5 पांडवाः; some N MSS. पंचालाः (for पाञ्चालाः).

22 a) G1 हर्षितान् (for अक्षतान्). — b) K B5 D (except Ds D1.10) T G (except G2) पश्येयम् (for पश्येम). — d) K D1.8 G (except G2) शाम्या(K8 पश्या)मो; D9 यत्समो (for शाम्याम). M (except M1) भरतर्षभाः.

23 a) D1 शमं यामि; G1 शमं याम (for शमायास्मि). — b) D2 यथा (for तथा). B2 भारत (for संजय). — c) Ds धर्मान्वयो बलं चाहं. Ca cites अलं. — d) G5 उत वै (for मृदवे). M (except M1) वा (for च).

Colophon om. in B1. — *Sub-parvan:* K1.2.4 B (B1 om.) D T2 G1.5 M2-5 संजययान. — *Adhy. name:* T2 संदेश***योगः; G1 धर्मपुत्रसंदेशः; M ग्रामपंचकप्रार्थनं. — *Adhy. no.* (figures, words or both): K1 D8 S 31; D5.7 30; D6 (*sec. m.*) 28. — *S'loka no.:* K5 Dn D8 23.

☞ After adhy. 31, S (except T2 G2) reads (with v. l.) 5. 64. 3-11, for the first time, *repeating* the stanzas in their proper place.

### 32

☞ This adhy. is missing in B1 (cf. v. l. 5. 30. 37).

1 a) K4.5 D1.2 G2 सोनुज्ञातः. — b) K1 transp. प्रययौ and संजयः. — After 1, S (except T2 G2) ins.:

160* ततस्तु संजयः क्षिप्रमेकाह्नैव परंतप ।
याति स्म हास्तिनपुरं निशाकाले समाविशत् ।

[ (L. 1) T1 G1.4.5 तदा (for ततस्). T1 G5 एकाह्ने च; G1 एकाहेन. — (L. 2) T1 G1.3.5 परंतप; M1 च प्राविशत् (for समाविशत्). G4 गजवाजिसमाकुलं (for posterior half). ]

2 a) K1-3 Ds D10 G5 M (except M1) स (for सं-). D3 T1 G (except G2) हस्तिनपुरं; Ca हास्तिन° (as in text). — b) B (B1 missing) D शीघ्रमेव प्रविश्य च; T1 G1.4.5 शीघ्रमश्वैर्महा(T1 G4 °नो)जवैः. Ca cites शीघ्रमेव प्रविश्य. — c) K1.2.4 D2 T1 G5 M2 उपास्थाय; K8 B2.4.5 Dn D3.4.9 समास्थाय.

3 Before 3, G3.4 M ins. संजयः. — a) Some MSS. द्वास्थ. M3 om. द्वाःस्थ. D9 आचक्ष्व धृतराष्ट्रस्य द्वाःस्थ त्वं मां (sloka rhythm!). — b) K2.3.5 D9 समागतं (for उपा°). G2 दिदृक्षया द्वारमुपागतस्ते. — For 3ab, B (B1 missing) D (except D1.2; for D9 see above) T2 subst. (the anuṣṭubh lines):

161* आचक्ष्व धृतराष्ट्राय द्वाःस्थ मां समुपागतम् ।
सकाशात्पाण्डुपुत्राणां संजयं मा चिरं कृथाः ।

— c) K8 इति; K4 अधि- (for अभि-). T1 G1.5 अभिवाद्योपवृत्तः; G3 अभिवंद्यप्रवृत्तो (for अभिवदेस्त्वं हि क्षत्तः). B (B1 missing) Dn Ds D2 m.3-8.10 T2 द्वाःस्थ; G4 द्वारस्थ (for क्षत्तः). — d) Dn1 प्रवेश्ययां; D2-4 प्रवेशय मां; G1.4 M2 प्रवेश(G4 °शे)यं; G3.5 निवेद्योयं (G5 °हं) (for प्रविशेयं). K1.4 D3 वै विदितो; D3.4 विदितोंतः (for विदितो). — For 3cd, G2 reads 4cd for the first time, *repeating* it in its proper place. — After 3, B (B1 missing) D (except D1.2.9) T2 ins.:

162* निवेद्यमत्रात्ययिकं हि मेऽस्ति
द्वाःस्थोऽथ श्रुत्वा नृपतिं जगाद ।;

C. 5. 942
B. 5. 32. 4
K. 5. 32. 12

प्रविशेयं विदितो भूमिपस्य ॥ ३

द्राःस्थ उवाच ।

संजयोऽयं भूमिपते नमस्ते
दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पाण्डवानां सकाशा-
त्प्रशाधि राजन्किमयं करोतु ॥ ४

धृतराष्ट्र उवाच ।

आचक्ष्व मां सुखिनं काल्यमस्मै
प्रवेश्यतां स्वागतं संजयाय ।
न चाहमेतस्य भवाम्यकाल्यः
स मे कस्माद्द्वारि तिष्ठेत क्षत्तः ॥ ५

वैशंपायन उवाच ।

ततः प्रविश्यानुमते नृपस्य
महद्वेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद
वैचित्रवीर्यं प्राञ्जलिः सूतपुत्रः ॥ ६

संजय उवाच ।

संजयोऽहं भूमिपते नमस्ते
प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान् ।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी
युधिष्ठिरः कुशलं चान्वपृच्छत् ॥ ७
स ते पुत्रान्पृच्छति प्रीयमाणः
कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च ।
तथा सुहृद्भिः सचिवैश्च राज-
न्ये चापि त्वामुपजीवन्ति तैश्च ॥ ८

धृतराष्ट्र उवाच ।

अभ्येत्य त्वां तात वदामि संजय
अजातशत्रुं च सुखेन पार्थम् ।
कच्चित्स राजा कुशली सपुत्रः
सहामात्यः सानुजः कौरवाणाम् ॥ ९

---

while G2 ins.:

163* जागर्ति चेदभिवाद्यस्य पादौ
निवेद्याहं पाण्डवोक्तिं सयुक्तिम् ।

4 ab) G2 transp. नमस्ते and दिदृक्षया. G3.5 M दिदृक्षते (for °क्षया). M त्वां (for ते). — c) K4.5 D8 आप्तो (for प्राप्तो). G3 द्रुतः; G4 सूतः (for दूतः).

5 G3.4 om. the ref. — a) Dn1 D1 M3.4 मा (for मां). The portion of the text from कुशलिनं (5a) up to परस्त्वेनं (26e) is written (*sec. m.*) in D2 on a subst. folio. B4.5 Ds D2-4.7.9 G5 कुशलिनं; Dn दुःखितं Dn2 °नं) (for सुखिनं). K B4.5 D Ca.d.s कल्पम्; B2.3 T2 G5 M3-5 कल्यम्; G4 कार्यम्; M1 भव्यम् (for काल्यम्). — c) N (B1 missing) Cs अकल्पः; T2 अकल्प्यः; M3 अकल्यः; Ca.d अकाल्यः (as in text). — d) Dn2 हि (for मे). K D1-4.7-9 G2 तिष्ठति द्वारि; B (B1 missing) D5.6.10 G1 द्वारि तिष्ठेच्च; T2 द्वारि तिष्ठेद् (for द्वारि तिष्ठेत). N (B1 missing) G2 Ca.s सक्तः (K2 रुद्धः; B4 D5.6 शक्तः); T2 Cd अशक्तः; G1.4.5 सूतः (for क्षत्तः).

6 D10 T1 G5 om. the ref. — a) D8 (marg. *sec. m.*) अनुमतेर्; G5 °मतो. — b) Ds2 T1 G1.5 महावेश्म. G4.5 प्राप्य (for प्राज्ञ-). S (except G2.4) -अभिगुप्तं; Cd आर्यगुप्तम् (as in text). — c) K सिंहासने; D9 महासनस्थं (for सिंहासनस्थं).

7 D9 G4 om. the ref. — a) = (var.) 4a above. — b) D1.5.6 G2 om. अस्मि. D1 नरदेवान्स्म; G2 °देवासि (for °देव). D1-4.7.9 G1.2.4 पार्थान् (for पाण्डवान्). — c) G4 M °वादयन् (for °वाद्य त्वां). K2 मनीषी (marg. *sec. m.* as in text). — d) Dn2 सर्वेषां नः (for युधिष्ठिरः). K3 चाभ्यपृच्छत्; K4 वा चान्वपृच्छत्; B3 चान्वपृच्छेत्; M त्वा(M3 चा)नुपृच्छे(M1.2 °च्छ)त्.

8 a) D8 ते स (by transp.). T1 G1 स ते पुत्रः; G3 सपुत्रं त्वां (for स ते पुत्रान्). G3 om. from पुत्रान् up to the end of 11. — d) D9 om. अपि. K3 अनु° (for उप°).

9 D7 (hapl.) om. 9 and the ref. before 10; G3 om. 9 (cf. v. l. 8). — a) K2 D9 अप्येवं; B (B1 missing) Dn Ds D2-6.8.10 T2 अभिनंद्य; Cs अभ्येत्य (as in text). M त्वा; Cs त्वां (as in text). K1 तु; K4 नु (for तात). — b) K (except K1) Dn1 D2-4 °शत्रुः and पार्थः. Cn.s cite अजातशत्रुं. D9 अजातशत्रुश्च सुबोधनश्च. — c) K5 राजा; Dn2 T1 G4.5 च राजा (for स राजा). T1 G1.4.5 सूतपुत्र (for सपुत्रः). — d) K1-3 सहामात्यैः. D3 सहानुजः. D1 पांडवानां; G4 कौरवाग्र्यः (for कौरवाणाम्).

10 G3 om. 10 (cf. v. l. 8); D7 om. the ref. (cf.

संजय उवाच ।

सहामात्यः कुशली पाण्डुपुत्रो
भूयश्चातो यच्च तेऽग्रे मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमाञ्शीलवांश्च ॥ १०

परं धर्मात्पाण्डवस्यानृशंस्यं
धर्मः परो वित्तचयान्मतोऽस्य ।
सुखप्रिये धर्महीने न पार्थो-
ऽनुरुध्यते भारत तस्य विद्धि ॥ ११

परप्रयुक्तः पुरुषो विचेष्टते
सूत्रप्रोता दारुमयीव योषा ।
इमं दृष्ट्वा नियमं पाण्डवस्य
मन्ये परं कर्म दैवं मनुष्यात् ॥ १२

इमं च दृष्ट्वा तव कर्मदोषं
पापोदर्कं घोरमवर्णरूपम् ।
यावन्नरः कामयतेऽतिकाल्यं
तावन्नरोऽयं लभते प्रशंसाम् ॥ १३

अजातशत्रुस्तु विहाय पापं
जीर्णां त्वचं सर्प इवासमर्थाम् ।
विरोचतेऽहार्यवृत्तेन वीरो
युधिष्ठिरस्त्वयि पापं विसृज्य ॥ १४

अङ्गात्मनः कर्म निबोध राज-

C. 5. 954
B. 5. 32. 16
K. 5. 32. 24

---

v. l. 8, 9). — $^{a}$) K (except $K_5$) धर्म° (for पाण्डु°). — $^{b}$) $K_4$ B ($B_1$ missing) D (except $D_{1.9}$) $T_2$ Ca.s बुभूषते; $T_1$ भूयश्चांते; M Cap भूयश्च ते; Cd भूयश्चातो (as in text). $K_3$ ये च; $D_1$ यश्च; $D_{2-4}$ यत्र (for यच्च). Ca.d.s cite यत्. $K_4$ B ($B_1$ missing) $Dn_2$ $D_{2-4}$ $T_2$ -त्मनो; Ca.d.s.np मनो (as in text). — $^{c}$) $K_5$ निर्णीत; $G_5$ निर्णीय; Ca.d निर्णिक्त- (as in text). — $K_4$ (hapl.) om. from धर्मार्थ° up to सुखप्रिये (in $11^{c}$). $T_1$ $G_1$ तपस्वी; $G_{4.5}$ तरस्वी (for मनस्वी). — $^{d}$) $B_3$ तुष्टिमान्; Ds तृप्तिमान्; $D_{2-4}$ बलवान्; $G_2$ धृष्टिमान् (for दृष्टिमान्).

11 $G_3$ om. 11 (cf. v. l. 8); $K_4$ om. up to सुखप्रिये in $11^{c}$ (cf. v. l. 10). — $^{a}$) K ($K_4$ om.) $D_{1.7}$ $T_1$ $G_{1.5}$ Cn परो; $G_2$ परात्; Cd.s परं (as in text). K ($K_4$ om.) $D_{1.7.9}$ $G_5$ धर्मः; Ca.d.s धर्मात् (as in text). — $^{b}$) $D_9$ Cd °चर्यात्; Ca.s °चयात् (as in text). — $^{c}$) $K_5$ °प्रिये न; $D_1$ $G_5$ °प्रियो (for °प्रिये). $D_1$ °हीनो; Cs °हीने (as in text). $K_4$ $B_2$ न धर्म्यान्; $B_{3.4}$ $Dn_2$ $D_{3.10}$ $M_{2.5}$ न पार्थे; $D_9$ न पार्थं; Cn अनपार्थे (for न पार्थो). Cnp पार्थः (as in text). — $^{d}$) $K_4$ $B_2$ न रुध्यते; $D_9$ अनुरुध्ये; $G_4$ निरुध्यते; Cs अनुरुध्यते (as in text). $K_{3.5}$ Ds $D_{1.8}$ Ca.d.s भावतः; Cap भारत (as in text). $K_4$ B ($B_1$ missing) D (except $Ds_2$ $D_9$) $T_2$ तस्य बुद्धिः; $T_1$ (by transp.) विद्धि तस्य; $G_{1.2.4}$ तद्धितस्य; $G_5$ तद्धितं च. — After 11, $G_{1.4.5}$ M (except $M_2$) read $25^{ab}$, which is followed by:

164* अकुर्वतः सिध्यति चापि सर्वं
तस्मादाहुः पुरुषं कर्मणोऽन्यत् ।

[ (L. 1) $M_{1.4}$ साधु (for सर्वं). — (L. 2) $G_4$ पौरुषं. $G_1$ कर्मणो हि; $G_4$ कर्म दैवं; $G_5$ कर्मणोथ; $M_{1.4}$ कर्मणोपि. ]

— After 164*, $G_{1.4.5}$ M (except $M_2$) read $25^{cd}$ and $26^{ab}$ for the first time, *repeating* them in their proper place.

12 $^{a}$) $K_1$m दैव-; $D_7$ $G_4$ परः; Ca.d.s पर- (as in text). — $^{b}$) = 5. 39. $1^{b}$. $D_{7.9}$ धातु°; $G_3$ दाम° (for दारु°). — $^{c}$) $K_2$ $G_2$ इमं च; $D_1$ इमं तु (for इमं). $G_4$ निश्चयं; Ca.d.s नियमं (as in text). K (except $K_5$) पार्थिवस्य (for पाण्ड°). — $^{d}$) $G_3$ (in addition to the text reading) नान्यत्रास्तीह लोके परत्र.

13 $^{b}$) S (except $T_2$) पापोदयं. $K_{1.3}$ $G_2$ घोरमरूपवर्णं; $D_1$ घोररूपमवर्णं; $D_{2-4}$ $G_1$ घोरमवर्ण्यरूपं; Ca as in text. Cd cites अरूपवर्णं, Cs अवर्णरूपं (as in text). — $G_2$ om. $13^{cd}$. — $^{c}$) $K_5$ B ($B_1$ missing) Dn Ds $D_{5.6.10}$ $T_2$ $G_4$ Ca परः; $D_8$ च न (for नरः). $K_{1.2}$ $D_8$ ध्यासयते; $Dn_1$ कामपतिर्; Ca त्वा कामयते; Cd.s न कामयते (for कामयते). $K_{1.3}$ Cd त्रिकाल्यं; $K_2$ न काल्यं; $K_4$ अतिकल्पं; $K_5$ B ($B_1$ missing) $Dn_2$ $D_{2-7.10}$ $T_2$ Ca अतिवेलं; $Dn_1$ °बलं; Ds $D_{1.8}$ $G_4$ Cs अतिकालं; $D_9$ त्रिकल्पं (for अतिकाल्यं). — $^{d}$) $K_{1-3}$ स कामं; $K_4$ $D_{1.9}$ च कालं; $K_5$ च कामं (for नरोऽयं). Ca cites अयं.

14 $^{a}$) K (except $K_4$) $D_{2-4}$ T $G_1$ च (for तु). — $^{b}$) $D_9$ नाग (for सर्प). $G_4$ अवमुच्य (for असमर्थाम्). — $^{c}$) $B_3$ विराजते; $G_3$ बुभूषते (for विरोचते). $Dn_1$ $D_{1.2.9}$ S (except $M_2$; $T_2$ by corr.) ह्यार्यवृत्तेन ($G_5$ °वृत्तो हि); Cn as in text. $B_2$ $D_{1.10}$ S (except $G_3$) धीरो; $D_9$ धीमान् (for वीरो). Ca.d निसृज्य; Cs विसृज्य (as in text).

15 $^{a}$) B ($B_1$ missing) $Dn_2$ Ds $D_{3-7.10}$ $T_2$ Cn हंत; $Dn_1$ $D_{2.8}$ हत-; $D_9$ अथ; Ca.d अङ्ग (as in text).

C. 5. 954
B. 5. 32. 16
K. 5. 32. 24

न्धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राज-
*न्नोहेश्च पापं प्रसजेदमुत्र ॥ १५
स त्वमर्थं संशयितं विना तै-
राशंससे पुत्रवशानुगोऽद्य ।
अधर्मशब्दश्च महान्पृथिव्यां
नेदं कर्म त्वत्समं भारताग्र्य ॥ १६
हीनप्रज्ञो दौष्कुलेयो नृशंसो
दीर्घवैरी क्षत्रविद्यास्वधीरः ।
एवंधर्मा नापदः संतितीर्षे-
द्धीनवीर्यो यश्च भवेदशिष्टः ॥ १७
कुले जातो धर्मवान्यो यशस्वी
बहुश्रुतः सुखजीवी यतात्मा ।
धर्मार्थयोर्ग्रथितयोर्बिभर्ति
नान्यत्र दिष्टस्य वशादुपैति ॥ १८
कथं हि मन्त्राग्र्यधरो मनीषी
धर्मार्थयोरापदि संप्रणेता ।
एवंयुक्तः सर्वमन्त्रैरहीनो
अनानृशंस्यं कर्म कुर्यादमूढः ॥ १९
तवापीमे मन्त्रविदः समेत्य
समासते कर्मसु नित्ययुक्ताः ।
तेषामयं बलवान्निश्चयश्च

— D1 (hapl.) om. 11[bc]. — [b]) K5 °युक्ताद्राज°; G5 °युक्तार्य° (for °युक्तादार्य°). — The portion from 15[cd] up to 5. 101. 10[ab] is lost in K8 on 107 missing fol. (42–148)! — [c]) T2 उप-; G4 एव; Ca.d इह (as in text). K1.2.5 घोरं (for राजन्). — [d]) K1.4 नो चेत्तत्; K2 नेहैतत्; K5 D1.9 नो चेत्; B (B1 missing) Dn D5–8.10 T2 (before corr.) भूयश्च; Ds भूयः; D2–4 नेहेच; S (T2 by corr.) मोहाच्च; Ca.d.s नो वा (for *नोहेश्च). D1 अपापं. T1 G1.3.4 विसृजन्; G2 प्रसजन्; G5 विसृजेन्; M विसृजेद्; Cd.s प्रसज्जेत् (for प्रसजेत्).

16 K8 missing (cf. v. l. 15). — [a]) K5 सर्वम् (for स त्वम्). S (except T G1.2) समर्थं (for अर्थं). K1.2 (m as in text) संजनितं; K5 संशयितुं. — [b]) K1 आशंसयेः; Dn2 Ds आशंसते; B3–5 D2 (by corr.).5.6.10 (m as in text) T2 (before corr.) Cn अस्य; D2 (before corr.).3.4.7.8 अथ (for अद्य). — [c]) D1 तु; D2–4.9 सु- (for च). — [d]) D1 नीचं (for नेदं). D1 त्वत्कृतं; Ca.d.s त्वत्समं (as in text). D1.9 भारताद्य.

17 K8 missing (cf. v. l. 15). — [b]) K1.2.5 D8 दीर्घावलोकी; K4 दीर्घाचीलो; B3–5 D5–7.10 T2 G2 दीर्घवैरी; D1 दीर्घवैरो; T1 G1.3–5 M1 धर्मद्वेषी (for दीर्घवैरी). K1.2 अवीरः (for अधीरः). — [c]) B3.4 T1 G1.3–5 एतान्धर्मान्; D1 एतद्धर्मो; D7 एवंधर्मे; G2 एकाद्धर्मान्; Cd.s एवंधर्मा (as in text). K4 B (B1 missing) Dn Ds D2–7 T2 संश्रयेयुर्; K5 संतितीर्षन्; D9 सत्यतीर्थे; D10 संश्रयीत; Cd स तितीर्षेत्; Cs संतितीर्षेत् (as in text). — [d]) K5 D8 सुहीनवीर्यो; Ds D5–7 हीनो (D7 °ने) वीर्ये (D6 °र्यो); D9 यो न वीर्यो; D10 हीनवीर्ये; T1 G1.2.5 हीनप्रवीर्यो; G3 अदीनवीर्यो; G4 यश्चावीर्यो; M हीनवीर्योसौ (for हीनवीर्यो).

18 K8 missing (cf. v. l. 15). — [a]) B (B1 missing) Dn D2–7.10 T2 G4 बल°; Ds D9 G3 M5 धन°; D1 यो धनवान्; D8 भग°; M1–4 धनधान्ये (for धर्मवान्यो). — [b]) K1 B2.3 Ds D2–5.7.8.10 T2 जितात्मा; K2 धृता° (for यता°). — [c]) G4 श्रुतिधियोर् (for ग्रथितयोर्). T1 G1.3–5 M विपश्चिन् (for बिभर्ति). K (K8 missing) धर्मार्थकामांश्च समं बिभर्ति; B (B1 missing) D (except D1.9) T2 धर्माधर्मौ ग्रथितौ यो बिभर्ति. Cs cites ग्रथितौ and बिभर्ति. Cd cites विवर्तयिता. — [d]) K1 ह्यन्यत्तद्; K2 ह्यन्यच्च; K4 G3 अन्यत्र; K5 नान्यच्च; B2 स ह्यत्र; B3 यो ह्यत्र; B4.5 D T2 स ह्यस्य (D1 ताह्यास्य; D9 भावाद्) (for नान्यत्र). K1 D9 Cd इष्टस्य (for दिष्टस्य). B2 Dn2 Ds D9.10 S (except T G5) अपैति.

19 K8 missing (cf. v. l. 15). — [a]) K1.2.4 मंत्राद्य(K2 °ग्र)वरो; D2–4.7 मंत्रार्थधरो; D9 मंत्राग्रचरो; T1 G3.4 M1.3.4 मंत्राग्रधरो; G2 मंत्रग्रथिनो (for मन्त्राग्र्यधरो). D9 मनस्वी (for मनीषी). — [c]) B2.5 D5.10 T M5 Cn एवमुक्तः; D7.9 युक्त एवं (D9 °व) (for एवंयुक्तः). Ds °धर्मैर् (for °मन्त्रैर्). K1 च हीनः; D1.9 T1 G1.2.4.5 M विहीनं; D2–4 T2 G3 अहीनं (for अहीनो). — [d]) K1.2 अनायसं; K4 नरो नृशंस्यं; K5 अनाशंस्यं; B (B1 missing) D T2 नरो नृशंसं (D1.9 अयशस्यं); T1 G अनाशास्यं; Cd.s अनायस्यं (for अनानृशंस्यं).

20 K8 missing (cf. v. l. 15). — [a]) B (B1 missing) Dn Ds D5.6.8.10 T2 G2 तव ह्यमी; D1 तवापीदं; T1 G5 M2.5 तथा हि मे; G1 M1.3.4 तथा हीमे;

कुरुक्षयार्थे निरयो व्यपादि ॥ २०

अकालिकं कुरवो नाभविष्य-

न्पापेन चेत्पापमजातशत्रुः ।

इच्छेज्जातु त्वयि पापं विसृज्य

निन्दा चेयं तव लोकेऽभविष्यत् ॥ २१

किमन्यत्र विषयादीश्वराणां

यत्र पार्थः परलोकं ददर्श ।

अत्यक्रामत्स तथा संमतः स्या-

न्न संशयो नास्ति मनुष्यकारः ॥ २२

एतान्गुणान्कर्मकृतानवेक्ष्य

भावाभावौ वर्तमानावनित्यौ ।

बलिर्हि राजा पारमविन्दमानो

नान्यत्कालात्कारणं तत्र मेने ॥ २३

चक्षुः श्रोत्रे नासिका त्वक्च जिह्वा

ज्ञानस्यैतान्यायतनानि जन्तोः ।

तानि प्रीतान्येव तृष्णाक्षयान्ते

तान्यव्यथो दुःखहीनः प्रणुद्यात् ॥ २४

न त्वेवमन्ये पुरुषस्य कर्म

संवर्तते सुप्रयुक्तं यथावत् ।

मातुः पितुः कर्मणाभिप्रसूतः

C. 5. 954
B. 5. 32. 26
K. 5. 32. 34

---

$G_{3.4}$ तथा ($G_3$ °दा) हि ते (for तवापीमे). $G_4$ समेताः (for समेत्य). — $^{b}$) $M_{3-5}$ समासाते! — $^{d}$) K ($K_3$ missing) $D_{1.8}$ Cd.s कुल($K_4$ कुरु also)क्षयार्थे ($D_8$ °र्थं). $T_1$ G $M_1$ निय($M_1$ *sup. lin.* र)तो ($T_1$ °ता); Cd.s निरयो (as in text). $T_1$ न प्यधाय; $G_1$ न व्यधायि; $G_2$ व्यधायि; $G_{3-5}$ M प्य($M_{1.3.4}$ व्य)पायी ($G_{3.5}$ °यि; $G_4$ °यं [by corr.]); Cd.s व्यपादि (as in text). K ($K_3$ missing) $D_8$ निरयानुपाती (for निरयो व्यपादि). B ($B_1$ missing) Dn Ds $D_{2-7.10}$ $T_2$ कुरुक्षये ($D_{2-4}$ कुलक्षयो; $D_5$ कुरुक्षयं; $D_7$ कुलक्षये) नियमेनोदपादि; Ca कुलक्षये निरयो वोदपादि.

21 $K_3$ missing (cf. v. l. 15). — $^{a}$) $K_{4.5}$ S (except T $G_{1.2}$) आकालिकं; Ca.d.s अकालिकं (as in text). $D_1$ नाभविष्यत्. — $^{b}$) $B_2$ $Dn_1$ $D_{2-4}$ $T_2$ न्यायेन; all comm. पापेन (as in text). $K_4$ राज्यम्; Cd पापम् (as in text). $D_{1.8}$ अजातशत्रोः. — $^{c}$) $D_{2-4.9}$ इच्छेत; Cs as in text. $K_{1.2}$ $D_1$ पापं; $K_{4.5}$ राजन्; $G_5$ जातं (for जातु). $K_{1.2}$ राजन्; $D_1$ जातं; Cs पापं (as in text). $K_1$ $D_1$ Cd निसृज्य; Ca.s as in text. — $G_3$ om. 21$^{d}$–22$^{a}$, and reads 23$^{cd}$ in its place. — $^{d}$) K ($K_3$ missing) $D_8$ $G_4$ Cn निंदा; Cs as in text. K ($K_3$ missing) चेमां; Cs येयं (for चेयं). — $D_1$ om. from तव up to न संशयो in 22$^{d}$. K ($K_3$ missing) Cs cites तव आत्मलोकानुरागः (for तव लोकेऽभविष्यत्). Cs cites तव and अभविष्यत् (as in text).

22 $K_3$ missing (cf. v. l. 15); $D_1$ om. up to न संशयो (in 22$^{d}$) and $G_3$ om. 22$^{a}$ (cf. v. l. 21). — $^{b}$) $K_4$ $B_{4.5}$ $Dn_1$ $D_{5.6.8-10}$ $G_4$ स्म ($K_4$ $D_9$ च; $G_4$ स) द्रष्टुं; $Dn_2$ T $G_1$ स्म दृष्टं; $G_5$ सुदुर्गमं; Ca.d ददर्श (as in text). Cn.s cite द्रष्टुं. $G_2$ यत्र पार्थः परलोकस्य द्रष्टा. — $K_5$ om. 22$^{cd}$. — $^{c}$) $D_6$ स यथा; $T_1$ $G_4$ M स तदा; $G_5$ सहसा; Ca.d स तथा (as in text). $K_{1.2}$ संमतः सन्; $B_3$ संगतः स्यात्; $T_1$ $G_{1.2.4.5}$ M सर्वमर्त्यान्; $G_3$ धर्ममर्थान्; Ca.d.s संमतः स्यात् (as in text). — $^{d}$) $K_{1.2.4}$ न संशयं; $T_1$ $G_{1.2.5}$ $M_5$ असंशयो; Ca.d असंशयं; Cs न संशयो (as in text).

23 $K_3$ missing (cf. v. l. 15). — $^{a}$) $G_3$ कृतान्; Ca.d.s गुणान् (as in text). $Dn_2$ Ds $D_8$ $G_3$ °गुणान् (for °कृतान्). $K_1$ $D_9$ कर्म कृत्वानवेक्ष्य. — $^{b}$) $D_1$ च नित्यौ; $T_1$ अनाद्यौ; Cs अनित्यौ (as in text). $G_3$ reads 23$^{cd}$ after 21$^{ab}$ (cf. v. l. 21). — $^{c}$) $K_{1.2.4}$ बहिर्हि; $D_9$ मंदो; $T_1$ $G_{1.2.4}$ बली; $G_3$ बली च; M बली हि. $K_2$ राजन् (for राजा). $K_4$ सारमविंद°; $D_{1.9}$ S परमं ($D_9$ परमा; $T_2$ परमे; $G_4$ परं) विंद°; Ca.d पारमविंद° (as in text). Cs cites पारं. — $^{d}$) $T_1$ $G_{2.5}$ नान्यत्र (for नान्यत्). $M_2$ कार्यात्; Ca.d.s कालात् (as in text).

24 $K_3$ missing (cf. v. l. 15). $G_3$ om. 24$^{a}$–25$^{a}$. — $^{a}$) $K_{1.4}$ श्रोत्रं (for श्रोत्रे). M स- (for च). — $^{b}$) $K_{1.2}$ भोगस्य (for ज्ञानस्य). — $^{c}$) $D_1$ तानि प्रीणति; $D_9$ $G_{1.4}$ $M_{1.3.4}$ नातिप्रीतानि; $G_2$ तानप्री°. $D_1$ तृष्णाक्षयाद्यो; $T_1$ $G_{1.4.5}$ M °क्षये तु; $G_2$ °क्षयत्वाद् (for °क्षयान्ते). $K_{1.2.4}$ तानि प्रीत्या नैव दुःखानि सज्जेत् ($K_4$ तृष्णात्कथांते); $B_2$ तानि प्रीत्यान्प्रसज्जेत तृष्णाक्षयांते. Ca.d.s तानि प्रीत्या न प्रसज्जेत. — $^{d}$) $T_1$ $G_1$ तन्नव्यथो; $G_4$ तान्यप्यथो; $G_5$ तानप्येते (for तान्यव्यथो). $K_{1.2.4.5}$ दुःखनीतानि नुद्यात् ($K_5$ बुध्यात्); $T_1$ $G_{1.4.5}$ $M_{3-5}$ दुःखभीतः प्रणुद्यात्. $D_1$ दुःखान्येतान्यत्पथा न प्रसज्जेत्; $G_2$ एतां तृष्णां बीजभूतां प्रणुद्यात्. Ca.d.s cite अव्यथः, Cd.s दुःखानि and प्रणुद्यात्.

25 $K_3$ missing (cf. v. l. 15); $G_3$ om. 25$^{a}$ (cf. v. l. 24). — $^{a}$) $K_2$ $D_5$ Ca नन्वेव; $D_9$ न त्वेवम्; Cd.s न त्वेव; Cnp तेनैव. — $^{b}$) $D_1$ °वर्धते; M °पद्यते; Cs °वर्तते

C. 5. 964
B. 5. 32. 26
K. 5. 32. 34

संवर्धते विधिवद्भोजनेन ॥ २५
प्रियाप्रिये सुखदुःखे च राज-
न्निन्दाप्रशंसे च भजेत एनम् ।
परस्त्वेनं गर्हयतेऽपराधे
प्रशंसते साधुवृत्तं तमेव ॥ २६
स त्वा गर्हे भारतानां विरोधा-
दन्तो नूनं भवितायं प्रजानाम् ।
नो चेदिदं तव कर्मापराधा-
त्कुरून्दहेत्कृष्णवर्त्मेव कक्षम् ॥ २७
त्वमेवैको जातपुत्रेषु राज-
न्वशं गन्ता सर्वलोके नरेन्द्र ।
कामात्मनां श्लाघसे द्यूतकाले
नान्यच्छमात्पश्य विपाकमस्य ॥ २८
अनाप्तानां प्रग्रहात्त्वं नरेन्द्र
तथाप्तानां निग्रहाच्चैव राजन् ।
भूमिं स्फीतां दुर्बलत्वादनन्तां
न शक्तस्त्वं रक्षितुं कौरवेय ॥ २९
अनुज्ञातो रथवेगावधूतः
श्रान्तो निपद्ये शयनं नृसिंह ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं समेताः ॥ ३०

इति श्रीमहाभारते उद्योगपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥ समाप्तं संजययानपर्व ॥

---

(as in text). Dn स्वप्र° ; Ds $D_{6}$ सुख° ; $D_{1.9}$ संप्र° (for सुप्र°). — $G_{1.4.5}$ M (except $M_{2}$) read $25^{cd}$ and $26^{ab}$ for the first time after 164*, *repeating* them here. — $^{c}$) $K_{1.2.5}$ $D_{1}$ Cd वि- ; $T_{1}$ हि ; $G_{3}$ अपि ; Ca.s अभि- (as in text). — $^{d}$) $D_{1.3}$ $T_{1}$ G (except $G_{2}$) $M_{1.2}$ संवर्धितो ($M_{2}$ °ते) ; Cs संरक्षते ; Ca.d संवर्धते (as in text).

26 $K_{3}$ missing (cf. v. l. 15). $K_{5}$ om. $26^{ab}$. — $^{b}$) $K_{1.2.4}$ प्रशंसा (for -प्रशंसे). $B_{3}$ $D_{2.9}$ न (for च). $K_{1.2}$ भवेत्तथैव ; $K_{4}$ corrupt ; $B_{2.3.5}$ $D_{2-4.9}$ $T_{1}$ $G_{1.5}$ भजंत एनं ; $B_{4}$ $D_{7}$ $T_{2}$ भजंतमेव ($D_{7}$ °नं) ; Dn $D_{5.6}$ भजंतमेवं ; Ds भजंत एवं ; $D_{1}$ भवंत एव ; $G_{2.4}$ भजंति चैनं (for भजेत एनं). — $^{c}$) $D_{1}$ परेष्वेनं ; $D_{9}$ परश्चैनं (for परस्त्वेनं). Cs cites परस्तु. — $^{d}$) $K_{4}$ $D_{9}$ $M_{5}$ °वृत्ते ; Cs °वृत्तं (as in text). $K_{1.2.5}$ $B_{3}$ °वृत्त($K_{1}$ $B_{3}$ °वृत्तं)त्वमेव.

27 $K_{3}$ missing (cf. v. l. 15). — $^{a}$) $K_{2.4.5}$ B ($B_{1}$ missing) D (except $Dn_{1}$) T $G_{1.2.5}$ $M_{2.5}$ स त्वां ; Ca.d.s सोहं त्वा (Cs त्वां). $K_{4}$ (marg. *sec. m.*) गर्हौ ; $Dn_{1}$ $D_{3.4}$ गर्हे ; Ca.d.s गर्हे (as in text). — $^{b}$) $T_{1}$ नाशो ; Cs अन्तो (as in text). $G_{4}$ च (for अयं). — $^{c}$) $K_{4}$ $D_{1}$ न ; Ca.d.s नो (as in text). $K_{5}$ अयं ; $G_{5}$ इयं ; Ca.d.s इदं (as in text). $K_{1.2.4}$ $D_{2}$ $G_{2.5}$ तव कर्मापराधः ; $D_{9}$ तव कर्मानुरोधात् ; Cn.s कर्म तवापराधात्.

28 $K_{3}$ missing (cf. v. l. 15). — $^{a}$) $K_{2}$ किल पुत्रेषु ; $K_{4}$ $D_{1.2}$ $G_{3.5}$ जातु पुत्रेषु ; $K_{5}$ Ds $D_{3.10}$ $T_{2}$ जात ($T_{2}$ also °जातु)पुत्रस्य ; B ($B_{1}$ missing) Dn $D_{3-7}$ जातु पुत्रस्य ; $D_{9}$ राजपुत्रेषु ; Cs अजातपुत्रेषु ; Ca जातपुत्रेषु (as in text). — $^{b}$) $K_{4.5}$ $G_{3.5}$ वशं गतः ; B ($B_{1}$ missing) $Dn_{1}$ $D_{2-10}$ $T_{2}$ $M_{5}$ वशं गत्वा ; $Dn_{2}$ वशे कृत्वा ; $T_{1}$ $G_{1}$ वशं हंता ; $G_{4}$ वंशांतगः ; Ca बलं गंता ; Cd.s वशं गंता (as in text). $K_{5}$ $D_{2.3}$ $G_{2}$ नरेंद्रः. $D_{7}$ सर्वलोकेषु राजन्. — $^{c}$) B ($B_{1}$ missing) Dn $D_{3-7.10}$ कामात्म($Dn_{2}$ °त्मा)नः ; T $G_{1.3-5}$ यदा($G_{1}$ °था)त्मानं ; $G_{2}$ कामात्मना ; M किमात्मानं ; Cd.s कामात्मनां (as in text). $K_{1}$ श्लाघ्यसे ; $K_{5}$ श्लाघता ; B ($B_{1}$ missing) $Dn_{2}$ $D_{5}$ Cn श्लाघनो ; $Dn_{1}$ Ds $D_{3.4.7.10}$ $T_{2}$ श्लाघनाद् (Ds $D_{7}$ °ना) ; $D_{1}$ श्लाघतां ; $D_{2}$ प्लाघ्यतां ; $D_{9}$ corrupt ; $T_{1}$ श्लाघते (for श्लाघसे). — $^{d}$) B ($B_{1}$ missing) Dn $D_{3-7.10}$ $T_{2}$ नागाः ; Ds मा गाः ; Cs नान्यत् (as in text). $B_{2.4.5}$ D (except $D_{1.2.7-9}$) $T_{2}$ शमं ; $B_{3}$ समं ; Cd.s शमात् (as in text). S (except $T_{2}$) पश्यसि पाक($M_{2}$ काल)मस्य ; Cs as in text.

29 $K_{3}$ missing (cf. v. l. 15). — $^{a}$) $K_{5}$ प्रग्रहत्वं ; $B_{3}$ प्रग्रहात्तु ; $B_{4.5}$ $Dn_{1}$ $D_{2-8.10}$ $T_{2}$ संग्रहात्त्वं ; $G_{2}$ प्रग्रहत्वान् ; $G_{3}$ संग्रहत्वं (for प्रग्रहात्त्वं). Ca.d cite प्रग्रहात्. — $K_{1}$ (hapl.) om. from त्वं up to निग्रहात् (in $^{b}$). — $^{b}$) $K_{4}$ $Dn_{1}$ $D_{6.8}$ $T_{1}$ $G_{5}$ M विग्रहाच्चैव ; $D_{1}$ परिहाराच्च ; $G_{3}$ निग्रहं चैव (for निग्रहाच्चैव). Cn cites निग्रहात्. — $^{c}$) $G_{3.5}$ स्थितां (for स्फीतां). K ($K_{3}$ missing) $G_{2}$ बहुरत्नाम् ; $T_{1}$ दुर्बलवन् (for दुर्बलत्वाद्). $K_{5}$ समेतं ; $T_{1}$ न दत्तां (for अनन्तां). — $^{d}$) $K_{4}$ B ($B_{1}$ missing) D (except $D_{7}$) T $G_{1.4.5}$ $M_{2.5}$ अशक्तः (for न शक्तः). $K_{1.2.5}$ $D_{3}$ कौरवेश ; $B_{4}$ $Dn_{1}$ कौरवेंद्र (for कौरवेय).

30 $K_{3}$ missing (cf. v. l. 15). The portion of the text from 30 up to 5. 33. 34. is lost in $Dn_{2}$ on a missing folio (24). — $^{b}$) $K_{4.5}$ B ($B_{1}$ missing)

# ३३

वैशंपायन उवाच ।

द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
विदुरं द्रष्टुमिच्छामि तमिहानय माचिरम् ॥ १
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ २
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थ मां प्रतिवेदय ॥ ३

द्वाःस्थ उवाच ।

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ४

धृतराष्ट्र उवाच ।

प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकाल्यो जातु दर्शने ॥ ५

C. 5. 975
B. 5. 33. 5
K. 5. 33. 5

---

Dn1 Ds D1–5. 7. 10 T2 Cs अभिपद्ये; D6 विपद्ये; D9 निबोध; T1 G अनुपद्ये; Cn प्रपद्ये; Ca. d निपद्ये (as in text). K1. 2 D8 प्रपद्य; D7 नरेंद्र (for नृसिंह). — d) K (K3 missing) D1 समग्रं; D7 त्वयोक्तं; G8 M यथोक्तं (for समेताः). — After 30, K4. 5 B (B1 missing) D (except D7; Dn2 missing; D1 marg.) T G (except G8) ins.:

165* धृतराष्ट्र उवाच ।
अनुज्ञातोऽस्यावसथं परैहि
प्रपद्यस्व शयनं सूतपुत्र ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं त्वयोक्तम् ।

[ (L. 1) K4 चावसथं; K5 D1 T1 G1. 5 स्वाव°; D2 त्वाव°; D9 G2. 4 आव° (for अस्याव°). K4 B (B1 missing) D10 Ca. n परेहि; K5 D1. 2 परेत्य; D9 T1 G1. 4. 5 समेत्य; G2 प्रविश्य (for परैहि). — (L. 2) K4 D5. 6 T2 सुखं प्रपद्यस्व; K5 Ds D1–4. 9. 10 G1. 2. 4 सुखं प्रपद्य (D9 °द्येः); T1 प्रपद्ये; G5 सुखं प्रपद्ये (for प्रपद्यस्व). Cd. s cite प्रपद्य (then reading probably स्वशयनं). — (L. 4) K5 B5 Dn1 Ds D5. 6 T2 G2 समेताः (cf. 30d); B2. 8 यथावत्; D8 समग्रं; G1. 4. 5 यथोक्तं (for त्वयोक्तम्). ]

Colophon missing in K3 Dn2; B1 om. it. — *Sub-parvan:* K1. 2. 4. 5 B (B1 om.) Ds D1. 2. 5–7. 9 T2 G1. 2 M1. 2 संजययान; to it K5 D1. 2. 5 G1. 2 M1. 2 add समाप्त. — *Adhy. name:* D8 संजयहस्तिनापुरगमनं; D10 संजयागमनं; T1 G1 M संजयप्रत्यागमनं. — *Adhy. no.* (figures, words or both): K1 D5. 7 31; D6 (*sec. m.*) 29; D8 S 32 (M 33). — *S'loka no.:* Dn1 32; D8 33.

## 33

☞ This adhy. is missing in K3 (cf. v. l. 5. 32. 15); 1–92a is missing in B1 (cf. v. l. 5. 30. 37), and 1–34 is missing in Dn2 (cf. v. l. 5. 32. 30). K3 and B1 are mostly ignored in this adhy.

1 a) Most MSS. द्वास्थं. G3–5 चाह; M3. 4 त्वाह (for प्राह).

2 Dn2 missing (cf. v. l. 1). — a) T1 G3–5 प्रेषितो (for प्रहितो). — b) T1 G4 द्वाःस्थः; G5 सूतः (for दूतः). — c) D1. 9 त्वा (for त्वां). K2 D9 T1 G1. 3. 5 M °प्राज्ञ (D9 M1. 2. 5 °प्राज्ञो); G4 °बाहो (for °राजो). — d) K2. 5 m G3–5 M महाराजो; K4 D1. 3. 4. 7 °प्रज्ञो; K5 T2 °प्राज्ञो; Ds D5. 6. 10 °प्रज्ञ; T1 G1 धृतराष्ट्रो. K1. 4. 5 B2. 3 D1. 9 G1. 3. 5 दिदृक्षते.

3 Dn2 missing (cf. v. l. 1). — b) K2 Dn1 D3. 4. 7. 9 राजनिकेतनं; G3 राज्ञो निवे°. — d) B (B1 missing) D3. 9 G3 M2 द्वाःस्थं. G1 मा (for मां). K1 प्रतिबोधय; B3 D5. 6 T2 प्रतिपादय; D3. 4. 7–9 संनिवेदय; M5 प्रतिवेशय; Ca. d as in text. G2 प्रासं प्रतिनिवेदय.

4 Dn2 missing (cf. v. l. 1). — a) G3 महाप्राज्ञ (for अनुप्राप्तो). — d) D8 G3. 4 करोमि (for °तु).

5 Dn2 missing (cf. v. l. 1). — a) D (except D1. 2. 6. 8. 9; Dn2 missing) T G5 महाप्रज्ञं. — d) K1. 4. 5 B2. 4. 5 D (except Ds; Dn2 missing) T2 नाकल्पो; K2 m नासमयो; G3 नाकार्यो; G4 न कालो; Ca नाकाल्यो (as in text). Cd cites अकाल्यं.

6 Dn2 missing (cf. v. l. 1). — a) K1. 4. 5 B (B1 missing) D (except Ds; Dn2 missing) T2 G5 अकल्पो (D1 °काल्यं); G3 अकार्यो (for अकाल्यो). — d) S (except T2 G2. 5) महाराजो (for जातु राजा). B (B1

C. 5. 976
B. 5. 33. 6
K. 5. 33. 6

द्वाःस्थ उवाच ।
प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः ।
न हि ते दर्शनेऽकाल्यो जातु राजा ब्रवीति माम् ॥ ६
वैशंपायन उवाच ।
ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ७
विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ८
धृतराष्ट्र उवाच ।
संजयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १०
जाग्रतो दह्यमानस्य श्रेयो यदिह पश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ११
यतः प्राप्तः संजयः पाण्डवेभ्यो
न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि
किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता ॥ १२
विदुर उवाच ।
अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १३
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिन्न परवित्तेषु गृध्यन्विपरितप्यसे ॥ १४

---

missing) D (Dn2 missing) T2 अब्रवीद्धि (for ब्रवीति). G2 अब्रवीत्पुनः (for ब्रवीति माम्). — After 6, G3 reads 13.

7 Dn2 missing (cf. v. l. 1). G3 om. 7–8. — [b]) G2 प्रांजलिं वीरं (for प्राञ्जलिर्वाक्यं). — For 7, K (K3 missing) subst.:

166* एवमुक्तः प्रविश्याथ क्षत्ता राजानमब्रवीत् ।

8 Dn2 missing (cf. v. l. 1); G3 om. 8 (cf. v. l. 7). Before 8, G5 ins. विदुरः. — [a]) K5 D5.10 महाप्रज्ञ. — [c]) K2 किंचित्तु; K4 Dn1 D2 किंचिच्च; B3 किंचिन्नु (for किंचन). D3.4.9 यदि (D9 °च्च) किंचिन्मया कार्यं; D6 वचनं तव कर्तव्यं. — [d]) B3 किं करोमि (for अयमस्मि). — After 8, T1 G1.4 read 13–14.

9 Dn2 missing (cf. v. l. 1). — [b]) D3 T1 G5 तु; G4 स (for च). D9 G4 मा (for मां).

10 Dn2 missing (cf. v. l. 1). — [a]) G2 अथ (for तस्य). K4 अथ; B3 D1.2 G2 तत्; G4.5 अस्य (for अद्य). B3 कुरुराजस्य; G3 °सिंहस्य. — [c]) B3 D1.2 S (except T2 G1) दहन्मे (B3 °हंते; G5 °ह्रते) सर्वगात्राणि.

11 Dn2 missing (cf. v. l. 1). — [b]) K5 B (B1 missing) D (Dn2 missing) यदत्तु-; G1 यद्यत्र (for यदिह). — [c]) K4 च हि (for ब्रूहि). K (K3 missing) हितं (for हि नः). — [d]) D1.2.9 G3 शुचिः; G2 यतः (for ह्यसि). M अर्थधर्मविशारदः.

12 Dn2 missing (cf. v. l. 1). — [c]) G5 प्रयांति (for गतानि). — [d]) K1.2.5 अत्र (for एव). B3.5 मेद्य; G2 मेत्र; G5 मम; M च मे (for हि मे). K2 अस्ति; D2.9 अत्र; D6 च; G5 इह (for अद्य). K1.4.5 (*sup. lin.*) B3.5 D1.3.4.7.8 G2 M Cn प्रचिंता; K5 प्रशंसा; T2 विचिंता (for ऽद्य चिन्ता). — After 12, S (except T2) ins.:

167* तन्मे ब्रूहि विदुर सर्वं यथाव-
त्सान्त्वं तस्मै सर्वमजातशत्रोः ।
यथा च नस्तात हितं भवेत
प्राज्ञाश्च सर्वे सुखिनो भवेयुः ।

[ (L. 1) T1 G (except G2) त्वं (for सर्वं). — (L. 2) T1 G M4 (*sup. lin.*) मनीषितं (for सान्त्वं तस्मै). — (L. 3) T1 G1.5 भवेच्च; G2–4 भवेत्तत् (for भवेत). — (L. 4) T1 G प्रजाश्च सर्वाः (G1 m तन्मे) सुखिता भवेयुः. ]

13 Dn2 missing (cf. v. l. 1). D6 om. 13–14; G2 om. 13. T1 G1.4 read 13 and 14 after 8; G3 reads 13 after 6. — [c]) N (except B5; B1 Dn2 missing; D6 om.) चौरं (for चोरं). Ca cites हृतस्वः, कामी, चौरश्च. — After 13, G2 reads 15[ab].

14 Dn2 missing (cf. v. l. 1). D6 om. 14 (cf. v. l. 13); G3 om. 14. For T1 G1.4 cf. v. l. 13. — [b]) G4 M1.3.4 अस्पृ° (for न स्पृ°). — [c]) B (B1 missing) D (except D1.9; Dn2 missing; D6 om.) T2 G5 च (for न). — [d]) G1.4 M1 (*sup. lin.* as in text).3.4 गृध्नन् (for गृध्यन्). K5 B (B1 missing) D (except D1.2.9; Dn2 missing; D6 om.) न परितप्य(D3 D5 before corr. °प्स्य)से (for विपरि°).

15 Dn2 missing (cf. v. l. 1). G2 reads 15[ab] after 13. — [a]) T1 G अहं (for ते). K4 सर्वं; T1 G M

धृतराष्ट्र उवाच।
श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १५
विदुर उवाच।
निषेवते प्रशस्तानि निन्दितानि न सेवते।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ १६
क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ १७
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ १८
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ १९

C. 5. 994
B. 5. 33. 19
K. 5. 33. 26

---

क्षत्तः (G3 त्वत्तः) (for धर्म्यं). — [b]) K (K3 missing) D1. 2 T1 G4. 5 निः° (for नैः°). — [c]) K1. 2. 4 वै (for हि). — [d]) T1 G1. 5 प्राज्ञसत्तमः.

16 Dn2 missing (cf. v. l. 1). — After the ref., K (K3 missing) D1. 2. 7. 8 S (except T2) ins.:

168* राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत्।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः।
विपरीततरश्च त्वं भागधेयेन संमतः।
अर्चिषा प्रज्ञया चैव धर्मात्मा धर्मकोविदः।
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यपराक्रमात्। [5]
गुरुत्वं त्वयि संप्रेक्ष्य बहून्क्लेशांस्तितिक्षते।
दुर्योधने सौबलेये कर्णे दुःशासने तथा।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि।
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।

[ (L. 1) D7 राजन्; G3–5 M राज- (for राजा). K5 D7 अधिपो (for अपि यो). — (L. 2) K2 G5 प्रेक्ष्यः; Cn प्रेष्यः (as above). T1 G M प्रेषिता (G5 प्रेक्षिता); Cn प्रेषितः (as above). M3–5 सोस्तु (for चैव). — (L. 3) D1 तत्र; D2 त्वं तु; D8 त्वं च (for च त्वं). S (except T2) विपरीतः सपुत्रस् (T1 G1–8 °त्र) त्वं. Cn explains both भागधेयेन (as above) and भागधेये न. S (except T2) लंभितः (for संमतः). — (L. 4) K5 D7 Cn अर्चिषां प्रक्षयाचैव. S (except T2) धर्म्यया; Cn धर्मात्मा (as above). — (L. 5) K1. 5 D7 सत्यात्परा°; T1 G3–5 M °क्रमः. — (L. 6) K5 D7 गुरुत्वात्. K2. 4 D2. 8 M तितिक्षति; Cn as above. — (L. 7) D1. 2 सौबले च; S (except T2) दुःशासने (for सौबलेये). S (except T2) राजन्कर्णे च (M °र्णेष) सौबले. — (L. 8) S (except T2 M5) आत्मनो (for कथं त्वं). D2 शांतिम् (for भूतिम्). — (L. 9) S (except T2 M5) असंरंभः (for समा°). K1. 5 D1. 7. 8 आत्मज्ञानसमा°. — Of this passage, lines 1–6 are an anticipation (with variation) of 5. 34. 81–83; and, similarly, lines 7–8, of 5. 35. 66. The Bombay ed. of the comm. of Nīl contains a comment on this passage with the remark: क्वचित्पुस्तकान्तरे स्थितस्य मूलस्य व्याख्या, but this is an *interpolation* made in the *comm.* by some modern Pandit! The MSS. of Cn ignore this portion of the comment altogether. The passage is unnoticed in Ca. d. s! ]

— After the above, K1. 5 D2. 7 read 17[cd] (*repeating* it in its proper place); while S (except T2) cont.:

169* वाक्संयमश्च दानं च नैतेष्वेतानि कृत्स्नशः।
एकस्माद्वृक्षाद्यज्ञपात्राणि राज-
न्स्रुक्च द्रोणी वोढनी पीडनी च।
एतद्राजन्ब्रुवतो मे निबोध
एकस्मात्पुरुषाज्जायतेऽसच्च सच्च।

[ (L. 2) M तक्ष्यात् (for राजन्). — (L. 3) T1 G5 पेढनी; G1 वोटनी; G2 वोडिनी; G3. 4 वेधनी (for वोढनी). — (L. 5) G1. 3. 4 वै; G2 च (for पुरुषात्). ]

— [c]) K5 T1 G3–5 आस्तिकः श्रद्दधानश्च.

17 Dn2 missing (cf. v. l. 1). — [a]) D9 अमर्ष° (for हर्ष°). D9 दंभः; Cs दर्पः (as in text). — [b]) K1. 2 Cs अमान्यमानिता. — K1. 5 D2. 7 read 17[cd] for the first time after 168* (cf. v. l. 16), *repeating* it here. — [c]) K1 (before corr. as in text). Dn1 D8. 4. 9 T2 G (except G5) अर्था (for अर्थान्). — [d]) = 18[d], 19[d], 20[d] etc. — After 17, T1 G1. 5 M read 20; while D2 ins.:

170* योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
कितवेन कृतं पापं चौरेणात्मापहारिणा।

[ = (var.) 1. 68. 26; = (var.) Manu 4. 255. ]

18 Dn2 missing (cf. v. l. 1). K1 om. 18–20; D9 G4 om. 18–19; B2 om. 18. T1 G1. 5 M transp. 18 and 19. — [a]) K2. 4. 5 मंत्रं (for कृत्यं). M विंदंति (for जानन्ति). — [b]) D2 मित्रं (for मन्त्रं). K2. 4. 5 m बाह्याश्चाभ्यंतराश्च ये. — [c]) K2 अभि- (for अस्य).

19 Dn2 missing (cf. v. l. 1). K1 D8. 9 G2. 4 om. 19 (cf. v. l. 18); G3 om. 19–26. T1 G1. 5 M transp. 18 and 19. — [a]) K2 D3 निघ्नंति; T2 विंदंति. — [c]) T1 G5 M च (for वा).

20 Dn2 missing (cf. v. l. 1). K1 G3 om. 20

C. 5. 990
B. 5. 33. 20
K. 5. 33. 27

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ २०
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यन्ते पण्डिता भरतर्षभ ॥ २१
क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २२
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २३
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ २४
आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ २५
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ २६
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ २७
प्रवृत्तवाक्चित्रकथ ऊहवान्प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च स वै पण्डित उच्यते ॥ २८

---

(cf. v. l. 18, 19). T1 G1.5 M read 20 after 17; G2, after 22. — a) K4 Dn1 D7 संचारिणी; all comm. संसा° (as in text). — b) G2 धर्मार्थौ वशमुच्यते. — c) D7.8 कामार्थं न; G5 कामान्नार्थं. — After 20, D7 ins.:
171* कामादर्थं वृणीते यो मोक्षादर्थं स विन्दति ।
राजनीतिं समीक्ष्याथ स वै पण्डित उच्यते ।

21 Dn2 missing (cf. v. l. 1). G3 om. 21 (cf. v. l. 19); G4 om. 21ab. — b) K2 हि कुर्वते; Ds च कुर्वति; G2 M उपकुर्वते. — d) D9 G2 पुरुष° (for भरत°). B (B1 missing) Dn1 Ds D3–8.10 T2 नराः पंडितबुद्धयः (B3 °वृत्तयः; Ds2 °मानिनः).

22 Dn2 missing (cf. v. l. 1). K2 D10 G3 om. 22 (cf. v. l. 19). — b) K1 D1 चार्थान् (for चार्थं). Cs cites अर्थं (as in text). D3–6 T2 (by corr.) च; Cs न (as in text). D1 M कामं; D3 (*sup. lin.* as in text). 4.5.9 G5 कामान्; Cs as in text. — c) K4 असंस्पृष्टः; T G5 संपृष्टः; G4 संसृष्टः; Ca. d. s असंपृष्टः (as in text). K1 B2.3 Dn1 Ds D3–6.8 T2 ह्युपयुंक्ते; D1 व्यपयुक्ते (sic); D9 नोपयुंक्ते; Cs उप°; Cd. n व्युप° (as in text). K1.4.5 (m as in text) परस्य; D3.4.6 T G4.5 परार्थं; Cd. s परार्थे (as in text). G1.2 M न संसृष्टोप्युपयुंक्ते परार्थं. — d) D2 प्रथितं (for प्रथमं). — After 22, G2 reads 20.

23 =(var.) Hitopades'a (ed. Peterson) 1. 127. — Dn2 missing (cf. v. l. 1). G3 om. 23 (cf. v. l. 19). — c) D3.4 T1 G (G3 om.) न वि- (for च न). — d) D5 °मानिनः (for °बुद्धयः). K1 पंडिता भरतर्षभ.

24 Dn2 missing (cf. v. l. 1). G3 om. 24 (cf. v. l. 19). — a) K2 S (except T2 G2; G3 om.) प्रकुरुते; Ca. d प्रक्रमते (as in text). — b) G5 नांतर्विशति; Ca. d. s as in text. K4 G5 कर्मणां; Cs as in text.

25 Dn2 missing (cf. v. l. 1). G3 om. 25 (cf. v. l. 19). — a) K4 आर्ये (for आर्य-). K4 रंस्यंति; D2 सज्यंते. — b) B3 Ds D9 G5 M4 भूति (D9 °तिं) कर्मणि. B3 युज्यते (for कुर्वते). — c) Ds हेतुं (for हितं). T1 G1.5 M transp. च and न. T G1.4.5 अभ्यसुयंते; M अप्यसूयंते. — d) D9 S (except T2 G2; G3 om.) पुरुषर्षभ (D9 °भाः).

26 Dn2 missing (cf. v. l. 1). B2 G3 om. 26 (cf. v. l. 19). — a) K (K3 missing) आत्मसन्माने. S (except T2 G2; G3 om.) न प्रहृष्यति संमाने. — b) K1 D3.4 M2 अपमानेन (K1 °ने च); K2.4.5 D3 G4 अवमाने च (for अवमानेन). K (K3 missing) कुप्यति (for तप्यते). D6 न तप्यंते परोदये. — c) K4 D1 G1.4 गंगा- (for गाङ्गो).

27 Dn2 missing (cf. v. l. 1). B4 G2 om. 27–28. M transp. 27 and 28. — a) S (except T2; G2 om.) मनोज्ञः; Cs तत्त्वज्ञः (as in text). Cn cites तत्त्वं. — d) S (except T2; G2 om.) स वै (for नरः). — After 27, T1 G1 reads 39.

28 Dn2 missing (cf. v. l. 1). B4 G2.3 om. 28 (cf. v. l. 27). M transp. 27 and 28. — ab) K2 B2.5 Ds ऊहावान्; D3 ज्ञानवान्; Ca ऊह° (as in text). Cd. n. s cite ऊहः. D6 प्रवृत्तिमान्निमित्तज्ञो जुह्वतामनुभाववान्. — c) S (except T2; G2.3 om.) शुद्धवाक्यस्य (G1.4 °श्च) (for आशु ग्रन्थस्य). K1 D2–4.8 यः (for च). — d) K2.4.5 B (B1 missing) Dn1 Ds D1.5–7.9.10 T2 यः स; D3 स च (for स वै).

29 Dn2 missing (cf. v. l. 1). Dn1 om. 29. — a) D3.4 शास्त्रं; Ca. d. s श्रुतं (as in text). K1 चैव (for यस्य). — b) D1 यस्य (for चैव). — d) Ds D3

विश्वस्तस्यैति यो दारान्यश्चापि गुरुतल्पगः ।
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ ११
शरणागतहा चैव सर्वे ब्रह्महणैः समाः ।
एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ १२
गृही वदान्योऽनपविद्धवाक्यः
शेषान्नभोक्ताप्यविहिंसकश्च ।
नानर्थकृत्त्यक्तकलिः कृतज्ञः
सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ १३
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १४

यो हि धर्मं व्यपाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १५
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १६
आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १७
उक्तं मया द्यूतकालेऽपि राज-
न्नैवं युक्तं वचनं प्रातिपीय ।
तदौषधं पथ्यमिवातुरस्य
न रोचते तव वैचित्रवीर्य ॥ १८

C. 5. 1353
B. 5. 37. 20
K. 5. 37. 20

---

— $^d$) $K_1$ अपि (for एव). $D_{10}$ मधुपानरतः सदा; $G_4$ यश्च स्यात्पानपो द्विजः. — After 11, N (except $D_9$; $K_3$ missing) T G (except $G_3$) ins.:

223* आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।

[ $D_1$ आदेशनाद्; Ca.d.s as in text. $T_1$ $G_{1.4.5}$ विप्राणां (for द्विजानां). ]

12 $^a$) $G_3$ शरणागतहंता च. — $^b$) $K_2$ $D_{1.7}$ T $G_{1.2.5}$ ब्रह्महभिः; $K_4$ B $Dn_1$ Ds $D_{2-6.9.10}$ °हणः (for °हणैः). $B_{2.4}$ $D_2$ स्मृताः (for समाः). — $^c$) $K_1$ संभाष्य; $D_1$ स्मरत्य (sic); $D_{3.4}$ समेतैः; Cd.s समेत्य (as in text). B वर्तव्यं; $Dn_2$ $Ds_1$ $D_{5.6}$ $M_{1.3.4}$ चर्त°; $D_1$ वक्त° (for कर्त°). — $^d$) $K_4$ स्मृतं; $T_1$ स्मृतः; $G_{1.5}$ स्मृतिः (for श्रुतिः).

13 $^a$) $D_2$m Ca गृहीतवाक्यो (for गृही वदान्यो). $K_{1.5}$ $D_{7-9}$ Cs अनयविद्धवाक्यः; $D_1$ अनविरुद्ध°; $T_1$ $G_{1-4}$ M अनपविद्धाग्निहोत्रः; $G_5$ अविधिनाग्निहोत्री; Cd.np अनपविद्ध° (as in text). $K_4$ B Dn Ds $D_{3-6.10}$ $T_2$ गृहीतवाक्यो नयविद्वदान्यः. — $^b$) B D (except $D_{1.2.7.9}$) $T_2$ $G_4$ $M_{2.5}$ हि (for अपि). — $^c$) $K_{1.4}$ मानार्थं°; B $Dn_2$ Ds $D_{8.10}$ $M_5$ नानर्थकृत्याकुलितः; $Dn_1$ $D_{3.4}$ नानर्थकारी कुशलः; $D_1$ corrupt; $D_9$ नानर्थकृत्यापकलिः; $G_{3.4}$ नानार्थं°; $M_{1.3.4}$ यो ह्यर्थकृत्य° (for नानर्थकृत्य°). — $^d$) $D_9$ $G_{4.5}$ सद्यो (for सत्यो). $G_5$ मृतः (for मृदुः).

14 =(var.) Rāmāyaṇa 6. 16. 21; =(var.) Pañcatantra 2. 171 (*text. simpl.* 2. 160); =(var.) Śārṅgadharapaddhati 1360; =(var.) Subhāṣitāvali 2838; = Śukasaptati (*text. simpl.*) pp. 76, 199. — $^c$) $K_2$ $D_8$ च (for तु). — $^d$) $D_2$ transp. वक्ता and श्रोता.

15 =(var.) B. 2. 64. 17; =(var.) Hitopades'a 4. 17. — $^a$) $K_{1.4}$ B Dn Ds $D_{3-6.8.10}$ $T_2$ समा°; $K_5$ अना°; $D_9$ $G_3$ उपा° (for व्यपा°). — $^b$) $K_2$ त्यक्त्वा (for हित्वा). $G_3$ °प्रियौ (for °प्रिये).

16 =5. 126. 48; =(var.) 1. 107. 32; =C. 2. 2104; =(var.) Skanda-purāṇa, Kās'īkhaṇḍa 13. 90; =(var.) Pañcatantra 3. 81; Hitopades'a 1. 115; =Cāṇakya-Śataka 31 (ed. Haeberlin); =(var.) Śārṅgadharapaddhati 1462. — $^a$) $Dn_2$ कुलार्थं; Ca as in text. $K_{1.4}$ त्यजेदेकं कुलस्यार्थे. — $^d$) $D_6$ आत्मार्थं; $G_4$ ह्यात्मार्थे.

17 =Manu 7. 213; =(var.) Ādi 1614*; =Cāṇakya-Śataka 29; =Hitopades'a 1. 31; =Vikramacarita (ed. Edgerton) SR 12. 1 (JR 20. 1). — $^a$) K ($K_3$ missing) $B_{3.5}$ $Dn_1$ $Ds_2$ $D_{5-10}$ $T_2$ आपदर्थे. $D_1$ $G_5$ रक्ष्यं (for रक्षेत्). — $^b$) $D_1$ S (except $T_2$ $G_{2.4}$) दारा रक्ष्या (for दारान्रक्षेद्). — $^c$) $K_2$ $D_2$ सर्वतो; $G_3$ सर्वदा (for सततं). $D_1$ M आत्मा तु सर्वथा ($D_1$ °तो; $M_5$ °दा) रक्ष्यो. — $^d$) $G_4$ प्राणैर् (for दारैर्). — After 17, $K_4$ B D (except $D_9$) T $G_1$ ins.:

224* द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ।

[ (L. 1) $B_{2.3}$ एवं (for एतद्). $T_1$ सृष्टं (for दृष्टं). $D_{2-4.7}$ $T_1$ वै नरकं (for वैरकरं). ]

18 $^a$) $K_5$ च; $G_4$ तु; $G_5$ हि (for ऽपि). — $^b$) $K_{1.2}$ $D_{1.2}$ $G_2$ एतत्; B Dn Ds $D_{3-8.10}$ $T_2$ Cs इदं (for एवं). $K_4$ प्रयुक्तं; Cs युक्तं (as in text). $K_4$ $B_5$ D (except Ds $D_{5.6.9}$) T $G_{1-3}$ Ca.d प्रातिपेय (for °पीय). — $^c$) $K_1$ $G_{1.5}$ यथा; $G_3$ तथा (for तदा). — $^d$) $K_2$ तत्प्रातिपीय (for वैचित्रवीर्य).

19 $^a$) $D_9$ °वर्णान् (for °बर्हान्). — $^b$) $K_{4.5}$ $D_{2-4.9}$ $T_1$ $G_{1.3}$ °जैषीः; B Dn Ds $D_{5.6.8.10}$ $T_2$ °जयेथाः (for

C. 5. 1354
B. 5. 37. 21
K. 5. 37. 21

काकैरिमांश्चित्रबर्हान्मयूरा-
न्पराजैष्ठाः पाण्डवान्धार्तराष्ट्रैः ।
हित्वा सिंहान्क्रोष्टुकान्गूहमानः
प्राप्ते काले शोचिता त्वं नरेन्द्र ॥ १९

यस्तात न क्रुध्यति सर्वकालं
भृत्यस्य भक्तस्य हिते रतस्य ।
तस्मिन्भृत्या भर्तरि विश्वसन्ति
न चैनमापत्सु परित्यजन्ति ॥ २०

न भृत्यानां वृत्तिसंरोधनेन
बाह्यं जनं संजिघृक्षेदपूर्वम् ।
त्यजन्ति ह्येनमुचितावरुद्धाः
स्निग्धा ह्यमात्याः परिहीनभोगाः ॥ २१

कृत्यानि पूर्वं परिसंख्याय सर्वा-
ण्यायव्ययावनुरूपां च वृत्तिम् ।
संगृह्णीयादनुरूपान्सहाया-
न्सहायसाध्यानि हि दुष्कराणि ॥ २२

अभिप्रायं यो विदित्वा तु भर्तुः
सर्वाणि कार्याणि करोत्यतन्द्रीः ।
वक्ता हितानामनुरक्त आर्यः
शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ २३

वाक्यं तु यो नाद्रियतेऽनुशिष्टः
प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी
त्याज्यः स तादृक्त्वरयैव भृत्यः ॥ २४

अस्तब्धमक्लीबमदीर्घसूत्रं
सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं
दूतं वदन्त्यष्टगुणोपपन्नम् ॥ २५

---

°जैष्ठाः). — $^c$) $K_2$ transp. हित्वा and सिंहान्. $K_1$ जंबुकान् (for क्रोष्टुकान्). — $^d$) $D_{3.4.9}$ S (except $T_2$) transp. प्राप्ते and काले. — After 19, K ($K_3$ missing) $D_{1.2.7}$ $T_1$ G (except $G_4$) ins. an addl. colophon [ *Adhy. No.*: $K_{1.2.4.5}$ $D_{1.2.7}$ 35; $T_1$ G (except $G_4$) 37. ]

20 Before 20, K ($K_3$ missing) $D_{1.2.7}$ $T_1$ G (except $G_4$) ins. विदुर उ°. — $^a$) $K_2$ सं- (for न). $T_1$ $G_{1.5}$ $M_{1.4.5}$ सार्वं° (for सर्वं°). — $^b$) $K_{1.4.5}$ $T_1$ G (except $G_4$) transp. भृत्यस्य and भक्तस्य. $M_4$ वर्गस्य; $C_{a.d.s}$ भक्तस्य (as in text). $K_{1.4.5}$ चिराश्रितस्य; $G_3$ हितस्य तस्य (for हिते रतस्य). — $^c$) $D_7$ $T_1$ $G_{1.4.5}$ $M_{1.2}$ यस्मिन् (for तस्मिन्). $T_2$ भक्ताः (for भृत्याः). $D_{3.4.9}$ पितरीवाश्वसंति (for भर्तरि वि°).

21 $^b$) $K_5$ B $Dn_2$ $D_s$ $D_{5.6.8.10}$ $T_2$ राज्यं धनं (for बाह्यं जनं). $K_2$ $D_8$ स जिघृक्षेत्; $D_{3.4}$ संविवर्धेत; $D_9$ संविभजेत; $C_d$ as in text. $D_{3.4.9}$ विद्वान् (for अपूर्वम्). — $^c$) $D_8$ एनं; $T_1$ $G_{1.5}$ अमी ह्येनं (for ह्येनं). $K_5$ $B_4$ $D_n$ $D_{3-7.10}$ $T_2$ वं($D_7$ उ)चिता वै विरुद्धाः; $D_s$ उचिताश्चाव°; $D_{1.2}$ उचि($D_2$ कुपि)ता विरुद्धाः; $D_8$ ह्युचिताव°; $T_1$ $G_{1.3.5}$ M उचितापराधा ($G_3$ °धात्); $C_{a.d.s}$ as in text. — $^d$) $M_{3.4}$ अपि (for हि). $D_8$ अमात्याः (for ह्य°).

22 $^a$) $D_1$ पूर्वाणि; $T_1$ सर्वं न; $G_1$ सर्वान् (for सर्वाणि). — $^b$) $B_{3.4}$ $Dn_2$ $D_{2.5-9}$ $T_2$ °व्यये; $T_1$ G M °व्ययाभ्यां; $C_{a.d.s}$ °व्ययौ (as in text). B D (except $D_{1.10}$) $T_2$ चानुरूपां; $G_2$ अनुरूपान्; $C_{a.d}$ as in text. $G_2$ न (for च). — $^d$) $Dn_2$ सु-; $D_8$ $T_2$ ह (for हि).

23 $^a$) $K_{1.4.5}$ अथ; $D_{10}$ नु (for तु). — $^b$) $K_{1.4.5}$ $B_3$ $D_9$ अतंद्रितः; $K_2$ $B_4$ $D_{s1}$ $D_{1.2.6.7}$ $T_2$ अतंद्री; $B_1$ $D_{3.10}$ अतंद्रः; $T_1$ G M अवक्रः (for अतन्द्रीः). — $^c$) $D_1$ $G_4$ अनुरूप (for अनुरक्त). — $^d$) $D_s$ $D_1$ $G_{4.5}$ आत्मैव. — After 23, $K_5$ $D_8$ ins.:

225* बाणः शाकुनिको मन्त्री एकाकी स्तम्भसेवकः ।
सद्योरोगी विवादी च सप्तैतान्सेवकांस्त्यजेत् ।

24 $^a$) $D_s$ $D_{10}$ च; $G_4$ हि (for तु). $D_1$ वाक्यं च यो नाद्रियते विशिष्टं. — $^c$) $D_9$ ज्ञाना°; S (except $T_2$) आत्मा° (for प्रज्ञा°). — $^d$) $K_1$ इह (for एव).

25 $^a$) $D_2$ अध्वस्तं (for अस्तब्धं). — $^b$) $K_2$ $D_{2.9}$ शक्तं; $D_1$ शुल्कं; $T_1$ $G_{1.5}$ कुशलं; $G_{2-4}$ $M_2$ शक्यं; $M_{1.4}$ शुक्लं; $C_{d.s}$ श्लक्ष्णं (as in text). $G_3$ अवार्यं; $C_{a.d.s}$ अहार्यं (as in text). — $^c$) $K_1$ $Dn_2$ $C_{a.d}$ अरोगिजातीयं; $C_s$ as in text. $K_4$ °वेषं; $D_{10}$ °वाचं; $C_{a.d.s}$ °वाक्यं (as in text).

26 $^a$) $K_{1.4.5}$ $D_8$ विश्वसेत् (for विश्वासात्). $B_4$ D (except $Dn_1$ $D_{1-4.9}$) $T_2$ $C_s$ गेहे (for गेहं). — $^b$) $D_{3.10}$ चिंत° (for चेत°). $T_1$ $G_{2.4}$ $M_{1.4}$ -पि काले; $C_{a.d.s}$ विकाले (as in text). — $^c$) $D_5$ तिष्ठन् (for तिष्ठेत्). $Dn_1$ $D_s$ $D_5$ -नगूढो; T $G_{2.5}$ मू($T_2$ गू)ढो; $G_{3.4}$ M अमूढो

न विश्वासाज्जातु परस्य गेहं
गच्छेन्नरश्चेतयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो
न राजन्यां योषितं प्रार्थयीत ॥ २६

न निह्नवं सत्रगतस्य गच्छे-
त्संसृष्टमन्त्रस्य कुसंगतस्य ।
न च ब्रूयान्नाश्वसामि त्वयीति
सकारणं व्यपदेशं तु कुर्यात् ॥ २७

घृणी राजा पुंश्चली राजभृत्यः
पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृतभक्त एव
व्यवहारे वै वर्जनीयाः स्युरेते ॥ २८

गुणा दश स्नानशीलं भजन्ते
बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च
श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ २९

गुणाश्च षण्मितभुक्तं भजन्ते
आरोग्यमायुश्च सुखं बलं च ।
अनाविलं चास्य भवेदपत्यं
न चैनमाद्यून इति क्षिपन्ति ॥ ३०

अकर्मशीलं च महाशनं च
लोकद्विष्टं बहुमायं नृशंसम् ।
अदेशकालज्ञमनिष्टवेष-
मेतान्गृहे न प्रतिवासयीत ॥ ३१

कदर्यमाक्रोशकमश्रुतं च
वराकसंभूतममान्यमानिनम् ।
निष्ठूरिणं कृतवैरं कृतघ्न-
मेतान्भृशार्तोऽपि न जातु याचेत् ॥ ३२

C. 5. 1309
B. 5. 37. 39
K. 5. 37. 31

---

(for निगूढो). — d) $K_{1.5}$ राजक्यां; $K_{2.4}$ Cd राजकन्यां; B Dn Ds $D_{5-8.10}$ $T_2$ Ca.s °कान्यां; $D_{2-4.9}$ $G_1$ (before corr. as in text) °कीयां (for राजन्यां). $D_1$ योषितो; Cs as in text. $K_{1.2}$ $D_1$ Ca.d प्रार्थयेत; Cs as in text.

27 a) $K_1$ सर्वं°; $K_{2.4.5}$ $D_1$ शत्रु°; B Dn $D_{2-10}$ $T_2$ $G_1$ (by corr.) $M_1$ Ca मंत्र°; $T_1$ $G_1$(before corr.).$_{2-5}$ $M_{2-5}$ पुत्र°; Cs.ap.dp सत्र° (as in text). $G_8$ पृच्छेत् (for गच्छेत्). — b) $K_4$ संस्पृष्टमंत्रस्य; $B_3$ $D_{3.4}$ संसृज्य मंत्र($B_3$ -मान)स्य; $D_{2.5.7}$ G (except $G_3$) $M_1$(*inf. lin.* as in text).$_{2-5}$ संसृष्टमात्रस्य; Ca.d.s as in text. $G_5$ कुलं गतस्य; Ca.d.s as in text. — c) $K_{1.2.5}$ B $Dn_1$ $D_{2-4.5}$(by corr. as in text).$_{6-8.10}$ $T_2$ नाश्वसिमि; G आश्व° ($G_5$ विश्व°) (for नाश्व°). — d) $K_{1.2.4}$ $D_{1-4.8.9}$ $M_1$ (*inf. lin.* as in text) च (for तु).

28 a) $G_{1.5}$ कुशली (for पुंश्चली). — b) $D_9$ पत्नी (for पुत्रो). $K_4$ सपुत्राः; $D_1$ बालपुत्रः. — c) $D_1$ सूना°; Cs सभा°; Ca.d सेना° (as in text). $K_5$ B Dn Ds $D_{3-6.8.10}$ $T_2$ उद्धृतभूतिः; $D_9$ उद्धतो भक्तः; $T_1$ G M °भूमिः; Cs उद्धूत°; Ca.d as in text. — d) $K_{2.4}$ $B_{1.3-5}$ Dn व्यवहारेषु ($K_2$ °रे चैव; $K_4$ °रे च); $B_2$ Ds $D_{1.5.6}$ $T_1$ G (except $G_4$) Ca.d.n व्यवहारे (for व्यवहारे वै). — After 28, B Dn Ds $D_1$(om. lines 5–8).$_{5.6.8}$ $T_2$ Ca ins. 5. 35. 45–46 (with v. l.).

29 a) $K_4$ एते गुणोदयास्तात शीलं भजंते (hypermetric!). — b) $K_1$ B $Dn_2$ Ds $D_{10}$ $G_{2.8}$ Ca °वर्णप्रसिद्धिः; $K_2$ °वर्णशुद्धिः; Cd.s as in text. — c) $Dn_1$ $D_{3-6.9}$ $T_2$ तेज° (for गन्ध°). Ca.d.s cite स्पर्शगन्धौ. — d) $T_1$ G भार्याः; Cs नार्यः (as in text).

30 a) S (except $T_2$ $G_5$ $M_2$) तु; Cs च (as in text). $K_4$ मितभुक्तिं; Ds $G_{1-3}$ $M_2$ मित($G_3$ °ता)भक्तं; Ca.d.s as in text. — b) $T_1$ G M प्रतिभा (for च सुखं). $K_{1.5}$ B Dn Ds $D_{5.6.8.10}$ $T_2$ transp. सुखं and बलं. — c) $K_{1.5}$ B (except $B_4$) D (except $D_{1.2.7-9}$) $T_2$ भवति (for भवेत्). — d) M मा तावद् (for न चैनम्). $K_{1.2.4}$ $D_{1.2.9}$ आद्यूनं; Ca.d.s as in text.

31 a) $K_5$ $D_8$ अधर्म° (for अकर्म°). — c) $B_3$ अशिष्टवेशं; Ds अनिष्टवेगं; $D_1$ °वंशं; Cd.s °वेषं (as in text). — d) $D_9$ $T_1$ $G_1$(by corr. as in text).$_{2-5}$ M एनं (for एतान्). $D_9$ गृहेषु (for गृहे न). $K_{1.2}$ B Ds $D_{1.2.5-8}$ $T_2$ प्रतिवासयेत ($D_8$ °यंति).

32 b) $K_5$ वराकसंधूर्तं; B D (except $D_{1.9}$) $T_2$ $G_1$ (by corr.) $M_{2.5}$ वनौकसं धूर्तं ($D_2$ $M_{2.5}$ °सं भूतं); $G_2$ वराकि°; Cd.s वराकसंभूतं (as in text). — c) $D_1$ सुनिष्ठुरं; $D_9$ नैष्ठूरिणं; Cd.s निष्ठुरी. $K_1$(by corr.).$_2$ $B_{2.4}$ Dn Ds $D_{3.4.8.9}$ दृढवैरं; $D_1$ कष्ट° (for कृत°). — d) $D_1$ चैतान् (for एतान्). $K_2$ यायात्; $D_1$ रक्षेत् (for याचेत्).

33 a) $K_{1.2.4}$ $B_3$ Ds $D_{2-4.9}$ Cs संश्लि($B_3$ आक्लि)ष्टकर्माणम्. $K_4$ अतिप्रचंडं; $B_{3.4}$ $Dn_2$ $D_{1.5.6.9}$ T $G_{1.2.5}$ अतिप्रमादं ($D_1$ °वाचं); $G_{3.4}$ M °प्रमादिनं; Ca.d.s as in text. — b) $K_4$ $D_{3.4}$ S (except $T_2$) वद्धानृतं ($K_4$ °शिनं)

C. 5. 1370
B. 5. 37. 37
K. 5. 37. 37

संक्लिष्टकर्माणमतिप्रवादं
नित्यानृतं चादृढभक्तिकं च ।
विकृष्टरागं बहुमानिनं चा-
प्येतान्न सेवेत नराधमान्षट् ॥ ३३
सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ॥ ३४
उत्पाद्य पुत्राननृणांश्च कृत्वा
वृत्तिं च तेभ्योऽनुविधाय कांचित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा
अरण्यसंस्थो मुनिवद्बुभूषेत् ॥ ३५
हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।
तत्कुर्यादीश्वरो ह्येतन्मूलं धर्मार्थसिद्धये ॥ ३६
बुद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च ।
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ॥ ३७
पश्य दोषान्पाण्डवैर्विग्रहे त्वं
यत्र व्यथेरन्नपि देवाः सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो
यशःप्रणाशो द्विषतां च हर्षः ॥ ३८
भीष्मस्य कोपस्तव चेन्द्रकल्प
द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं प्रवृद्धः
श्वेतो ग्रहस्तिर्यगिवापतन्खे ॥ ३९
तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ४०
धार्तराष्ट्रा वनं राजन्व्याघ्राः पाण्डुसुता मताः ।
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रान्नीनशो वनात् ॥ ४१

---

(for नित्या°). M वा (for च). $K_{1}$ अनृतभक्तिकं; $M_{1.3.4}$ अदृढभक्तिनं (for °भक्तिकं). $K_{2}$ वा (for च). — $^{c}$) K ($K_{3}$ missing) Ds $D_{1-4.7.8}$ Ca.d.s निकृष्टरा($K_{1.5}$ $D_{8}$ °रो)गं; B Dn $D_{5.6.9.10}$ $T_{2}$ $M_{5}$ विसृष्ट° (for विकृष्ट°). $K_{1.4.5}$ $B_{3.4}$ D (except $D_{9}$) $T_{2}$ पटुमानिनं; $T_{1}$ G M बहुभाषिणं ($G_{3}$ °तं) (for °मानिनं). $D_{3}$ $T_{2}$ वा (for च). — $^{d}$) $Ds_{2}$ $D_{2}$ $T_{1}$ $G_{1.4.5}$ om. अपि. $K_{1.4}$ न; $D_{1}$ हि (for अपि). $K_{1.4}$ निषेवेत; $D_{9}$ न भाषेच्च (for न सेवेत).

34 $^{a}$) $K_{4}$ अपि (for हि). — $^{b}$) $K_{4}$ अपि; $D_{9}$ $T_{1}$ $G_{1.2.5}$ हि (for च). — $^{c}$) $D_{2}$ ह्येतौ; $D_{3-6}$ $T_{2}$ चोभौ (for एतौ). M °बंधना ह्येते. — $^{d}$) $G_{2}$ शिष्यतः (for सिध्यतः).

35 $^{a}$) S (except $T_{2}$) अनृणश्च भूत्वा (for अनृणांश्च कृत्वा). — $^{b}$) $D_{7}$ अथ (for अनु-). — $^{c}$) $D_{9}$ कुमारीं. $K_{1}$ °पादयित्वा (for °पाद्य सर्वा). — $^{d}$) $K_{1}$ $G_{3.4}$ M ह्यरण्यसंस्थः ($K_{1}$ °स्थां); $K_{2}$ $D_{7}$ चारण्यसंस्थः (for अरण्यसंस्थः). $K_{1}$ तु मुनिः; $K_{2}$ $D_{7}$ च मुनिः; $K_{4}$ $B_{3}$ अपि मुनिः; $B_{1.2.4.5}$ Dn Ds $D_{2-4.6.8-10}$ $T_{2}$ अथ मुनिः; $D_{5}$ नृपतिः (for मुनिवत्). — After 35, $K_{5}$ reads 55–58.

36 $^{a}$) $D_{9}$ $G_{4}$ च (for यत्). — $^{b}$) $G_{4}$ सर्वभूतसुखावहं. — $^{c}$) $K_{2}$ om. तत्. $D_{2}$ यत् (for तत्). B $Dn_{2}$ Ds $D_{5.6.10}$ $T_{2}$ ईश्वरे (Ds $D_{5}$ °रं); Ca.d.s ईश्वरो (as in text). $K_{5}$ S (except $T_{2}$ $M_{2}$) अपि; Ca.d.s हि (as in text). $D_{2}$ एकं; Ca.d.s एतत् (as in text). — $^{d}$) B Dn Ds $D_{8.10}$ $T_{2}$ सर्वार्थं° (for धर्मार्थं°).

37 $^{a}$) $K_{4}$ B (except $B_{2}$) $D_{2-6.10}$ $T_{2}$ $G_{1.2}$ Cn वृद्धिः; Ds बुद्धेः; Ca.d.s.np बुद्धिः (as in text). — $^{c}$) $T_{1}$ $G_{1.2}$ अस्ति (for स्यात्). — $^{d}$) $K_{5}$ $D_{9}$ $T_{1}$ $G_{1.4.5}$ $M_{1.2}$ वृत्तिभयं; Ds Cn अवृत्तिभयं; Ca आवृत्ति°.

38 $^{a}$) $Dn_{1}$ $D_{2}$ पश्येह; $D_{10}$ यत्र (for पश्य). $D_{10}$ अदोषैः (for दोषान्). — $^{b}$) $K_{2.5}$ यैः प्र-; $G_{4}$ यस्य (for यत्र). B $Dn_{2}$ Ds $D_{5.6.8.10}$ $T_{2}$ व्यथेयुः (for व्यथेरन्). S (except $T_{2}$) सर्वदेवाः (for देवाः सशक्राः). — $^{c}$) $Dn_{1}$ $M_{4}$ पुत्रे (for पुत्रैर्). $G_{5}$ सर्वैः (for वैरं). $K_{2}$ भृशं (for नित्यं). — $^{d}$) $K_{1.2}$ $D_{1.2}$ प्रहर्षः; $Dn_{1}$ $D_{3.4.7.9}$ संप्रहर्षः (for च हर्षः).

39 $^{a}$) $G_{2}$ रोषः; Cs कोपः (as in text). $K_{1.5}$ B (except $B_{2}$) $Dn_{1}$ $D_{2-5.8}$ T $G_{1.5}$ चैवेंद्रकल्प; $K_{2}$ वै चेंद्र°; $D_{6}$ चैव प्रकल्प; $D_{10}$ राजेंद्र कोपो; $G_{4}$ वेंद्र° (for चेन्द्र°). — $^{d}$) $T_{1}$ $G_{1.5}$ Ca.d श्वेतग्रहः; $G_{4}$ केतु° (for श्वेतो ग्रहः). $D_{1.8}$ आपतेत् (for आपतन्). $D_{1}$ च; Ds खं (for खे). S स्वापतन्वै ($G_{4}$ °स्त्वाष्ट्रवधे) यथैव (for तिर्यगिवापतन्खे).

40 $^{a}$) $M_{1.3.4}$ तु (for च).

41 =(var.) 5. 29. 47. — $^{b}$) $G_{4}$ व्याघ्राः पंच च पांडवाः. — $^{c}$) $G_{3}$ भिंधि (for छिन्धि). — $^{d}$) $K_{1.2.5}$ $D_{2.8.9}$ M निनशुः; $B_{4}$ Dn Ds $D_{5.6.10}$ $T_{2}$ नीनशन्; Ca.d.s नीनशो (as in text). $D_{3.4.7}$ $M_{1}$ (*sup. lin.*) व्याघ्रा नेशुर्वनं विना; $G_{3}$ व्याघ्र न न वसेद्वनं (sic).

42 $^{b}$) $Dn_{1}$ $D_{2}$ m. $_{3.4.9}$ $G_{4}$ (by transp.) न स्युर्व्याघ्रा;

न स्याद्वनमृते व्याघ्रान्व्याघ्रा न स्युर्ऋते वनम् ।
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ॥ ४२
न तथेच्छन्त्यकल्याणाः परेषां वेदितुं गुणान् ।
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ४३
अर्थसिद्धिं परामिच्छन्धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ४४
यस्यात्मा विरतः पापात्कल्याणे च निवेशितः ।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४५
यो धर्ममर्थं कामं च यथाकालं निषेवते ।
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ४६
संनियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन्यश्चापत्सु न मुह्यति ॥ ४७
बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ४८
अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
धनलाभस्तृतीयं तु बलमाहुर्जिगीषवः ॥ ४९
यत्त्वस्य सहजं राजन्पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५०
येन त्वेतानि सर्वाणि संगृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ५१
महते योऽपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥ ५२
स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु ।
भोगे चायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ५३
प्रज्ञाशरेणाभिहतस्य जन्तो-
श्चिकित्सकाः सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि
नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५४

C. 5. 1391
B. 5. 37. 58
K. 5. 37. 58

$K_{2.4}$ $D_8$ न व्याघ्राश्च ($K_4$ °घ्राः स्युः); $D_3$ न स्युर्व्याघ्रं (for व्याघ्रा न स्युर्). $D_1$ $G_4$ वनात् (for ऋते). $K_2$ B (except $B_3$) $Dn_1$ $D_{2-4.7}$ वनात्; $D_1$ $G_4$ ऋते (for वनम्). — $^c$) $D_1$ च; S (except $T_2$ $M_5$) तु (for हि). — $^d$) $G_{1-8}$ व्याघ्रं (for व्याघ्रान्). — Cf. 5. 29. 48.

43 $^a$) $K_{1.5}$ B D (except $D_{1.9}$) $T_2$ कल्याणान्; $K_4$ $T_1$ G (except $G_5$) कल्याणाः (for अकल्याणाः). — $^c$) $K_{1.2.4}$ यथैव; $T_1$ तदेषां (for यथैषां). — $^d$) $D_2$ वैगुण्यं. $D_9$ S (except $T_2$) पापवेदिनः.

44 $^a$) $G_2$ $M_2$ ऋच्छन्; $G_4$ ऋश्यन् (for इच्छन्). — $^b$) $K_1$ उदितः; $D_1$ अभितः (for आदितः).

45 $^a$) $D_{3.4}$ विगतः; M विमुखः (for विरतः). — $^b$) $K_2$ M वि($M_1$ अभि)निवेशितः; $G_{3.4}$ च निवेदितः (for च निवेशितः). $K_5$ कल्याणानि निषेवते. — $^c$) G (except $G_3$) पूर्वम् (for सर्वम्). $M_2$ इयं (for इदं), and बुद्धा (for बुद्धं).

46 $^a$) $K_4$ $D_9$ $G_3$ अर्थ- (for अर्थं). $G_4$ यो धर्मार्थकामं च. — $^b$) $D_{3.4}$ °कामं; $G_4$ °काले (for °कालं). — $^c$) $D_9$ धर्मकामार्थसंयुक्तः; $T_1$ $G_4$ °संदोहात्; $G_{1-3.5}$ °संयोगात्. — $^d$) $T_1$ $G_{1.5}$ M नंदति (for विन्दति).

47 $^d$) M अन्यश्चापत्सु (for यश्चापत्सु न).

48 $^a$) $K_1$ प्रोक्तं; $K_2$ $D_5$ $D_{1-4.7.9}$ राजन् (for नित्यं). — $^b$) $K_5$ तत् (for मे). — $^c$) $K_{1.4}$ यत्तद्; $K_2$ $D_1$ G (except $G_3$) M यत्र; $D_9$ $T_2$ यच्च; $C_s$ यत्तु (as in text). $M_2$ (hapl.) om. $48^d$–$50^c$. — $^d$) $B_3$ श्रेष्ठं तद्; S ($M_2$ om.) प्रथमं (for कनिष्ठं).

49 $M_2$ om. 49 (cf. v. l. 48); $D_7$ om. $49^{ab}$. — $^c$) $T_1$ G (except $G_3$) M ($M_2$ om.) °लाभं (for °लाभस्). B D (except $D_{1.2.7-9}$) $T_2$ तृतीयं धनलाभं तु. — $^d$) $K_{4.5}$ जिगीषया; B D (except $D_{1.2.7.8}$) $T_2$ मनीषिणः (for जिगीषवः).

50 $M_2$ om. $50^{abc}$ (cf. v. l. 48). — $^a$) $D_{3.8}$ $T_1$ $G_5$ यत्तस्य (for यत्त्वस्य). — $^c$) $G_{2.4}$ M ($M_2$ om.) अभिजातं बलं; $C_s$ as in text. — $^d$) $K_2$ transp. तत् and चतुर्थं. S (except $T_2$) चतुर्थं बलमुच्यते.

51 $^a$) $K_4$ $D_8$ $G_5$ च (for तु). — $^c$) $T_1$ $G_3$ तत् (for यत्). $K_{1.4.5}$ $D_{3.4.8.9}$ अपि बलं (for बलं श्रेष्ठं). — $^d$) S (except $T_2$) प्रज्ञानं ($G_{3.4}$ $M_5$ °नां) बलम् (for तत्प्रज्ञाबलम्).

52 $D_7$ om. 52. — $^a$) $K_4$ न; $D_9$ S (except $T_2$) च (for यो). $K_4$ $T_1$ $G_{1.3.5}$ उपकाराय (for अप°). — $^b$) $K_{1.4}$ पर°; $T_1$ $G_4$ नय° (for नर°). $M_1$ तु यः (for नरः). — $^c$) K ($K_3$ missing) $D_9$ G (except $G_1$) समासाद्य (for °सज्य). — After 52, $T_1$ $G_4$ ins. (with v. l.) an *anticipation* of 5. 39. $32^a$–$34^b$, repeating the passage in its proper place.

53 $^b$) $K_1$ $D_9$ शत्रुसेविनि; $K_{4.5}$ $D_7$ °सेवने. $B_{2.4.5}$ Dn $D_5$ $D_{8.10}$ स्वाध्यायप्रभुशत्रुषु. — $^c$) $K_{2.5}$ B D (except $D_9$) $T_2$ भोगे($D_{10}$ °गि)षु (for भोगे च). $D_{8.9}$ आयुधि (for आयुषि). M चाश्वासं (for विश्वासं). — $^d$)

C. 5. 1392
B. 5. 37. 59
K. 5. 37. 59

सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ।
नावज्ञेया मनुष्येण सर्वे ते ह्यतितेजसः ॥ ५५
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
न चोपयुङ्क्ते तद्दारु यावन्नो दीप्यते परैः ॥ ५६
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तदा तच्च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ५७
एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ५८
लताधर्मा त्वं सपुत्रः शालाः पाण्डुसुता मताः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ५९
वनं राजंस्त्वं सपुत्रोऽम्बिकेय
सिंहान्वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्ये-
त्सिंहा विनश्येयुर्ऋते वनेन ॥ ६०

इति श्रीमहाभारते उद्योगपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

$D_3$ न (for कः). $D_1$ इच्छति (for अर्हति). — After 53, $T_1$ ins. an *anticipation* of 5. 39. 34$^{cd}$, repeating the line in its proper place (cf. v. l. 52).

54 $^{a}$) $D_{3.4}$ नि° (for अभि°). — $^{b}$) $D_1$ transp. न and च. — $^{c}$) $K_4$ $D_1$ विधिसंप्रयुक्ता (for न च मङ्गलानि). — $^{d}$) $K_2$ $D_1$ $T_1$ G $M_2$ आथर्व($K_2$ °र्वा)णं ($M_2$ °णो); Ca. d. s आथर्वणाः (as in text). $K_{1.4}$ च; $G_{1.2}$ M (except $M_5$) वा (for the second न). $D_1$ प्राप्यगदाः; $G_3$ प्राप्य गताः; $G_4$ व्याप्य तताः (for नाप्य गदाः). Ca. d. s cite अगदाः (as in text). $K_{1.4.5}$ समृद्धाः (for सुसिद्धाः).

55 $K_5$ reads 55–58 after 35. — $^{a}$) $K_4$ $D_{3.4.9}$ विप्र° (for सिंह°). — $^{b}$) $G_2$ °पुत्राः; Cs °पुत्रः (as in text). — $^{d}$) B D (except $D_{1-4.8.9}$) $T_2$ ह्येते (for ते हि). $T_1$ G M सम° (for ह्यति°).

56 $^{a}$) $K_4$ S (except $T_1$ $G_4$) अग्नेस् (for अग्निस्). — $^{b}$) $K_4$ $Dn_1$ $D_{3.4.9}$ S (except $G_2$ $M_5$) गूढं (for गूढस्). $D_8$ चर° (for तिष्ठ°). — $^{c}$) $K_5$ $Dn_1$ $D_{2-4.6}$ (*sup. lin.*)$_{.8}$ (by corr.) °भुंक्ते; Ds $D_{10}$ °युक्तं (for °युङ्क्ते). — $^{d}$) $K_{4.5}$ B $Ds_1$ $D_{1.2-5.7.10}$ T G नोद्दीप्य($D_1$ °दीर्य)ते (for नो दीप्यते). Ca. d. s उद्दीप्यते.

57 $^{a}$) $D_8$ एष (for एव). M ($M_1$ *inf. lin.* as in text) यद्दारु (for दारुभ्यो). — $^{b}$) $K_1$ $Ds_2$ $D_{1.8}$ $T_1$ G (except $G_1$) $M_1$ (*sup. lin.* as in text) यथा (for यदा). — $^{c}$) $T_1$ $G_{2.3}$ तथा (for तदा). B Ds $D_{3-6.8.10}$ $T_2$ तद्दारु (for तदा तत्). $M_1$(*inf. lin.* as in text)$_{.2}$ तदाल्पभवनं चान्यत्. — $^{d}$) $K_4$ निर्दहेत् (for °र्दहति). $K_4$ स्वेन; $D_8$ $M_2$ आत्म- (for आशु).

58 =(var.) 5. 38. 14.

59 =(var.) 5. 29. 49. — $^{a}$) $Dn_1$ $D_{1-4.9}$ $T_2$ °धर्मः (for °धर्मा). $Dn_1$ $D_{2-4.9}$ $G_{4.5}$ (by transp.) सपुत्रस्त्वं; $T_1$ तु ते पुत्राः. $K_5$ $D_3$ सपुत्रस्त्वं लताधर्माः; $G_{1.2}$ लतासधर्मास्त्वत्पुत्राः. — $^{b}$) $B_5$ $Dn_2$ Ds $D_1$ S (except $T_2$) Cs सालाः; Ca. d. n शालाः (as in text). $K_4$ (*sup. lin. sec. m.*) हि ते (for मताः). — $^{c}$) $K_1$ $G_4$ वर्त° (for वर्ध°). $K_{2-5}$ $D_7$ जातु वर्धते (for वर्धते जातु). — $^{d}$) $K_{1.2.4}$ $Dn_1$ $Ds_2$ $D_7$ M °श्रिताः (for °श्रिता).

60 $^{a}$) $K_5$ $B_4$ D (except $D_{1.5.6.8.9}$) $T_2$ तव पुत्रो (for त्वं सपुत्रो). — $^{b}$) $Ds_2$ $D_{8.9}$ $G_2$ पांडवाः (for पाण्डवान्). — $^{c}$) $K_2$ $T_1$ $G_{1.5}$ तु; $D_9$ च (for हि). $K_2$ हि नश्येत्; $D_9$ विनश्यति (for विनश्येत्). — $^{d}$) M ($M_1$ *inf. lin.* as in text) व्याघ्रा (for सिंहा). $K_{1.5}$ वनं च; $D_{3.4.9}$ वनाच्च; $T_1$ $G_{1-4}$ वनात्तु; $G_5$ M वनं तु (for वनेन).

Colophon om. in $K_2$ $D_7$; $K_3$ missing. — *Major parvan*: $G_3$ उद्यम (for उद्योग)! — *Sub-parvan*: $K_4$ संजययान; B Dn Ds $D_{1.3-6.9.10}$ T $G_{1.2}$ M प्रजागर. — *Adhy. name*: $K_{1.4.5}$ $B_1$ $D_{1.2.3.10}$ विदुरवाक्यं; $G_1$ आयुर्वर्धनादि; $G_2$ आवर्धकथनं (sic); M आयुर्वर्धनोपायकथनं. — *Adhy. no.* (figures, words or both): $K_1$ $T_2$ 37; $D_5$ 36; $D_6$ (*sec. m.*) 34; $T_1$ G M 38. — *S'loka no.*: Dn 64; $D_8$ 65.

## 38

☞ This adhy. is missing in $K_3$ (cf. v. l. 5. 32. 15).

## ३८

विदुर उवाच ।

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १

पीठं दत्त्वा साधवेऽभ्यागताय
आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थं
ततो दद्यादन्नमवेक्ष्य धीरः ॥ २

यस्योदकं मधुपर्कं च गां च
नमन्त्रवित्प्रतिगृह्णाति गेहे ।
लोभाद्भयादर्थकार्पण्यतो वा
तस्यानर्थं जीवितमाहुरार्याः ॥ ३

चिकित्सकः शल्यकर्तावकीर्णी
स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च
भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ४

अविक्रेयं लवणं पक्वमन्नं
दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं मूलफलानि शाकं
रक्तं वासः सर्वगन्धा गुडश्च ॥ ५

अरोषणो यः समलोष्टकाञ्चनः
प्रहीणशोको गतसंधिविग्रहः ।
निन्दाप्रशंसोपरतः प्रियाप्रिये
चरन्नुदासीनवदेष भिक्षुकः ॥ ६

नीवारमूलेङ्गुदशाकवृत्तिः
सुसंयतात्माग्निकार्येष्वचोद्यः ।
वने वसन्नतिथिष्वप्रमत्तो
धुरंधरः पुण्यकृदेष तापसः ॥ ७

अपकृत्वा बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।

C. 5. 1405
B. 5. 38. 8
K. 5. 38. 8

1 = Mahābhāṣya 6. 1. 84 (ed. Kielhorn, vol. 3, p. 58); = Manu 2. 120. — a) D8 G3 M उत्क्रमंति (D8 G3 °ते). — b) K1 D6 (*sup. lin.* as in text). 7 G1. 4. 5 आगते; Ca. d. s आयति (as in text). — c) G4 अभ्यु° (for प्रत्यु°).

2 a) M स्वागते (for साधवे). G4 हि; M अति- (for अभि-). — b) K4 D9 परिमृज्य; D2 परिविमृज्य; G2. 4. 5 °निर्मृज्य; Ca. d. s परिनिर्णिज्य (as in text). — c) B2–4 D3. 4 G2 स्पृष्ट्वा; D1 दृष्ट्वा (for पृष्ट्वा). K5 D7 S (except T2) परिवेद्य; D9 Cd प्रवेद्य; Ca. s as in text. K4 B2–4 Dn2 D5–7. 10 T2 Cn आत्म(B2 °त्नु)संस्थां; T1 G M आसनस्थं; Ca. d. s as in text. — d) M2 स्थितो (for ततो). D1 अवेत्य (for अवेक्ष्य).

3 a) D1 गाः (for गां). — b) K1 M1. 3–5 नामंत्रवत्; K2. 4. 5 D1. 8 M2 नामंत्रवित् (for नमन्त्रवित्). — c) K1 B (except B3) Dn Ds D2–4. 7. 10 G1. 2 अथ कार्पण्यतो वा (G2 °ण्यहेतोः); D1 अर्थतः कामतो वा; D8 अर्थतः कार्यतो वा; D9 अथ कार्पण्यभावात्. — d) K (K3 missing) D9 M (except M2) अर्थवत् (for अनर्थं). M नाहुर् (for आहुर्).

4 b) D1 तथा; G M पापो (for क्रूरो). K1 transp. मद्यपो and भ्रूणहा. D1 मधुंपो (for मद्यपो). — c) K1 B1 श्येनाजीवी; D3. 4 श्येनोपजीवी; Ca. d as in text. K5 B3 D8. 9 श्रुतिविक्रेयकः; T1 G1. 4. 5 श्रुत°; M °विक्रयी; Ca. d वेदविक्रा°. — d) D1 M2 हि (for अपि).

5 c) K2. 5 D1. 2 (m as in text). 7–9 मद्यं; D3. 4 तिलान्; G4 तिलं (for तिला). K2. 5 B Dn D2. 7. 10 फलमूलानि (K5 °लं च) (for मूल°). — d) D10 नीली; T1 G4. 5 M1. 3. 4 रत्नं (for रक्तं). T1 G4 गावः (for वासः). K1 अगुरुः; B Dn2 Ds D5 (before corr.). 6. 8 गुडाः; D2 अगुळं (for गुडः).

6 a) B3. 4 Dn S (except M3–5) समलोष्टाश्मकांचनः (hypermetric!) (for समलोष्ट°). — b) K2. 4 D1. 6. 8 प्रहीणकोशो; S (except T2) प्रक्षीणशोको. — D1 om. $6^{c}$–$7^{b}$. — c) T1 G2. 3. 5 °प्रियौ; Cs °प्रिये (as in text). — d) K1 चरति; B Dn Ds D5. 6. 10 T2 त्यजन् (for चरन्).

7 D1 om. $7^{ab}$ (cf. v. l. 6). — b) K2 सुशंसितात्मा; Ds स्वसंय°; D6 सुसंजि°; D9 S (except T2) सुसंशि°. K5 ह्यग्निकार्येषु; D2 गुरु°; G5 निज°; Cs अग्नि° (as in text). K1. 2. 5 D3 अनोद्यः; K4 B3. 4 Dn D3–6. 10 T G3. 4 चोद्यः; Ds D7 चोक्षः; D9 दक्षः; G2. 5 अशोच्यः; Ca. d. s अचोद्यः (as in text).

8 a) B Dn Ds D10 T1 अपकृत्य; D9 अपहृत्वा. — b) K2 मा (for न). S (except T2 G3) दूरस्थोपि न विश्वसेत्. D3 M2 om. $8^{c}$–$9^{b}$. — d) D9 ताभ्यां (for याभ्यां). Dn1

C. 5. 1405
B. 5. 38. 8
K. 5. 38. 8

दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ८
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ९
अनीर्ष्युर्गुप्तदारः स्यात्संविभागी प्रियंवदः ।
श्लक्ष्णो मधुरवाक्स्त्रीणां न चासां वशगो भवेत् ॥ १०
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ११
पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।
गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ।
भृत्यैर्वणिज्याचारं च पुत्रैः सेवेत ब्राह्मणान् ॥ १२
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ १३
नित्यं सन्तः कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ १४
यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥ १५
करिष्यन्न प्रभाषेत कृतान्येव च दर्शयेत् ।
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥ १६
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा तत्र मन्त्रो विधीयते ॥ १७
नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाप्यनात्मवान् ।

---

D3 हिंस्यात्स (for हिंसति). K4 हिंसकः (for हिंसितः). D2 याभ्यां दूरे हि नास्ति सः.

9 =Ādi, App. I, No. 81, lines 125–126; =(var.) C. 12. 5055$^{cd}$–5056$^{ab}$; =Harivaṁs'a 1164; =(var.) Pañcatantra 2. 43 and 4. 14. — D8 M2 om. 9$^{ab}$ (cf. v. l. 8). In B2, the portion from 9$^{a}$–34$^{b}$ is lost on a missing fol. — $^{b}$) K1. 2. 4 D2. 9 M1. 4. 5 अपि न (for नाति-). — $^{c}$) Ds G4 विश्वस्तात् (for विश्वा°). G5 आपन्नं (for उत्पन्नं). — $^{d}$) K4 D7 मूलात् (for मूलानि). S (except T2) समूलमपि कृंतति.

10 B2 missing (cf. v. l. 9). — $^{a}$) K4 B (B2 missing) D (except Ds D8. 10) T G1–3 Cd. s अनीर्षुः; G5 अनिशं (for अनीर्ष्युः). K5 B (B2 missing) D (except D1–4. 7. 9) T2 च (for स्यात्). — $^{c}$) K2 G4. 5 M शक्तो; D8 तीक्ष्णो; D9 दक्षो; G1 शक्यो; Ca. d. s श्लक्ष्णो (as in text). — $^{d}$) D9 M1. 2 तासां; G5 ह्यासां (for चासां).

11 =(var.) Manu 9. 26. — B2 missing (cf. v. l. 9). — $^{a}$) K2 D2. 7 °राज (for °भागाः). — $^{b}$) D10 सुपुण्या (for पुण्याश्च). Ds2 G4 कृत° (for गृह°). — $^{c}$) K1. 4. 5 आहुः (for उक्ताः). — $^{d}$) K1 ताः सु-; K4 तास्तु (for तस्माद्).

12 B2 missing (cf. v. l. 9). — $^{ab}$) K D1. 7. 9 om. 12$^{ab}$. S (except T2) भोजने मातरं कुर्यात्पितरं दार(T1 G1 चात्म-; G2 स्वात्म-; G5 ह्यात्म)रक्षणे. — $^{c}$) K1 आत्मसंमितं; K4 आत्मसदृशं (for चात्मसमं). D9 दत्वा; S (except T2) कुर्यात् (for दद्यात्). — $^{d}$) G4 transp. स्वयं and कृषिं. — $^{e}$) K1 वणिज्याभारं; K2. 4. 5 B (B2 missing) Dn Ds D2. 5. 9. 10 वाणिज्यचारं; D6. 7 वाणिज्यभारं; T2 G2 M2 वणिज्यचारं (G2 °रैः). D1 भृत्यैः शौर्यं च वाणिज्यं; D3. 4 भृत्यैश्च वणिजाचारं. — $^{f}$) B D (except D1. 2. 7) T2 च द्विजान् (for ब्राह्मणान्).

13 =Ādi. 1423*; =5. 15. 32; =Manu 9. 321. — B2 missing (cf. v. l. 9). — $^{c}$) K4 एषां (for तेषां). G4 सर्वगतं (for °त्रगं). — $^{d}$) B3 स्वात्म- (for स्वासु).

14 =(var.) 5. 37. 58. — B2 missing (cf. v. l. 9). K2. 5 om. 14; D10 om. 14$^{ab}$.

15 =C. 12. 1412$^{cd}$–1413$^{ab}$. — B2 missing (cf. v. l. 9). — $^{b}$) M1 हि (for the first च). K4 D9 बाह्याश्चाभ्यंतरे स्थिताः. — $^{c}$) K1 सर्वविच्छक्तः (for °तश्चक्षुः). — $^{d}$) K1 सर्वम् (for चिरम्). T1 G1. 2. 5 ऋच्छति (for अश्नुते).

16 B2 missing (cf. v. l. 9). — $^{a}$) G1. 2. 5 मंत्रितं (for करिष्यन्). — $^{b}$) K2. 4 (by corr.) B (B2 missing) D (except D5. 6) तु (for च). D5. 6 T2 निर्दिशेत् (for दर्शयेत्). — $^{c}$) K1. 2 D1. 2 धर्मार्थकाम°; Ds सर्वकामार्थ°; G3–5 M1. 3. 4 धर्मकामार्थकार्येषु. — $^{d}$) K1 G4 यथा; G3 तदा (for तथा). Dn1 Ds D1. 6 विद्यते (for भि°).

17 =(var.) Manu 7. 147. — B2 missing (cf. v. l. 9). — $^{a}$) K4 समारुह्य; D1 समारोहेत्; G3 समागम्य (for उपारुह्य). — $^{b}$) K1 D8 G3. 4 M प्रासादे (for °दं). — $^{c}$) G3 वाग्निशाले; Ca. d. s निःशलाके (as in text). — $^{d}$) B D2–6 T2 अभिधीयते; M1 (*inf. lin.*) न भिद्यते (for विधीयते).

18 B2 missing (cf. v. l. 9). — $^{d}$) D1 नात्मवान्; Ca. d. s अनात्म° (as in text). — After 18$^{cd}$, N (K3

अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥ १८
कृतानि सर्वकार्याणि यस्य वा पार्षदा विदुः ।
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥ १९
अप्रशस्तानि कर्माणि यो मोहादनुतिष्ठति ।
स तेषां विपरिभ्रंशे भ्रश्यते जीवितादपि ॥ २०
कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरं महत् ॥ २१
स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥ २२
अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुधेयं वसुंधरा ॥ २३
नाममात्रेण तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २४
ब्राह्मणो ब्राह्मणं वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २५
न शत्रुरङ्कमापन्नो मोक्तव्यो वध्यतां गतः ।
अहताद्धि भयं तस्माज्जायते नचिरादिव ॥ २६
दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च ।

C. 5. 1427
B. 5. 38. 30
K. 5. 38. 30

---

B2 missing) T2 G1 M1 ins.:

226* नापरीक्ष्य महीपालः कुर्यात्सचिवमात्मनः ।
[ D1 °भर्ता (for °पालः). ]

— $^{c}$) K2.4 D1.7 अमात्येषु; D9 T2 °त्यैर्हि; G4 °तेभ्यः (for °त्ये हि).

19 B2 missing (cf. v. l. 9). — $^{a}$) G5 जितानि (for कृ°). — $^{b}$) M1.2 om. वा. K1 D2.8 G4 वै; D1 ते (for वा). K2.4 B (B2 missing) Dn Ds D7.10 T2 G3 M3–5 पारिषदा; T1 G1.2.5 राज्ञः परे (for वा पार्षदा). K4 B (B2 missing) Dn Ds D1.3–6.8.9 T2 ins. after $19^{ab}$: D7, after 19: D10 (which reads $20^{ab}$ for the first time after $19^{ab}$) ins. after $20^{ab}$:

227* धर्मे चार्थे च कामे च स राजा राजसत्तमः ।

— D6.9 om. $19^{cd}$. — $^{d}$) G4 बुद्धिर् (for सिद्धिर्). K1 न संशयः; K5 D8 अनुत्तमा; G4 असंशया (for असंशयम्).

20 B2 missing (cf. v. l. 9). D10 reads $20^{ab}$ (for the first time) after $19^{ab}$. — $^{a}$) K2 B (B2 missing) Dn Ds D10 कार्याणि (for कर्मा°). — $^{c}$) T1 G1.2.5 M2 सर्वेषां (for स तेषां). K1.2 B (B2 missing) D (except D1.3.4) T2 Cs वि(K1 च)परिभ्रंशात्; G4 °भ्रंशो (for °भ्रंशे).

21 B2 missing (cf. v. l. 9). — $^{a}$) K2 D7 च; Ds2 नु (for तु). — G3 (hapl.) om. $21^{bc}$. — $^{b}$) M2 मानुषानां (for अनुष्ठानं). — $^{d}$) K2.4.5 B4.5 D (except Ds D9) T2 मतं; G3 M3–5 भवेत् (for महत्). — K4 B (B2 missing) Dn Ds D1.2 (marg.).3–6.8–10 T2 ins. after 21: D7, after 22:

228* अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ।

[ (L. 1) K4 D1.7.9 अब्रुवन्वै (for अनधीत्य). K4 ययो (*sup. lin.* त्रयो) (for यथा). ]

22 B2 missing (cf. v. l. 9). D6 om. $22^{b}$–$23^{a}$; D10 om. $22^{d}$–$23^{a}$. — $^{c}$) K1.4 D3 अनविज्ञात°; D3.4 T2 अनभिज्ञात°; D5 अनभिज्ञान°; D9 अनाभिजात°; D10 अनंतज्ञान°; T1 G M (except M2) अनवज्ञान°; Ca.d.s as in text. — $^{d}$) G4 स्वामिनः (for स्वाधीना). D1 स्वधीना तस्य मेदिनी. — After 22, D7 ins. 228*.

23 B2 missing (cf. v. l. 9). D6.10 om. $23^{abc}$ (cf. v. l. 22). — $^{a}$) K4 D9 अपेत°; Ca अवंध्य° (for अमोघ°). Cd cites अवन्धौ. — $^{b}$) K5 B (B2 missing) D7.8 कृत्वान्ववेक्षिणः; D1.9 T2 G1–4 M1.3–5 कृत्यान्यवेक्षिणः (D1.9 G1.2 °क्षतः); D2 T1 G5 M2 कृत्वान्यवेक्षितः (D2 °क्षतः; M2 °क्षिणः); D5m कृत्यानुवेक्षिणः. — $^{c}$) A few MSS. and Ca.s °कोषस्य. — $^{d}$) K1.2.5 B (B2 missing) Dn2 Ds D1.2.6–8.10 Ca वसुदैव; K4 Dn1 D3–5.9 T2 स्वाधीनेयं (for वसुधेयं). Cd cites वसुदा.

24 B2 missing (cf. v. l. 9). — $^{a}$) K2 तुष्येन्न; Ds2 D5.6 तुष्येत्तु; Ca.d as in text. — $^{b}$) Ds D10 M (M1 *sup. lin.* as in text) तु; D5.6 न (for च). — $^{c}$) G5 भृत्येषु (for °भ्यो). K1 विभजेत्; G5 -पि सृजेत् (for विसृजेत्). D6 S (except T G1.2) अर्थं (for अर्थान्).

25 B2 missing (cf. v. l. 9). — $^{a}$) B4 Dn D10 transp. ब्राह्मणो and ब्राह्मणं. T2 ब्राह्मणान्; Cd ब्राह्मणं (as in text). — $^{b}$) D7 ततः; G3 यथा (for तथा). — $^{c}$) B1.3.4 G3 अमात्यो (for अमात्यं), and नृपतिं (for नृपतिर्).

26 B2 missing (cf. v. l. 9). — $^{a}$) B (B2 missing) D (except D1–4.7.9) T2 वशम्; G1 (*sup. lin.* as in text) अंतम् (for अङ्कम्). — D3.4.9 ins. after $26^{ab}$: K4 D5 (marg.).7.8 T2, after 26:

229* न्यग्भूत्वा पर्युपासीत वध्यं हन्याद्बले सति ।

[ K4 D5.7.8 °भूतः (for °भूत्वा). K4 D3 वधे (for बले). ]

K4 D5 (marg.).7.8 cont.:

230* अहन्यमानो भयकृच्च हताज्जायते भयम् ।

C. 5. 1428
B. 5. 38. 30
K. 5. 38. 30

नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ २७
निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ २८
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ २९
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३०
विद्याशीलवयोवृद्धान्बुद्धिवृद्धांश्च भारत ।
धनाभिजनवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ३१
अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ३२
अविसंवादनं दानं समयस्याव्यतिक्रमः ।
आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक् ॥ ३३
अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।
अपि संक्षीणकोशोऽपि लभते परिवारणम् ॥ ३४
धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ३५
असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ।
तादृङ्नराधमो लोके वर्जनीयो नराधिप ॥ ३६
न स रात्रौ सुखं शेते ससर्प इव वेश्मनि ।
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ ३७
येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।

— D9 om. $26^{cd}$.

27 B2 missing (cf. v. l. 9). — a) K1.5 G3 देवतासु; Ca.d as in text. D2 G1.2 M तु (for च). B4 Dn D1.6.7.10 प्रयत्नेन; D3.4.9 विशेषेण; G4 च यत्नेषु (for च यत्नेन). — b) Ca.d ब्राह्मणादिषु. — c) D9 भवेत् (for सदा). — d) D1 अपि (for च). K4 वृद्धबाल-तपस्विषु; D3.4 T1 G1 बालवृद्धातुरेषु च; D9 बालवृद्धतपस्विषु.

28 B2 missing (cf. v. l. 9). — a) K1.2 D1 G5 निरर्थ-; K4 D3.4.9 अल्पार्थं; G4 अनर्थं (for निरर्थं). K4 D9 ज्ञात्वा (for प्राज्ञो). — b) G3 (before corr.) मूढ-चेतसं; G4 मूढसेविषु. — c) Ca न (for च). D2 भजते; Ca.d लभते (as in text). G3 वित्तं कीर्तिं च लभते. — d) Ds D2.9 Cs अनर्थेषु; Ca.d अनर्थेन (as in text). K2 न चार्थेन वियुज्यते; G3 लोके चार्थेन पूज्यते.

29 =(var.) Śārṅgadharapaddhati 1369. Cf. v. l. 5. 34. 20. — B2 missing (cf. v. l. 9). — a) D1 तस्य (for यस्य). — d) D1.8 M2.5 षंडं (for षण्ढं).

30 B2 missing (cf. v. l. 9). — b) S (except T2) मौढ्यं (for जाड्यं). T1 G5 सु(G5 चा)समृद्धये (for असमृद्धये). — c) K4 Dn1 D3.4.9 G2 °वृत्तं तु; all comm. as in text. — d) M1 (*inf. lin.* as in text) वै नरः (for नेतरः).

31 B2 missing (cf. v. l. 9). — a) K1.5 विद्या-वृद्धांस्तपोवृद्धान्; D3.4.9 विद्यावृद्धं तपोवृद्धं. — b) D3.4.9 °वृद्धं (for °वृद्धान्). — c) K5 B (B2 missing) Dn Ds D6–8.10 T2 M6 धना(D8 °र्मा)भिजातवृद्धांश्च; D3.4.9 एतान्धनेन वृद्धस्तु. Cs cites अभिजनः.

32 B2 missing (cf. v. l. 9). — a) D3.4 अनार्य-वृत्तिम्; G5 °वृद्धम्. K1.2.5 D9.10 अप्रज्ञं. — b) D3.4.9 अकृतज्ञम् (for असूयकम्). — d) K5 वाग्घृष्टं.

33 B2 missing (cf. v. l. 9). — a) D1 अविषादं च दानं च; S (except T2) अविसंवादिनं दांतं. — b) S (except T2) अनतिक्रमं; Ca.d अव्यतिक्रमः (as in text). — c) K1.2.4 Ds D1.6.7 Ca.d आवर्तयति; Dn1 T1 G (except G3) आवर्जयति; Cn.s as in text. — d) G3.4 प्रणिहितानि (for °हिता च). Ca.d.s cite प्रणिहिता. G4 च (for वाक्).

34 $34^{ab}$ missing in B2 (cf. v. l. 9). — a) D9 दांतः (for दक्षः). T1 G4 दांतोनसूयको दक्षः. — b) M1 (*sup. lin.* as in text).2 नृषु (for ऋजुः). — c) D10 नरः; T1 G1.2.5 अति-; M अथ (for अपि). A few MSS. °कोषो. — d) D9 कुरुते (for लभते). K4 °वारणात्; T1 G1.2.5 °चारि(G2 °चार)णं; M °चारिणः; Ca.d.s °वारणम् (as in text).

35 a) D9 G3 transp. शमः and दमः. — d) K4 D2 एते (for एताः). K4 D2 हेतवः; Ca.d समिधः (as in text).

36 b) Dn Ds D5.6 कृतज्ञो; D9 वृत्तघ्नो (for कृतघ्नो). — c) Dn G4.5 M2 (before corr.) नराधिपो (for °धमो). Ds2 तादृशो धनमाल्ँलोके. — d) K1.5 सदा बुधैः (for नरा°).

37 a) K4 (by transp.) स न; Dn2 D9 न च. — c) G5 क्रोध°; Cd कोप° (as in text). D6 om. $37^{d}$–$38^{c}$. — d) K4 D9 सबाह्य-; T1 सरोषो; G1.2 सकोपो (for सदोषो). G4 सदोषस्य महद्भयं.

38 D6 om. $38^{abc}$ (cf. v. l. 37). — a) D8 T1 एषु; G3 तेषु; Cs येषु (as in text). D1 G5 अदुष्टेषु; G2 M1 (*sup. lin.* as in text).3.4 रुष्टेषु; G3 दोषेषु; Cd.s दुष्टेषु

सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ३८
येऽर्थाः स्त्रीषु समासक्ताः प्रथमोत्पतितेषु च ।
ये चानार्यसमासक्ताः सर्वे ते संशयं गताः ॥ ३९
यत्र स्त्री यत्र कितवो यत्र बालोऽनुशास्ति च ।
मज्जन्ति तेऽवशा देशा नद्यामश्मप्लवा इव ॥ ४०
प्रयोजनेषु ये सक्ता न विशेषेषु भारत ।
तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः ॥ ४१
यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥ ४२
हित्वा तान्परमेष्वासान्पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ४३
तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वं नचिरादिव ।
ऐश्वर्यमदसंमूढं बलिं लोकत्रयादिव ॥ ४४

इति श्रीमहाभारते उद्योगपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## ३९

धृतराष्ट्र उवाच ।
अनीश्वरोऽयं पुरुषो भवाभवे
सूत्रप्रोता दारुमयीव योषा ।
धात्रा तु दिष्टस्य वशे किलायं

C. 5. 1446
B. 5. 39. 1
K. 5. 39. 1

---

(as in text). K4 D1.9 दुष्टः (for दोषः). — $^{b}$) K4 °क्षेमश्च; D9 °क्षेमं च (for °क्षेमस्य).

39 G2 om. (hapl.) 39$^{b}$–40$^{a}$. — $^{a}$) B4 Dn D2–4.9.10 G3 °युक्ताः; Ca.d.s °सक्ताः (as in text). — $^{b}$) K4.5 B D (except D1.8.9) T2 प्रमत्तपतितेषु च; G3 प्रमादात्पतितेषु च; G4 M प्रथमोत्पादितेषु च; Ca.d as in text. — $^{c}$) K1 चानार्यसमापन्नाः; K4 B2.5 D2.10 T2 चानार्ये समा°; Ds G3 °समायुक्ताः. Ca.d cites अनार्याः.

40 =(var.) Pañcatantra 5. 52. — G2 om. 40$^{a}$ (cf. v. l. 39). — $^{a}$) K4 transp. यत्र and कितवो. — $^{b}$) K2.5 B1.2.4.5 D (except D9) T2 transp. यत्र and बालो. B3 यत्र (for बालो). K2 B D (except D7.9) T2 अनुशासिता (for °शास्ति च). K4 वा; G4 हि (for च). — $^{c}$) Ca.d explain both अवशादेशा and अवशा देशा (as in text). K5 B Dn Ds D3–8.10 Cap राजन्; T1 G1.5 M देव; G3.4 एव; Ca.d देशा (as in text). — $^{d}$) S (except T2 G5; G2 om.) यथा (for इव).

41 $^{a}$) K4 B5 D2–4.9 T2 शक्ता (for सक्ता). — $^{b}$) D1 निर्- (for न). — $^{d}$)=C. 12. 12223$^{d}$. D1 विशेषो (for °षा). D1.9 S (except T2) विघ्नकारकाः (D1 °कः); Ca.d.s हि प्रसङ्गिनः (as in text).

42 $^{a}$) K5 कितवा यं प्रशंसंति. — $^{b}$) G1.5 गायकाः; G4 याचकाः; Ca.d चारणाः (as in text). — $^{c}$) K1.2 D7.10 बंधुक्यो; T1 वर्धश्च; G1.2 वर्धक्यः; G3–5 वार्धक्याः; Ca.d बन्धक्यो (as in text). K5 बंधुक्यो यं प्रशंसंति. — $^{d}$) K4 भारत; D2 मानद (for मानवः). S (except T2) स्त्रीप्रशस्तो विनश्यति.

43 $^{d}$) M3–5 तदा (for त्वया). K1 (m as in text) नृप; Ds न वै; D10 सुते; T1 मते (for महत्).

44 $^{a}$) Ds द्रक्ष्यसे. D1.6 T2 परं (for परि-). — $^{b}$) K1.5 B3.4 D3.4.8 अचिरात् (for नचिरात्). — $^{c}$) S °बल° (for °मद°).

Colophon. K3 missing. — *Sub-parvan:* K4 B Dn Ds D5.6.9.10 T G1 M प्रजागर (Dn1 धृतराष्ट्रप्रजागर). — *Adhy. name:* K (K3 missing) D1.2.7.8.10 विदुरवाक्यं; G1 गुरुसमाचारादिकं; M गुरुसमाचारः. — *Adhy. no.* (figures, words or both): K1 D7.8 T2 G4 38; D5 37; D6 (*sec. m.*) 35; T1 G1–3.5 M 39. — *S'loka no.:* K5 44; Dn1 47; M5 45.

### 39

☞ This adhy. is missing in K3 (cf. v. l. 5. 32. 15).

1 $^{b}$)=5. 32. 12$^{b}$. — $^{c}$) K1 T1 G5 धात्रानुशिष्टस्य; K4 D5.8 T2 G4 धात्रानुदिष्टस्य. Ca cites अनुदिष्टस्य; Cd.s दिष्टस्य. B D (except D1.2.9) T2 कृतो (for किल). K1.5 एतत्; K2.4 D1.2 इदं; D5.6 अहं (for अयं). — $^{d}$) D1 वेदेः (for वद). K1 श्रवणाद्धुतो; D10

C. 5. 1440
B. 5. 39. 1
K. 5. 39. 1

तस्माद्वद त्वं श्रवणे धृतोऽहम् ॥ १

विदुर उवाच ।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ॥ २
प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रं मूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ३
द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।
प्रिये शुभानि कर्माणि द्वेष्ये पापानि भारत ॥ ४
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ५
समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे ।
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जयेत् ॥ ६

धृतराष्ट्र उवाच ।

सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसंमतम् ।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ७

विदुर उवाच ।

स्वभावगुणसंपन्नो न जातु विनयान्वितः ।
सुसूक्ष्ममपि भूतानामुपमर्दं प्रयोक्ष्यते ॥ ८
परापवादनिरताः परदुःखोदयेषु च ।
परस्परविरोधे च यतन्ते सततोत्थिताः ॥ ९
सदोषं दर्शनं येषां संवासे सुमहद्भयम् ।
अर्थादाने महान्दोषः प्रदाने च महद्भयम् ॥ १०

---

श्रवणोत्सुको; Ca श्रवणे धृतो (as in text). Cs cites धृतः; Cd श्रवणे. K4 D3.4.9 अस्मि; Ca अहम् (as in text). S (except T2) तस्मात्त्वत्तः श्रवणे नादृतोस्मि.

2 =(var.) Pañcatantra 1. 24; (var.) Hitopades'a 2. 53. — $^c$) G1.2 बुद्ध्यविज्ञानं; Ca.d.s °वज्ञानं (as in text). — $^d$) K5 B3 Ds D3-6.8.9 अप° (for अव°). G5 शाश्वतं (for भारत).

3 =(var.) C. 12. $5065^{cd}$–$5066^{ab}$. — $^b$) D1 प्रियवाक्येन. — $^c$) D7 °मूलफलेन; G3.4 M °मूलफ(G3 °ब)लैर्; T1 G1.2.5 °होमजपैर्; Cs as in text. Ca cites मूलं मंत्रः, Cd मूलं. D9 मंत्रमूलेन चान्यो वै.

4 $^a$) K5 साधुर्द्वेष्यो न भवति. — $^c$) K2 सर्वाणि; Cs अशुभानि; Ca.d as in text. K1 S (except T2) सर्वाणि (M1 *inf. lin.* as in text); K2 B Dn Ds D5.6.10 कार्याॅ° (for कर्मा°). — $^d$) B Dn Ds D5.6.8 T2 चैव ह (B2 D6.8 हि); D10 यो वदेत् (for भारत). — After 4, K4 (om. line 6) B Dn Ds D2 (marg.; om. lines 5–6).3–8 (D4.8 om. line 6).10 T2 (om. lines 5–6) ins.:

231* उक्तं मया जातमात्रेऽपि राज-
न्दुर्योधनं त्यज पुत्रं त्वमेकम् ।
तस्य त्यागात्पुत्रशतस्य वृद्धि-
रस्यात्यागात्पुत्रशतस्य नाशः ।
न वृद्धिर्बहुमन्तव्या या वृद्धिः क्षयमावहेत् ।
क्षयोऽपि बहुमन्तव्यो यः क्षयो वृद्धिमावहेत् ।

[(L. 1) D10 °मात्रं नरेंद्र (for °मात्रेऽपि राजन्). — (L. 4) D7 (*sup. lin.* as in text) त्यागः (for नाशः). — (L. 5) Cf. stanza 5. Dn Ds बुद्धिर् (for वृद्धिर्). Dn बुद्धिः (for वृद्धिः).

5 D3.4 T2 om. $5^{ab}$. — $^a$) D10 transp. न and स. G4.5 सं- (for स). — $^c$) K2 D1.2.7 transp. स and त्विह. K1 खलु; D10 G3 इह (for त्विह).

6 $^a$) D9 धन° (for गुण°). — $^b$) G5 गृध्नंति (for भवन्ति). K2.4 D1.2 G3 M (except M2) धनिनो; D9 गुणतो (for धनतो). — $^c$) K4 धनवृद्धं; T1 G5 धनेप्सितान्; G1.2 धनैः स्फीतान्; G3 धनैः स्थितान्; G4 M धनैर्हीनान्. K4 गुणैर्हीनं. — $^d$) K1 D3 विसर्जय; K4.5 B Dn D1.3–6 T2 विवर्जय; T1 G1.2.4 विसर्जयेत्.

7 $^a$) T1 G1 धर्म्यं (for सर्वं). K4 D3.4.7–9 T G1.3–5 M त्वया (for त्वम्). K4 D9 आयतीशुद्धं; K5 आयतौ युक्तं; Ds आयतीत्युक्तं; D3.8 नीतियुक्तं; D10 आयतीपथ्यं; T G1.3–5 M1 (*inf. lin.*) युक्तियुक्तं (G3 °क्ता); Cs as in text. Ca cites आयतिः. G2 सम्यग्धर्मं त्वया युक्तं. — $^b$) K4 D3.4.9 S (except M5) भाषितं. K1.2 °संमतः; K4 T1 G1.2 M2 °संमितं. — $^c$) D2 उत्सहेत्; Cs उत्सहे (as in text). — $^d$) = 5. 141. $33^d$; 146. $16^d$.

8 $^{ab}$) B2.4.5 Dn D3–6 अतीव गुण°; S (except T2 G1) °संपन्नाः. Ca.s cite स्वभावगुणाः. S (except T2 G1) विनयान्विताः. — $^d$) K1 अवमर्दं; K2 अप°; K5 अर्थमर्थं; Cs उप° (as in text). K4 B Dn Ds D2–8.10 T2 उपेक्षते; K5 प्रयोज्यते; D1 प्रयोक्ष्यति; D9 प्रयोक्षयेत्; T1 G M प्रचक्षते (for प्रयोक्ष्यते).

9 $^a$) K1.2.5 परापवादे. — $^c$) K5 D2.9 T1 G परस्पर(G1 °रं)विरोधेन (G5 °धे तु). Cs ये (for च). — $^d$) K1.5 B3 Ds D10 यतंति; Ca as in text. K4 (*sup. lin.*) सततोद्यताः.

10 G2 om. $10^a$–$11^b$. — $^a$) Dn1 D6 G4.5 सदोषदर्शनं; Ca as in text. K4 D1 तेषां; Ca येषां (as in text). — $^b$) K2 D1.2 संवासात्; Ca °से (as in text).

ये पापा इति विख्याताः संवासे परिगर्हिताः ।
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान्विवर्जयेत् ॥ ११
निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ।
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ॥ १२
यतते चापवादाय यत्नमारभते क्षये ।
अल्पेऽप्यपकृते मोहान्न शान्तिमुपगच्छति ॥ १३
तादृशैः संगतं नीचैर्नृशंसैरकृतात्मभिः ।
निशाम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् ॥ १४
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ।
स पुत्रपशुभिर्वृद्धिं यशश्चाव्ययमश्नुते ॥ १५
ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ।
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ॥ १६
श्रेयसा योक्ष्यसे राजन्कुर्वाणो ज्ञातिसत्क्रियाम् ।
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ॥ १७
किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ।
प्रसादं कुरु दीनानां पाण्डवानां विशां पते ॥ १८
दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ।
एवं लोके यशःप्राप्तो भविष्यसि नराधिप ॥ १९
वृद्धेन हि त्वया कार्यं पुत्राणां तात रक्षणम् ।
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ॥ २०
ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ २१

C. 5. 1469
B. 5. 39. 23
K. 5. 39. 23

---

K5 D2.10 M च; D3 तु (for सु-). D3.4.7.9 T1 G1.4.5 संवासे(G4.5 °दे)षु महद्भयं; G3 सहवासे महद्भयं; Ca as in text. — D7 T2 om. 10cd. — c) D1 G4 M3 अर्थदाने. — d) K4 प्रदाने सु-; Ds2 D8 °नेन (for °ने च). — After 10, B D (except D1.9; D2 marg.) T2 ins.:

232* ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः ।
[ D3.4.7 ये च वै भेदशीलास्तु. ]

11 G2 om. 11ab (cf. v. l. 10). — b) K2.4 D1.2.9 संवासैः; T1 G4 °दे (for °से). — c) K2 युक्ताः स्वकर्मदोषैर्ये. — d) K1 विसर्जय; S (except T2 G5 M5; M1 inf. lin.; M4 sup. lin.) विसर्जयेत्; Cs as in text. K2 नरांस्तांस्तु विवर्जयेत्.

12 D8 om. 12. — a) K2.4 निवर्त्यमाने; Cs as in text. S (except T2) सौभाग्ये (G1 sup. lin. as in text); Cs सौहार्दे (as in text). — b) S (except T2) विनश्यति; Ca प्रण° (as in text). — c) D2 एक-; M अस्य (for एव). K4.5 फलनिष्पत्तिः; G5 फलते सूक्तिः; Ca.s °निर्वृत्तिः (as in text). — d) K1.4 D1.9 सौहार्दे; Cs सौहृदे (as in text). B1.5 G1.5 वा (for च). B1.3.5 T1 G1.5 अपि (for एव).

13 a) K1.2.5 D8 अपकाराय; G2 च विवादाय (for अपवादाय). D8 om. 13cd. — c) B5 Ds D3–6.10 S स्वल्पे (for अल्पे). — d) K2.4 D (except D3–6; D8 om.) G2–4 अधि° (for उप°).

14 a) K2 तादृशं. K4 संगतिं; D2 T1 G1 °तिर्; D3.9 °तैर्. — c) K1m निश्चित्य; K4 D9 परीक्ष्य; K5 B Dn Ds D2–7.10 T2 G1 (sup. lin.) Ca.s निशम्य. — d) K4 क्रूरान् (for दूरात्). T1 G1.4 M1 (inf. lin.).3–5 विसर्जयेत्.

15 d) K2.5 B D (except D9) T2 श्रेयः (for यशः). K1 D2 अक्षयम्; K2 अनिंद्यम्; K4 B Dn Ds D1.3–8.10 T2 आनंत्यम्; G3.4 M अप्ययम् (for अव्ययम्).

16 a) K4.5 Dn2 G3 ते (for तैर्). — b) K4.5 यदीच्छसि; Dn2 Ds य इच्छति. K1.4.5 B2 D1–4.6.9.10 G4 सुखं (for शुभम्). — d) D9 ततः (for तस्मात्). G5 सर्वं (for साधु). D2.8 T1 समाचरेत्; G2 °गमे (for °चर).

17 a) K5 B3 Dn2 D7.10 G3.4 M2 योक्ष्यते. — c) K (K3 missing) D7 निर्गुणा (for वि°). D1 अपि; D5.6 चापि (for ह्यपि). K2.5 D1.2.7 ते रक्ष्या; K4 राजेंद्र (for संरक्ष्या).

18 a) B2 गुणयुक्ताः (for °वन्तः). K4.5 D1.2 च (for ते). — c) B D (except D1.7–9) T2 वीराणां (for दीनानां). — d) K5 D9 S (except T2 M2) महात्मनां (for विशां पते).

19 a) K1.2.4 Dn D1.3 G4 दीयतां (for दीयन्तां). — b) M2.3 दत्वा (for तेषां). — c) K5 -प्राप्तिः; B D (except D1.7–9; D2 marg.) T2 प्राप्तं (for -प्राप्तो). — d) N (except K1.4 D1.8; K3 missing) T2 G1.3.4 भविष्यति. K4 T1 G1.5 न संशयः; G2 परंतप.

20 b) K1.2 D7 परि-; M तव (for तात). Dn शासनं (for रक्षणम्). — D1 om. 20cd. — c) B3 D9 चाभि-; D10 -पि ते; G2 च वि- (for चापि). — d) K4 स्व-; B D3.4 G4 त्वं (for त्वद्-).

21 b) K4 D9 सुखार्थिना; Dn D3.4 शुभा°; T1 G1.5 हितात्मना; G4 हितार्थिना (for भवा°). — c) K1.4 D8 भोग्या° (for भोज्या°). — d) K1 सह भारत (for भरत°).

22 =(var.) 5. 62. 16. — b) S (except T2) प्रीतिश्चैव (for संप्रीतिश्च). — d) N (except K1 Dn2 D1.7.9; K3 missing) T2 कदा° (for कथं°).

C. 5. 1469
B. 5. 39. 24
K. 5. 39. 24

संभोजनं संकथनं संप्रीतिश्च परस्परम् ।
ज्ञातिभिः सह कार्याणि न विरोधः कथंचन ॥ २२
ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २३
सुवृत्तो भव राजेन्द्र पाण्डवान्प्रति मानद ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ २४
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥ २५
पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।
तान्वा हतान्सुतान्वापि श्रुत्वा तदनुचिन्तय ॥ २६
येन खट्वां समारूढः परितप्येत कर्मणा ।
आदावेव न तत्कुर्यादध्रुवे जीविते सति ॥ २७

न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।
शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ २८
दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।
त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ॥ २९
तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥ ३०
सुव्याहृतानि धीराणां फलतः प्रविचिन्त्य यः ।
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ३१
अवृत्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ ३२
परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया ।
परीक्षेत कुलं राजन्भोजनाच्छादनेन च ॥ ३३

---

23 $D_8$ M om. (hapl.) $23^{bc}$. — $^{b}$) $K_1$ अपि; $K_5$ $D_{5.9}$ ह (for च). — $K_{2.4}$ $B_8$ $G_4$ om. (hapl.) $23^{cd}$. — $^{c}$) $Dn_2$ Ds प्रवृत्ताः; $D_9$ सद्वृत्ताः; $T_1$ $G_{1.2}$ सुवृत्तां. $D_{3.4}$ तारयंति सुवृत्ता वै. — $^{d}$) $K_1$ $T_1$ $G_1$ दुर्वृत्तान्; $G_2$ °त्तं (for °त्ता). $K_5$ अपि; $T_1$ $G_1$ हि (for च). M (except $M_1$) निर्वृत्तान्वर्तयंति ह.

24 $^{a}$) M (except $M_1$) सं° (for सु°). — $^{b}$) $K_2$ $D_{1.7}$ $T_1$ $G_{1.2.5}$ भारत (for मानद).

25 After $25^{ab}$, $D_2$ ins.:

233* सीदता यत्कृतं तेन तत्पापं सममश्नुते ।

— $D_9$ (hapl.) om. $25^{cd}$. — $^{c}$) $D_6$ दग्धहस्तं; S (except $T_2$ $G_3$) दिग्धहस्तान्; $M_4$ (*inf. lin.*) व्याधहस्तान्; $Ca.s$ दिग्धहस्तं (as in text). — $^{d}$) $K_4$ $D_{3.4}$ Ca पापं; Cs एनस् (as in text). $D_{10}$ पापं तस्य स विंदति.

26 $D_1$ om. $26^{ab}$. — $^{c}$) $K_5$ वा मृतान्; $D_{1.3.4}$ आहतान् (for वा हतान्). $K_1$ $Dn_1$ $D_{3.4.10}$ मृतान् (for सुतान्). $D_9$ तान्वा सुतान्वापि हतान्. — $^{d}$) $G_4$ तात (for तत्). $K_5$ $D_1$ अनुचिंतयन्; $B_4$ $T_1$ $G_{1.2.5}$ $M_3$ अनुचिंतयेः; $G_4$ विचिंतयेः (for अनुचिन्तय).

28 $^{a}$) $Dn_2$ Ds अपनयति; $D_2$ अपमन्यंते; $Ca.n.s$ as in text. — $^{b}$) $K_4$ भारत; $Ca.s$ भार्गवात् (as in text). — $^{c}$) $K_4$ $B_2$ च (for तु). — $^{d}$) $K_5$ Ds $D_{3.10}$ $G_4$ M अवतिष्ठति (M °ते); $D_1$ $G_5$ अधिति°; $T_1$ $G_2$ एव तिष्ठते; $G_{1.3}$ अधितिष्ठते; Ca एव तिष्ठति (as in text).

29 $^{b}$) S (except $T_2$) पांडवेषु (for पापं तेषु). $K_{1.2.4}$ $D_{1.2}$ कृतं पुरा (by transp.); $B_3$ पुरस्कृतं. — $^{c}$) $K_{2.4}$ कुरु° (for कुल°). — $^{d}$) $K_{2.4}$ $D_{1.2.7}$ नराधिप; $D_9$ S (except T) जनेश्वर (for नरे°).

30 $^{a}$) $K_4$ $D_9$ S (except $T_2$) स्वे (for त्वं). — $^{c}$) $G_3$ °व्याघ्र (for °श्रेष्ठ).

31 $G_{2.3.5}$ om. 31. — $^{a}$) Ds $D_{2.6}$ $T_2$ सुव्याकृतानि; $T_1$ $G_{1.4}$ अव्याहृ($G_1$ °वृ)तानि. Ds वीराणां (for धी°). — $^{b}$) $K_1$ M प्रविचिंतयन् ($M_2$ °येत्); $K_2$ संप्रविश्य यः; $K_5$ $T_1$ $G_{1.4}$ संप्रचिंतय ($K_5$ °यन्); B (except $B_5$) Dn $D_5$ $T_2$ परिचिंत्य यः; Ds $D_{6.8.10}$ परिचिंतय ($D_{8.10}$ °यन्); $D_{1.7}$ संप्रचिंत्य यः; $D_{2.9}$ प्रचिनोति यः (for प्रविचिन्त्य यः). — $^{c}$) $D_1$ अध्यवसति; $D_{2.9}$ स व्यवस्यति; $D_8$ अभ्य°. — After 31, N ($K_3$ missing) T $G_{1.4}$ ins. a passage given in App. I (No. 1).

32 $^{a}$) Dn $D_{3.4.9.10}$ अकीर्तिं; $Ds_2$ M अवृत्तं; $Ca.d.s$ अवृत्तिं (as in text). — $32^{d}$ = Manu 4. $156^{d}$.

33 $^{b}$) K ($K_3$ missing) $D_{1-4.7.9}$ धर्म°; S (except $T_2$) ब्रह्म° (for परि°). Cs cites परिचर्या. — $^{c}$) $D_{9.10}$ परीक्ष्यते; $G_3$ परिरक्षेत् (for परीक्षेत). $D_{3.4.9}$ प्राज्ञो (for राजन्). — $^{d}$) M वा (for च). — After 33, Dn ins.:

234* उपस्थितस्य कामस्य प्रतिवादो न विद्यते ।
अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः ।
[ =(var.) Bhāgavata Purāṇa 3. 22. 12! ]

— N ($K_3$ missing) $T_2$ $M_1$ ins. after 33 (Dn, after 234*):

235* प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम् ।
मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ।
दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्ह्रीमान्स कुलीनशताद्वरः ।

ययोश्चित्तेन वा चित्तं नैभृतं नैभृतेन वा ।
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यते ॥ ३४
दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥ ३५
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च ।
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ॥ ३६
कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् ।
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥ ३७
इन्द्रियाणामनुत्सर्गो मृत्युना न विशिष्यते ।
अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतान्यपि ॥ ३८
मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ।
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ॥ ३९
अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते ।
मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ॥ ४०
आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥ ४१
कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् ॥ ४२
मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् ।
भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ४३

C. 5. 1502
B. 5. 39. 58
K. 5. 39. 57

---

[ (L. 1) B ($B_5$m as above) $Dn_2$ Ds $D_{5.6.10}$ $T_2$ $M_1$ राजो° (for प्राज्ञो°). $K_1$ $D_2$ दांतं; Ca.s वैद्यं (as above). $K_5$ धर्मज्ञं (for धार्मिकं). $D_2$ °वादिनं (for °दर्शनम्). — (L. 2) $M_1$ मितवाक्यं (for मित्रवन्तं). $K_2$ Cd सुवाचं; $B_4$ °कार्यं; $D_1$ °वासं (for °वाक्यं). $D_2$ मित्रवंतं मुदाचारं (for the prior half). — (L. 3) $K_2$ $D_2$ दौष्कुलेयः; $K_5$ $B_{2.4}$ $M_1$ अकुलीनः (for दुष्कुलीनः). $D_1$ नैव (for यो न). — After line 3, $D_1$ ins.:

236* अर्थसंततिकामश्च रक्षेदेतानि नित्यशः ।

— (L. 4) $K_{1.4}$ $D_9$ धर्मावेक्षी; $M_1$ धर्मान्वेक्षी. $K_{1.5}$ $B_{2.4}$ Ds $D_{3.4.9}$ धीमान्; $D_1$ $M_1$ दांतः (for ह्रीमान्). $K_{1.2.5}$ $D_2$ $M_1$ कुलीनशतैर्; $D_{6.8}$ कुलीनः शतान्. $D_1$ स कुलीनशतेश्वरः. ]

34 $G_2$ om. 34–35. — [a]) M योयं ($M_3$ यो यः) (for ययोः). $B_3$ वित्ते°; Dn Ds वृत्ते° (for चित्ते°). $D_1$ $T_1$ $G_{1.4.5}$ वै (for वा). $K_4$ निभृतं; $B_3$ वा वित्तं; Dn Ds वा वृत्तं (for वा चित्तं). — [b]) $K_{1.2}$ $D_1$ Cs नैभृत्यं; $K_4$ नैश्चल्यं; $B_{1-3}$ $Dn_1$ नैर्वृत्तं; $B_{4.5}$ $D_{3.4.7.10}$ $T_2$ $G_{1.4}$ Cn निभृतं; Ca.d नैभृतं (as in text). $K_{1.2}$ $B_{4.5}$ $Dn_2$ Ds $D_{1.2.5-8.10}$ $T_2$ $G_{1.4}$ निभृतेन; $B_{1-3}$ $Dn_1$ निर्वृत्तेन (for नैभृतेन). $K_{1.5}$ $D_8$ $G_{1.5}$ च (for वा). $G_3$ नैभृतेन च नैभृतं. — [c]) $D_{1.9}$ समेत्य; Cs समेति (as in text). $Dn_1$ $D_{3.4}$ $M_{1.3.4}$ प्रज्ञां; Cs as in text. — [d]) $K_4$ B $D_{3.4.6.9}$ जीर्यति.

35 $G_2$ om. 35 (cf. v. l. 34). — [a]) $K_{1.5}$ अकृतात्मानं; $K_4$ $D_{3.4}$ अकृतज्ञं च; Cs as in text. — [c]) K ($K_3$ missing) $D_{2-4.7}$ $G_4$ विवर्जयेत ($K_2$ °त्तं); $D_1$ विवर्जयति. — [d]) $D_{5.6}$ $T_2$ विन° (for प्रण°).

36 [a]) S (except $T_2$ $G_3$ $M_2$) मूढे° (for मूर्खे°).

37 [a]) $K_4$ $D_9$ संतं (for सत्यं). — [c]) $K_2$ $G_3$ $M_{3.4}$ स्थित्या. — [d]) $T_2$ कथ्य° (for चेष्य°). $K_{1.5}$ $D_{2.9}$ मित्रमत्याज्यमिष्यते; $D_2$ °त्या जिगीष्यते; $T_1$ G M मित्रमित्यभिवांछते ($T_1$ $G_1$ °ति). Ca.d cite अत्यागि (as in text).

38 $D_9$ (hapl.) om. 38[ab]. — [a]) $K_{2.4}$ $D_2$ इहोत्सर्गो; Ca.d.s अनु° (as in text). — [b]) $K_2$ तु; B D (except $D_{1.8}$; $D_9$ om.) $T_2$ Csp अपि; Ca.d न (as in text). Cs cites अतो मृत्युरवशिष्यते. — [c]) $D_1$ उत्सर्गात् (for °र्गः). — [d]) $D_1$ $G_3$ साधयेद्; $T_1$ $G_{1.2.5}$ M शा($G_5$ $M_4$ शां)तयेद्. B (except $B_2$) $D_{3.4.10}$ $T_2$ $G_1$ दैवतान् (for दैवतानि).

39 $D_8$ om. 39. — [b]) $K_1$ S (except $T_2$) अनसूयां क्षमां धृतिं. — [c]) S (except $T_2$) विजानीयात् (for बुधाः प्राहुः). — [d]) $K_{1.4}$ (before corr.) $Dn_2$ Ds $D_{7.9}$ $G_4$ $M_1$ अवि($K_1$ $G_4$ $M_1$ °पि; $D_7$ °व)मानिता; $K_4$ (by corr.).$_5$ $D_2$ अविमानता; $D_1$ अपि पालनं; $T_1$ $G_{1-3.5}$ M ($M_1$ *inf. lin.*) अपि ($M_5$ अभि-) माननं; $T_2$ अविमाननात्. $D_{10}$ मित्रसंमाननं तथा.

40 [b]) $K_1$ प्रीत्या निनीषते; $K_5$ S (except $T_2$ $G_4$) °निनीषति; $D_1$ °निनेष्यते. — [c]) $D_1$ आसाद्य (for आस्थाय). — [d]) M (except $M_1$) स आगात्पुरुष°.

41 =(var.) Manu 7. 179. — [b]) $D_9$ $G_2$ कृत°; Ca.d दृढ° (as in text). — [d]) $T_1$ $G_{1.5}$ transp. नरोऽर्थैर् and न. $D_1$ नरो हंत न हीयते.

42 [a]) $G_5$ transp. कर्म° and मन°. — [b]) $B_3$ यदाभीक्ष्णं; $Dn_1$ $D_{3.4.6}$ यदि ($Dn_1$ °द-) तीक्ष्णं (for यदभीक्ष्णं). — [c]) $K_4$ $D_9$ तदभ्यासो हरत्येनं. Ca cites हरति, Cd.s अपहरति (as in text).

43 $K_4$ $Dn_2$ $Ds_1$ $D_5$ Ca.d °लभनं; $T_1$ $G_1$ °चरणे; $G_2$ °लपने; $G_{3.4}$ °लंभने; $G_5$ °लापनं; $M_1$ °ह्लभते; $M_{2-5}$ °लभने. S (except $T_2$ $M_2$) योगं; Ca.d.s योगः (as in text). — [b]) $D_{3.4}$ उत्थानमार्दवं; Cs as in text. — [c]) $T_1$ $G_{1.2}$

C. 5. 1503
B. 5. 39. 58
K. 5. 39. 58

अनिर्वेदः श्रियो मूलं दुःखनाशे सुखस्य च ।
महान्भवत्यनिर्विण्णः सुखं चात्यन्तमश्नुते ॥ ४४
नातः श्रीमत्तरं किंचिदन्यत्पथ्यतमं तथा ।
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ ४५
क्षमेदशक्तः सर्वस्य शक्तिमान्धर्मकारणात् ।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ४६
यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ४७
दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ ४८
आर्जवेन नरं युक्तमार्जवात्सव्यपत्रपम् ।
अशक्तिमन्तं मन्यन्तो धर्षयन्ति कुबुद्धयः ॥ ४९
अत्यार्यमतिदातारमतिशूरमतिव्रतम् ।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ५०
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ५१
अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम् ।
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ॥ ५२
कान्तारवनदुर्गेषु कृच्छ्रास्वापत्सु संभ्रमे ।
उद्यतेषु च शस्त्रेषु नास्ति शेषवतां भयम् ॥ ५३
उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तत् ॥ ५४

---

भूतये तानि कुर्वीत (G2 °र्वंति).

44 44a = Rāmāyaṇa 5. 12. 10a. — b) K1.2.5 D7.8 धर्मस्य च; K4 Dn1 D2–4.9 दुःखस्य च; B Dn2 Ds D5.6.10 T2 लाभस्य च; D1 शुभस्य च; G4 दुःखनाशः (for दुःखनाशे). B Dn2 Ds D5.6 T2 शुभ° (for सुख°). — c) G5 तस्माद्; Ca.d महान् (as in text). D1.8.10 निर्विण्णः; D2 सर्वेषां (for अनिर्विण्णः). — d) K5 अत्यंतम्; B Dn2 Ds D1.5.6.8.10 G5 चानंत्यम् (for चात्यन्तम्). K4 D3.4.9 भयं न महदश्नुते.

45 a) G3.5 M अन्यत् (for अतः). K5 D8 परतरं (for श्रीमत्तरं). — b) Dn2 Ds D5.6.10 T2 मतं; D8 महत् (for तथा). — c) Ds D8.10 यदा (for यथा). Ca.d cite प्रभविष्णौ.

46 a) T1 G4 क्षमेत शक्तः. D7 S (except G3) सर्वत्र (for °स्य). — b) T1 G4 मति° (for शक्ति°). — d) D2–6 T2 M हितं (for हिता).

47 K2 reads 47 after 49. — d) T2 न मूढत्वं समाचरेत्.

48 a) K1 दुष्टार्थेषु; K4 D8 दुःखिते°; Dn2 D2 G1 दुःखार्थें°. K1.4 D1.5.6 प्रशांते°; K2.5 Ds D2.7.8 अप्रशांते°; Dn2 D10 अप्रमत्ते°. — b) D10 अनये° (for अलसे°). — c) D9 S (except T2 G4) भवति (for वसति). T1 G1.5 अशांते° (for अदान्ते°).

49 a) T1 G1.5 समायुक्तं; G4 च संयुक्तं (for नरं युक्तं). — b) K2.4 B (except B4) D1–4.7.9 Cs मृदुत्वात्; T1 G1.4 M1.3.4 (*sup. lin.*) मार्दवात् (for आर्जवात्). — c) K5 D1.2.7 T1 G M मन्यंते. K4 B Dn Ds D3–6.8.10 T2 अशक्तं मन्यमानास्तु; D9 हीनप्रतापं मत्वान्यं. — d) G2.4 धर्षयंते (G4 °तः). — After 49, K2 reads 47.

50 d) D9 transp. श्रीर् and भयात्. K1 D9 S (except T2 G4) उपतिष्ठति (K1 °ते). — After 50, N (K3 missing; K5 D1 om. line 1; K2 B Ds D10 om. line 2; D2 marg.) T2 ins.:

237* न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च ।
नैषा गुणान्कामयते नैर्गुण्यान्नानुरज्यते ।
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ।

[ (L. 1) K1.2.4 Ds D9 एव; D10 एषा (for the first च). K4 अपि (for the second च). — (L. 2) K1.5 D1.7 न विरज्यते (for नानु°). — (L. 3) K4 चपला (for उन्मत्ता). K5 B (except B4) D7.9 °तिष्ठति. ]

51 = (var.) C. 2. 247; = (var.) Pañcatantra 2. 154. — D3.4.9 transp. 51b and 51d. — c) B D (except D1.3.4.7.9; D2 om.) G1.3 नारी; G2 M1 (*inf. lin.* as in text).2–5 नार्यो (for दारा).

52 a) G2.4 द्रव्यैर् (for अर्थैर्). — b) K1 Dn D1.5 M2.5 और्ध्वदैहिकं; K2.5 D9 G4 ऊर्ध्वदै(K5 G4 °दे)हिकं; Cn as in text. — c) K4 D9 भुंक्ते (for प्रेत्य). — d) K4 D9 तस्य (for भुङ्क्ते). K5 D2.7.8 दुरात्मवान् (for °गमात्).

53 a) K2.5 B Dn2 D2.6.10 T2 G1.5 Cd कांतारे (for कान्तार-). — b) K1 Ds2 D5.8 G3.4 M4 कृच्छ्रास्वापत्सु; Cs as in text. — d) K4.5 B (except B2) Dn D5–7.9 सत्त्ववतां; D1 धर्मभृतां; D2 शीलवतां; D3 (m as in text).4 सत्य°; D10 कोश°; Ca.d.s शेष° (as in text). S (except T2) भयं नास्ति महात्मनां (G4 °नः).

54 b) D1.9 S (except T2) क्षमा (for स्मृतिः). — d) S (except T2 G1.2) वृद्धि- (for विद्धि). G4 फलस्य; Ca.d.s भवस्य (as in text). K4 D10 च; B Dn

तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ५५
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ ५६
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
संग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते ॥ ५७
अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत् ।
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ॥ ५८
स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ।
चौरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ॥ ५९
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि संप्रवर्धन्ते कीर्तिरायुर्यशो बलम् ॥ ६०

अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥ ६१
अविद्यः पुरुषः शोच्यः शोच्यं मिथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् ॥ ६२
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असंभोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ॥ ६३
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥ ६४
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥ ६५
न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ६६

C. 5. 1527
B. 5. 39. 82
K. 5. 39. 82

---

$Ds$ $D_{3-6}$ तु (for तत्). $K_2$ विद्धि मूलं भविष्यतः.

55 [b]) $D_8$ (by corr.) वेदो; Ca.d.s ब्रह्म (as in text). $D_{3.4}$ क्षत्र° (for ब्रह्म°). $D_9$ राज्ञां दंडविधिर्बलं. — [c]) $D_9$ अनार्याणां (for असाधूनां). — [d]) $B_2$ $G_4$ बल° (for गुण°). $D_9$ चौराणां निःस्वनिर्बलं.

56 [a]) Ca.d.s षट्; Cap.sp अष्टौ (as in text). K ($K_3$ missing) $D_{1-4.7-9}$ एव; Cd.s एतानि; Csp तानि (as in text). — [b]) $D_{1.2}$ जलं; $G_4$ ह्यापो (for आपो). $T_1$ G (except $G_2$) घृतं (for फलं). — [c]) $K_4$ °कामस्य; $D_1$ °काम्यं च; $D_9$ S °कामाय; Ca.s °काम्या च (as in text). Cd cites काम्या.

57 After 57[ab], $B_2$ marg. ins.:

238* आत्मनः प्रतिकूलानि विजानन्न समाचरेत् ।

— [c]) $K_{1.2.4}$ $B_3$ $Ds_2$ $D_{2-4.8.9}$ $T_2$ एव (for एष). $D_1$ M एष संक्षेपतो धर्मः. — [d]) $K_4$ $D_9$ मोहात्; Cs कामात् (as in text). $D_9$ G M अन्यत् (for अन्यः). $T_1$ कामादन्यत्र वर्तते.

58 =(var.) C. 3. 13253. — [a]) $G_4$ आक्रोशो जनयेत्क्रोधं. — [d]) $K_{1.5}$ सत्येनानृतिकं जयेत्.

59 [a]) $K_4$ $D_{3.4.9}$ नार्यां धूर्ते; $T_1$ $G_{1.5}$ स्त्रियां धूर्ते; Ca.d.s स्त्रीधूर्तके (as in text). $G_3$ स्त्रीधूर्ते कितवे भीरौ. — [b]) S (except $T_2$ $G_2$) परुषवादिनि; Ca.d पुरुष° (as in text). — [c]) S (except $T_2$) चोरे न कार्यो (for चौरे कृतघ्ने). $B_3$ D (except $D_{2.7-10}$) चाश्वासो; Cs आश्वासो; Ca.d विश्वासो (as in text). — [d]) S (except $T_2$) कृतघ्ने (for न कार्यो). $K_1$ न कार्यो नास्तिकेषु च; $K_4$ नैव कार्यो न नास्तिके.

60 =(var.) Manu 2. 121. — [c]) $D_7$ $T_1$ $G_1$ तस्य; $G_{2-5}$ सम्यक् (for संप्र-). — [d]) $K_2$ transp. कीर्तिर् and आयुः. $D_7$ $T_1$ G M आ($T_1$ $G_{1.5}$ ह्या)युः प्रज्ञा ($G_3$ आयुर्विद्या) (for कीर्तिरायुर्). $K_2$ transp. यशः and बलं.

61 =(var.) Śukasaptati (*text. simpl.*), p. 86. — [a]) $D_7$ $M_2$ ये चार्थाः (for येऽर्थाः स्युः). — [b]) $Dn_2$ $Ds$ $D_8$ $G_{2.4}$ M वा (for च).

62 =(var.) Cāṇakyas'ataka (ed. Haeberlin) 57. — M transp. 62[b] and 62[d]. — [b]) N (except $K_5$ $D_{1-4.7.9}$; $K_3$ missing) $T_2$ मैथुनम् (for मिथुनम्). — [d]) $K_4$ $G_{3.4}$ राज्यम् (for राष्ट्रम्).

63 =(var.) Vṛddhacāṇakya (Bombay, Saṁvat 1915), 4. 17. — [a]) $K_1$ S (except $T_2$ $G_5$) देहभृतां. — $G_3$ om. 63[cd]. — [c]) $D_{1.9}$ च नारीणां (for जरा स्त्रीणां). — [d]) $D_1$ वस्त्रस्याक्षालनं जरा; S (except $T_2$; $G_3$ om.) अश्वानां मैथुनं जरा.

64 [a]) $D_8$ (by corr.) अनभ्याससमला. Ca.s cite अनाम्नाय (as in text). — After 64[ab], N ($K_3$ missing) $T_2$ ins.:

239* मलं पृथिव्या वाहीकाः पुरुषस्यानृतं मलम् ।

[ Some MSS. वाल्हीकाः (for वाहीकाः). $Ds_2$ पृथिव्यां वाहिका म्लानिः (for the prior half). ]

65 [a]) $D_1$ रौप्यं (for रूप्यं). — [b]) $G_3$ च (for अपि). $K_{2.5}$ $D_{2.8}$ $G_{2.3}$ Ca.d त्रपुः. — [d]) $G_4$ एव (for अपि). $K_{1.5}$ मलो मलः; $T_1$ $G_4$ आयसं मलं (for मलं मलम्).

66 [b]) $K_4$ (by transp.) जयेत्स्त्रियं; B Dn Ds $D_{5.6.8.10}$ $T_2$ जयेत्स्त्रियः. — [c]) $K_1$ $D_1$ वह्निं (for अग्निं).

C. 5. 1528
B. 5. 39. 83
K. 5. 39. 83

यस्य दानजितं मित्रममित्रा युधि निर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ ६७
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
धृतराष्ट्र विमुञ्चेच्छां न कथंचिन्न जीव्यते ॥ ६८
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ६९
राजन्भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन्स्वेषु पाण्डुसुतेषु च ॥ ७०

इति श्रीमहाभारते उद्योगपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## ४०

विदुर उवाच ।
योऽभ्यर्थितः सद्भिरसज्जमानः
करोत्यर्थं शक्तिमहापयित्वा ।
क्षिप्रं यशस्तं समुपैति सन्त-
मलं प्रसन्ना हि सुखाय सन्तः ॥ १
महान्तमप्यर्थमधर्मयुक्तं
यः संत्यजत्यनुपाकुष्ट एव ।
सुखं स दुःखान्यवमुच्य शेते
जीर्णां त्वचं सर्प इवावमुच्य ॥ २
अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।

— [d]) K4 B8 D7 G3 M5 पापेन (for पानेन). K1. 2 D1. 2 तृषां; K4 शुभं (for सुरां). S (except T2) transp. सुरां and जयेत्.

67 [b]) N (except K1. 4 D3. 4. 9; K8 missing) T2 शत्रवो (for अमित्रा). K1 वध- (corr. from धन-); K4 D9 भय-; S (except T2) क्रोध- (for युधि).

68 [ab]) G2 जीर्यंति (for जीवन्ति) both times. — [c]) K2 (before corr.) Ds2 D9 विमुच्य (for विमुञ्च). — [d]) D1 S (except T2) न कथंचन जीर्यं(D1 °ज्य)ते.

69 Cf. Ādi 840*; =(var.) Viṣṇupurāṇa 4. 10. 10. Cf. Kullūka on Manu 2. 94. — [b]) K1 यच्च किंचिदजाविकं. — [c]) K2 तृह्यर्थं (for तत्सर्वं). S (except T2) तदेकस्य न पर्याप्तं. — [d]) B2 मत्वा (for पश्यन्). G4 M मुह्यते (M1 *inf. lin.* as in text). K2 D1. 7 इति मत्वा शमं व्रजेत्.

70 [b]) K4. 5 Ds D1. 7. 9. 10 शमं; Cs समं (as in text). — [d]) K4 B2. 4 Dn2 Ds D5. 10 वा (for च).

Colophon. K8 missing. — *Major parvan:* D9 उद्यम (for उद्योग)! — *Sub-parvan:* K1 संजययान; K4 B Dn Ds D3–5. 7. 9. 10 T1 G1 M प्रजागर. — *Adhy. name:* K (K8 missing) D1. 2. 7. 8. 10 विदुरवाक्यं (K4 °क्यानि); T1 G1. 2 M साम्यप्रार्थनं. — *Adhy. no.* (figures, words or both): K1 D7. 8 T2 39; D5 38; D6 (*sec. m.*) 35; T1 G M 40. — *S'loka no.:* K5 D8 82; Dn 86; G5 70.

### 40

☞ This adhy. is missing in K8 (cf. v.l. 5. 32. 15).

1 [a]) B D (except D7–9) T2 अभ्यर्चितः; T1 G5 °र्थिनं; G2 °र्थितं; G3 ह्यर्थितं; G4 ह्यर्थिनं; M1 ह्यर्थितः (for अभ्यर्थितः). D1. 8. 9 G1. 2. 4 M (M4 *inf. lin.* as in text) असज्य°; G5 अतर्ज्य°; Ca. d. s असज्ज° (as in text). — [b]) K1 D9 S (except T2) स्वां (for अर्थं). — [c]) K4 D5. 8 T1 G3. 4 प्रशस्तं; M प्रशस्तिं; Ca. d यशस्तं (as in text). S (except T2) सद्भिः (for सन्तं). — [d]) K1 Ca. d. s प्रपन्नस्य; B8 प्रशान्ता हि; D1 प्रपन्नाय; D2 प्रपन्ना हि.

2 [a]) G5 अनर्थं° (for अधर्मं°). — [b]) B2. 4 D3. 4 यं; Cs यः (as in text). K4 D1. 2. 9 S (except T2) °त्यजेद्; Ds D8. 10 °त्यजन् (for °त्यजति). K1 B2 D8. 10 अनुपाकृष्टः; K4 B8 D9 T1 G4. 5 M अनुपक्रुष्ट (D9 °क्रुद्ध; G5 °कृष्ट); K5 B1. 4. 5 Dn G2 अनपा(G2 °प)कृष्ट; D2 (corrupt) अनुयत्क्रुष्ट; D3–7 G1. 3 अनपा(G3 °प)क्रुष्ट; T2 अनयोत्क्रुष्ट; Ca. d. s अनुपाक्रुष्ट (as in text). — [c]) K4. 5 B3. 4 Dn1 D7. 9. 10 T1 G2. 5 सु- (for स). — 2[d] =(var.) 5. 32. 14[b].

3 =Manu 11. 55. — [a]) K4 B (B5 marg.) Dn Ds D2–8 T2 अनृते; Ca. d. s अनृतं (as in text). D10 अनृतेन (for °तं च). T1 M सुखतर्केण (for च समुत्कर्षे). K5 B D (except D1) T2 G2 समुत्कर्षः; Ca. d. s as in text. — [b]) B8 बाह्यगामि च; D1 राजगामिनि; Cs as in text. — [c]) G8 गुरौ; Cs गुरोः (as in text). — [d]) K1 तत्समं; G5 समो हि (for समानि).

गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ३

अस्तूयैकपदं मृत्युरतिवादः श्रियो वधः ।
अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः ॥ ४

सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखं त्यजेत् ॥ ५

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ६

आशा धृतिं हन्ति समृद्धिमन्तकः
क्रोधः श्रियं हन्ति यशः कदर्यता ।
अपालनं हन्ति पशूंश्च राज-
न्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ७

अजश्च कांस्यं च रथश्च नित्यं
मध्वाकर्षः शकुनिः श्रोत्रियश्च ।
वृद्धो ज्ञातिरवसन्नो वयस्य
एतानि ते सन्तु गृहे सदैव ॥ ८

अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खः स्वर्णं नाभिश्च रोचना ॥ ९

गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत् ।
देवब्राह्मणपूजार्थमतिथीनां च भारत ॥ १०

इदं च त्वां सर्वपरं ब्रवीमि
पुण्यं पदं तात महाविशिष्टम् ।
न जातु कामान्न भयान्न लोभा-

C. 5. 1514
B. 5. 40. 12
K. 5. 40. 12

---

4 $^{a}$) T $G_{2.3.5}$ M एकपदो; $G_{1.4}$ संपदो; $C_{a.d.s}$ as in text. — $^{b}$) $D_{9}$ S स्त्रियो (for श्रियो). — $K_{4}$ Dn $D_{2-6.8.9}$ $T_{2}$ ins. after 4: $D_{7}$, after 5:

240* आलस्यं मदमोहौ च चापलं गोष्ठिरेव च ।
स्तब्धता चाभिमानित्वं तथात्यागित्वमेव च ।
एते वै सप्त दोषास्तु सदा विद्यार्थिनां मताः ।

[ (L. 2) $D_{7}$ जिह्मता (for स्तब्धता). $K_{4}$ $D_{7-9}$ अति° (for अभि°). $K_{4}$ अनभ्यासित्वं (for तथात्यागित्वं). — (L. 3) Dn स्युः (for तु). — $D_{4}$ (hapl.) om. from र्थिनां up to विद्या in $5^{b}$. ]

5 =(var.) Vṛddhacāṇakya 10. 3. — $D_{4}$ om. up to विद्या in $5^{b}$ (cf. v. l. 4). S transp. $5^{ab}$ and $5^{cd}$. — $^{a}$) $G_{2}$ transp. सुखा° and कुतः. — $^{b}$) $B_{3}$ $D_{1.2}$ $G_{3.5}$ कुतो (for नास्ति). — $^{c}$) $D_{10}$ त्यजते (for वा त्यजेद्). — $^{d}$) $K_{4}$ B Dn Ds $D_{2.5-7.10}$ $T_{2}$ transp. सुखं and त्यजेत्. $D_{8}$ विद्यार्थी संत्यजेत्सुखं. — After 5, $D_{7}$ ins. 240*.

6 =C. 13. 2226; =Pañcatantra 1. 153; =Hitopades'a 2. 103; =Śārṅgadharapaddhati 1498. Cf. Ādi 1189*. — $^{d}$) $K_{4}$ $D_{1.8.10}$ G M वामलोचनाः.

7 $^{a}$) $D_{5.6}$ समस्तं; $C_{a.d}$ as in text. $C_{s}$ cites समृद्धिः. $C_{a}$ अन्तरः; $C_{d.ap}$ अन्तकः (as in text). — $^{c}$) $K_{4}$ अरक्षणं (for अपा°).

8 Cf. 5. 33. 59. — $^{a}$) $K_{4}$ $D_{9}$ $G_{4.5}$ $T_{2}$ (by corr.) अयः; B Dn Ds $D_{3.4.10}$ $G_{3}$ $M_{1.2}$ अजाः; $G_{2}$ पयः (for अजः). $K_{4}$ B (except $B_{3}$) Dn Ds $D_{3}$ (after corr.)$_{.5.6.9.10}$ $T_{2}$ $G_{1}$ (after corr.) रजतं; $D_{3}$ (before corr.)$_{.4}$ च रजः; $T_{1}$ $G_{1}$ (before corr.)$_{.2-5}$ M च रसः (for च रथः). $C_{a.d}$ cite रथः. — $^{b}$) $K_{4}$ $Dn_{1}$ $D_{3-6.9}$ S मध्वादर्शः ($G_{2}$ °र्शौ); $C_{a.d.s}$ as in text. $K_{4}$ $Dn_{1}$ $D_{3.4.9}$ सज्जनः; $C_{a.d.s}$ शकुनिः (as in text). — $^{c}$) =(var.) 5. 33. $59^{c}$. $K_{1}$ सखा च; $K_{5}$ B D (except $D_{1.3.4.7.9}$) $T_{2}$ कुलीन (for वयस्य).

9 $^{a}$) $K_{1}$ $D_{7}$ $G_{3.5}$ अजोश्वः ($G_{5}$ °श्वाः); $K_{4}$ $D_{2.5.6}$ $T_{1}$ M अजोक्षाः; $D_{3.4}$ आजोक्षाः; $D_{8}$ $G_{1.4}$ अजोक्षः; $C_{d.s}$ as in text. — $^{b}$) S (except T $G_{5}$) आदर्श. — $^{c}$) $D_{3}$m लोहः (gloss); $G_{3.5}$ पीठं; $C_{a.d.s}$ विषं (as in text). ❀$C_{n}$: विषं लोहमिति सर्वज्ञः ।❀ $M_{2}$ औदुंबरः; $M_{3-5}$ °बरा; $C_{a.d.s}$ as in text. $K_{1}$ $D_{1}$ $T_{1}$ $G_{3-5}$ शंखं; $D_{2.9}$ कांस्यं (for शङ्खः). — $^{d}$) $K_{4}$ $D_{8}$ स्वर्णनाभिः; B $Dn_{2}$ Ds $D_{9}$ $C_{n.s}$ स्वर्णनाभः (for स्वर्णं नाभिः). ❀$C_{n}$: स्वर्णनाभः शालग्रामो दक्षिणावर्तः शङ्ख इति नारायणः ।❀ B $Dn_{2}$ Ds $D_{9}$ अथ (for च). $K_{1.2}$ $D_{1.2.7}$ स्वर्ण($D_{2}$ शुभ्र)माभरणं वृषः; S (except $T_{2}$) कांस्यं वृषभकांचने.

10 $^{b}$) $D_{1.2}$ धान्यानि; S (except $T_{2}$) धर्म्याणि; $C_{a.d.s}$ धन्यानि (as in text). — $^{d}$) $G_{4}$ तथैव च (for च भारत).

11 $^{a}$) S (except $T_{2}$) तु (for च). $K_{2}$ $D_{2.7}$ S (except $T_{2}$) ते; $K_{4}$ $D_{1.5.6}$ त्वा (for त्वां). $K_{4}$ सर्वमेवं; $Dn_{1}$ $D_{1}$ T $G_{1}$ (after corr.)$_{.3-5}$ $M_{1.3.4}$ सर्ववरं; $D_{2.9}$ सर्वमहं; $G_{1}$ (before corr.) सर्वमिदं; $C_{a.d.s}$ as in text. — $^{b}$) $K_{4}$ $D_{3.4}$ मुख्यं; $C_{s}$ पुण्यं (as in text). $D_{9}$ पुण्यप्रदं (for पुण्यं पदं). S (except $T_{2}$) महद्विशिष्टं; $C_{s}$ as in text. — $^{c}$) $G_{4}$ अज्ञानाद्वा (for जातु कामात्). — $^{d}$) N (except $K_{1.2}$ $D_{2}$; $K_{8}$ missing) $T_{2}$ जह्यात् (for त्यजेत्).

C. 5. 1544
B. 5. 40. 12
K. 5. 40. 12

धर्मं त्यजेज्जीवितस्यापि हेतोः ॥ ११
नित्यो धर्मः सुखदुःखे त्वनित्ये
नित्यो जीवो धातुरस्य त्वनित्यः ।
त्यक्त्वानित्यं प्रतितिष्ठस्व नित्ये
संतुष्य त्वं तोषपरो हि लाभः ॥ १२
महाबलान्पश्य महानुभावा-
न्प्रशास्य भूमिं धनधान्यपूर्णाम् ।
राज्यानि हित्वा विपुलांश्च भोगा-
न्गतान्नरेन्द्रान्वशमन्तकस्य ॥ १३
मृतं पुत्रं दुःखपुष्टं मनुष्या
उत्क्षिप्य राजन्स्वगृहान्निर्हरन्ति ।
तं मुक्तकेशाः करुणं रुदन्त-
श्चितामध्ये काष्ठमिव क्षिपन्ति ॥ १४
अन्यो धनं प्रेतगतस्य भुङ्क्ते
वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र
पुण्येन पापेन च वेष्ट्यमानः ॥ १५
उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ।
अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् ॥ १६
अस्माल्लोकादूर्ध्वममुष्य चाधो
महत्तमस्तिष्ठति ह्यन्धकारम् ।
तद्वै महामोहनमिन्द्रियाणां
बुध्यस्व मा त्वां प्रलभेत राजन् ॥ १७
इदं वचः शक्ष्यसि चेद्यथाव-
न्निशम्य सर्वं प्रतिपत्तुमेवम् ।
यशः परं प्राप्स्यसि जीवलोके
भयं न चामुत्र न चेह तेऽस्ति ॥ १८
आत्मा नदी भारत पुण्यतीर्था

---

12 a) D1 अपि; G4.5 हि (for तु). — b) K5 B (except B3) D (except D1.2.7.9.10) T G transp. नित्यो and जीवो. K5 B Dn D3–6.8.10 (*sup. lin.* as in text). T2 G1 Cap हेतुः; Ca.d.s धातुः (as in text). K4 धातवश्चाप्यनित्याः; D9 धातुरस्यापि (°प्य- before corr.) नित्यः. — c) K1.4 Ca.d.s अनित्यान्. G4 संप्रतिष्ठस्व; Ca.d as in text. — d) Cs लोकः (for लाभः). S (except T2) संतुष्य संतोषपरा हि संतः.

13 a) K (K3 missing) D1.2.7 °धनान् (for °बलान्). K1.2.4 यस्य (for पश्य). — c) D9 राष्ट्राणि (for राज्यानि). K4 S (except T2) विविधान् (for विपुलान्). — d) K1.2.4 B3 Dn2 D2 G4 गता नरेंद्रा (for गतान्नरेन्द्रान्).

14 a) T1 G1 जनं (for पुत्रं). — c) K1.2.5 D1.7 °कंठाः (for °केशाः). After करुणं, K1.2 D1 ins. वै. K2.4.5 B4 Dn D7.9.10 G1 (before corr.) रुदंति (for रुदन्तः). — d) D5 एव (for इव). B3 Dn2 G5 M2 आक्षिपंति (for क्षिपन्ति). K1 काष्ठवन्निक्षिपंति.

15 a) K4 D3 प्रेत्य गतस्य. — b) T1 G1 (before corr.).2 चाश्नंति (for चाग्निश्च). — c) T1.2 (before corr.) G असौ; M त्वसौ (for अयं). G2 गच्छेत् (for गच्छति). K4 D3.4.9 एकस्तु जीवः समुपैत्यमुत्र. — d) K5 वेद्यमानः; G4 वेक्ष्यमाणः.

16 b) K1.2 D1.2.7 तथा (for सुताः). G3 बांधवा ज्ञातयः सुताः. — After 16ab, N (K3 missing) T2 G1 (marg. *sec. m.*) ins.:

241* अपुष्पानफलान्वृक्षान्यथा तात पतत्रिणः ।
[ K2 D2 (after corr.).9 अपुष्पादफलाद्वृक्षाद्. ]

— c) K1.5 D1.9 प्राप्तं; D3 प्राप्तौ (for प्रास्तं). S (except T2; G1 before corr.) अग्नि (G3 M2–5 °ग्नि-) प्राप्तं हि (M2 तु) पुरुषं. — d) D2 धर्मः (for कर्म). S (except T2) कर्मैवान्वेति यत्कृतं. — After 16, N T2 ins.:

242* तस्मात्तु पुरुषो यत्नाद्धर्मं संचिनुयाच्छनैः ।

17 a) K5 तस्मात्; Ca अस्मात् (as in text). Dn2 D1 अमुत्र; D9 अस्मात्; Cd.s अमुष्य (as in text). K2 Dn1 D3.4 T2 (after corr.) वा; Cn च (as in text). T1 G M अधश्च विद्वन् (G5 तिर्यक्); Ca अमुष्य पूर्वं. — b) K5 D1.2.7.9 T1 G च (for हि). M3–5 हंत काले (for ह्यन्ध°). D2–4.7.9 अंधकारः; T1 G M1.2 अंतकाले; Ca.d.s as in text. — c) G2.3 M महन्मोहनं; Ca.d.s महामो° (as in text). — d) K2 S (except T2 M2) त्वा; Cs त्वां (as in text). K1.2 D1 Ca.d प्रसहेत; D2 प्रययौ न; D10 प्रतिलभेत (for प्रलभेत). Cs cites प्रसहेत्.

18 a) K1 शिष्यसि; K2 श्रोष्य°; B3 D5 D1.10 शक्य°; Ca.d as in text. — b) K2 D9 M4 निशास्य; Ca.d as in text. D9 चैव (for सर्वं). K4 D9 प्रतिकर्तुं; D2 प्रतिपन्नं; Ca.d.s as in text. K2 B2 D (except Dn2 D5.6.8) G3.5 M4 एव (for एवं). — c) T1 G1.5 प्राप्नुहि (for प्राप्स्यसि). — d) K4 D2 भयं च नामुत्र. D3.4.9 भयं च ते नास्ति परत्र चेह च (D9 वा).

19 ab) = (var.) Hitopades'a 4. 90. — K5 B

सत्योदका धृतिकूला दमोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा
पुण्यो ह्यात्मा नित्यमम्भोऽम्भ एव ॥ १९
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
कृत्वा धृतिमयीं नावं जन्मदुर्गाणि संतर ॥ २०
प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं
विद्यावृद्धं वयसा चापि वृद्धम् ।
कार्याकार्ये पूजयित्वा प्रसाद्य
यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ २१
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ २२
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी पतितान्नवर्जी ।
ऋतं ब्रुवन्गुरवे कर्म कुर्व-
न्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ २३
अधीत्य वेदान्परिसंस्तीर्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः संग्रामे क्षत्रियः स्वर्गमेति ॥ २४
वैश्योऽधीत्य ब्राह्मणान्क्षत्रियांश्च
धनैः काले संविभज्याश्रितांश्च ।
त्रेतापूतं धूममाघ्राय पुण्यं
प्रेत्य स्वर्गे देवसुखानि भुङ्क्ते ॥ २५
ब्रह्मक्षत्रं वैश्यवर्णं च शूद्रः
क्रमेणैतान्न्यायतः पूजयानः ।
तुष्टेष्वेतेष्वव्यथो दग्धपाप-
स्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते ॥ २६
चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो

C. 5. 1561
B. 5. 40. 29
K. 5. 40. 29

---

$D_{5-7.10}$ Cn सत्योदया; Ca. d सत्योदका (as in text). $K_2$ $D_{3.4.9}$ शीलतटा; $K_4$ धृतिजला; Ca. d. s धृतिकूला (as in text). $K_{2.5}$ B D (except $D_{1.7}$) $T_2$ Cs दयोर्मिः; $T_1$ शमोर्मिः; Ca as in text. — [c]) $K_5$ $T_1$ $G_1$(before corr.).$_{2-4}$ M (except $M_5$) यस्यां; Cs तस्यां (as in text). S (except T $G_{2.5}$) पूयति. — [d]) $M_{2-5}$ तीर्थो (for पुण्यो). $K_4$ B (except $B_3$) Dn $D_{2-5.7}$ $T_2$ $G_1$m अलोभः; $D_9$ अंभोधिः; Ca अम्भोऽम्भः (as in text). $T_1$ $G_1$(before corr.).$_{2.4.5}$ तमा($G_{4.5}$ °दा)त्मानं पुण्यसंभो ($G_{1.4.5}$ °महो) लभस्व; $G_3$ $M_1$ तीर्थो ह्यात्मा पुण्यसंभो लभस्व ($M_1$ *sup. lin.* तदात्मानं पुण्यसंभोंभ एव). — After 19, $M_{2.3.5}$ ins. another variant of 19[d] तदात्मानं पुण्यसंभो लभस्व!

20 =(var.) C. 3. 13772; (=var.) 12. 12060. — [c]) $K_{1.5}$ B Dn Ds $D_{5.6.8.10}$ $T_2$ transp. कृत्वा and नावं. $D_9$ धृतिमतीं; $G_4$ धृतिमहा- (for °मयीं). — [d]) $D_1$ जन्मदुःखानि; $D_9$ सर्वदुर्गाणि; Cs as in text.

21 [a]) $K_{1.4}$ S (except $T_2$) कर्म° (for धर्म°). $D_1$ $T_1$ $G_1$(before corr.).$_5$ सुबंधुं; $D_2$ स्ववृद्धं (for स्वबन्धुं). — [b]) Ds $D_{10}$ °बंधुं (for °वृद्धं). $D_{1.2}$ $G_2$ यश°; $G_3$ तप° (for वय°). — [c]) S (except $T_2$) उपपद्य (for प्रसाद्य). — [d]) $D_1$ हि (for स). $K_2$ $D_7$ दुष्येत् (for मुह्येत्). $D_{10}$ कदापि.

22 [b]) $Ds_2$ $G_4$ पाणिपादौ. — [c]) $K_2$ $D_1$ °श्रोत्रं. — [d]) $G_2$ वाचः. S ($T_2$m as in text) विद्यया; Cs कर्मणा (as in text).

23 [b]) $Dn_1$ $D_8$ नित्यं स्वाध्यायी; $G_2$ नित्याध्यायी. $D_9$ पतितान्नवर्जः; S (except $T_2$) वृषलान्नवर्जी ($G_1$ °वर्जः; $G_2$ °जीवी; $G_4$ °सेवी). — [c]) $K_2$ $G_4$ मितं; $K_5$ B D (except $D_{1.8}$; $D_2$ by corr.) $T_2$ सत्यं; $G_3$ जातं (for ऋतं). $T_1$ $G_{1.5}$ वदन् (for ब्रुवन्). — [d]) $G_5$ ब्रह्मण्यः (for ब्राह्मणः). $G_4$ स्वर्ग° (for ब्रह्म°).

24 [a]) $D_9$ परिचर्य; Cs परिसंस्तीर्य (as in text). S (except $T_2$) अग्निं; Cs as in text. ❀Cn: एतेनाग्निहोत्रमुपलक्षयतीति नारायणः।❀ — [b]) $D_1$ transp. इष्ट्वा and यज्ञैः. — [c]) $B_{2.3}$ Ds Cn गोब्राह्मणार्थं; Cs as in text. $D_1$ च (for शस्त्र-). — [d]) $K_2$ मृतः; Cs हतः (as in text). $D_{3.4}$ स्वर्गभाक्स्यात् (for स्वर्गमेति).

25 [c]) $K_{1.2}$ $D_{1.2}$ $G_{2.4.5}$ M (except $M_1$) त्रेतापूर्वं; $D_9$ त्रयीपूतं; Cs as in text. $D_2$ धूपं; $T_2$ सोमं; Cs धूमं (as in text). — [d]) B Dn $D_{3.4.9}$ दिव्य° (for देव°). $D_{10}$ प्रेत्य स्वार्थं देवलोके तु भुंक्ते.

26 $D_9$ (hapl.) om. 26. $G_{1.4.5}$ °धर्मं (for °वर्णं). — [b]) $K_2$ $D_{2-4.7}$ पूजयित्वा; $Dn_2$ $G_{3.5}$ पूज्यमानः; $D_1$ पूज्य सर्वान् (for पूजयानः). — [d]) $K_1$ देव°; $G_2$ सिद्धि°; $G_5$ $M_{1.2}$ सिद्ध°; $M_{3-5}$ सिद्धसुखादि (for स्वर्ग°). $T_1$ $G_{1.3.4}$ सिद्धिमिष्टां व्रजेच्च (for स्वर्ग° भुङ्क्ते).

27 $D_1$ तथा; S मया (for तव). — [b]) $B_1$m.$_{2-4}$ Dn

C. 5. 1561
B. 5. 40. 29
K. 5. 40. 29

हेतुं चात्र ब्रुवतो मे निबोध ।
क्षात्राद्धर्माद्धीयते पाण्डुपुत्र-
स्तं त्वं राजन्राजधर्मे नियुङ्क्ष्व ॥ २७

धृतराष्ट्र उवाच ।

एवमेतद्यथा मां त्वमनुशाससि नित्यदा ।
ममापि च मतिः सौम्य भवत्येवं यथात्थ माम् ॥ २८
सा तु बुद्धिः कृताप्येवं पाण्डवान्प्रति मे सदा ।
दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ २९
न दिष्टमभ्यतिक्रान्तुं शक्यं मर्त्येन केनचित् ।
दिष्टमेव कृतं मन्ये पौरुषं तु निरर्थकम् ॥ ३०

इति श्रीमहाभारते उद्योगपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## ४१

धृतराष्ट्र उवाच ।

अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यते ।
तन्मे शुश्रूषवे ब्रूहि विचित्राणि हि भाषसे ॥ १

विदुर उवाच ।

धृतराष्ट्र कुमारो वै यः पुराणः सनातनः ।
सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ २
स ते गुह्यान्प्रकाशांश्च सर्वान्हृदयसंश्रयान् ।
प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ॥ ३

धृतराष्ट्र उवाच ।

किं त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः ।

---

$D_{3.4.8}$ अनु- (for अत्र). — $^{c}$) $K_1$ $M_{3-5}$ क्षत्राद्धर्माद्; $D_9$ क्षात्रधर्मात्; $C_{a.d.s}$ as in text. $D_9$ क्षीयते; $G_2$ ईहते; $G_3$ दीर्यते (for हीयते). — $^{d}$) $K_2$ $D_7$ स त्वं; $D_2$ $G_2$ तत्त्वं; $D_{3.4}$ त्वं तं (by transp.). $T_1$ G ($G_1$ by corr.) राज्यभारे; M राजभावे (for राजधर्मे).

28 $^{a}$) $K_2$ एव (for एतद्). $B_{2-4}$ Dn $D_6$ transp. मां and त्वं. $K_2$ $M_2$ अर्थं; $B_{1.5}$ $D_{1-5.8}$ $T_2$ $M_{1.3-5}$ आत्थ (for मां). $T_1$ $G_{1.5}$ वृत्तं; $G_2$ तत्वं (for मां त्वं). $K_4$ नित्यशः. — $^{c}$) $K_1$ चैव (for अपि च). $K_{1m.4}$ $D_{2.8}$ $G_3$ M (except $M_5$) transp. अपि and च. $G_5$ हि (for च). $K_{2.4}$ मतं (for मतिः). — $^{d}$) $K_{1.4}$ $D_{1.2}$ $G_1$ (before corr.)$_{.4.5}$ एव (for एवं).

29 $D_{10}$ om. $29^{ab}$. — Before 29, S (except $G_{3.5}$) ins. विदुरः. — $^{a}$) $D_2$ सम-; S (except $T_2$ $G_3$) साधु- (for सा तु). $K_2$ $D_{1.9}$ हि; $G_3$ तु (for अपि). — $^{b}$) $T_1$ G (except $G_3$) पांडवं (for पाण्डवान्). S ($T_2$ by corr.) भारत (for मे सदा).

30 $^{a}$) $D_1$ $T_1$ $G_{1.4.5}$ अपि (for अभि-). — $^{b}$) $K_5$ $B_{2.4}$ Dn Ds $D_{3-8.10}$ $T_2$ भूतेन; $D_1$ $G_5$ M अन्येन (for मर्त्येन). — $^{c}$) $G_{1.4.5}$ दैवं; Cd दिष्टं (as in text). Ds $D_2$ M एतत् (for एव). $K_1$ B Dn Ds $D_{1-5.7-10}$ $T_2$ ध्रुवं; $K_{2.4.5}$ $D_6$ $G_5$ परं (for कृतं). — $^{d}$) = 1. 192. $12^{b}$.

Colophon. $K_3$ missing. — *Sub-parvan:* $K_2$ B Dn Ds $D_{1.3-6.9.10}$ T $G_1$ M प्रजागर. — *Adhy. name:* K ($K_3$ missing) $D_{1.2.7.8.10}$ विदुरवाक्यं ($K_{2.4}$ °वाक्यानि), to which $K_2$ adds समाप्तानि; $T_1$ $G_{1.2.4}$ धर्मादि($G_2$ वर्णधर्मादि)प्रतिपादनं; M धर्मप्रतिपादनं. — *Adhy. no.* (figures, words or both): $K_1$ $D_7$ $T_2$ 40; $D_5$ 34; $D_6$ (*sec. m.*) 37; $T_1$ G M 41. — *S'loka no.:* $K_5$ 31; Dn 32; $D_3$ 33.

### 41

☞ Adhy. 41-69 are missing in $K_2$! This adhy. is missing in $K_3$ also (cf. v.l. 5. 32. 15).

1 $^{b}$) $K_4$ $D_9$ वचो (for वाचा). — $^{c}$) $G_{2.3}$ M धर्मं (for तन्मे). $K_1$ B Dn Ds $D_{3-5.10}$ $T_2$ शुश्रूषतो; $K_5$ $D_{7.9}$ $T_1$ G (except $G_5$) °ते (for °वे). — $^{d}$) $D_1$ वि-; $D_9$ ह; $G_{1.3.4}$ M (except $M_2$) इह; $G_2$ प्र- (for हि).

2 $^{ab}$) $D_1$ transp. कुमारः and पुराणः. — $^{c}$) S (except $T_2$) सनत्कुमारः. — $^{d}$) $K_4$ $D_9$ देहिनां (for भारत).

3 $^{a}$) $T_1$ G (except $G_5$) यः (for सः). — $^{b}$) $K_1$ $B_5$ $D_{3.4}$ °संस्थितान्; $K_{4.5}$ $B_1$ $D_{1.2}$ $T_1$ G (except $G_2$) $M_1$ (*sup. lin.* as in text) °संश्रितान्; $Dn_1$ Ds $D_9$ °संशयान्; Cn as in text. — $^{c}$) $T_1$ G स (for प्र-). — $^{d}$) $K_1$ सर्वं (for सर्व-). $K_5$ सर्वधर्मभृतां वर; $D_9$ यथा बुद्धिर्मनीषिणां; S (except $T_2$) मनोबुद्धिसमन्वितान्.

4 $^{ab}$) $K_{1.4}$ $D_{1.2.9}$ एष (for त्वं न). $K_4$ मां; $D_{1.9}$ मा (for मे). S (except $T_2$) तमहं नाभिजानामि तत्वतो

त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ॥ ४

विदुर उवाच ।

शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ।
कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ॥ ५
ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् ।
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ६

धृतराष्ट्र उवाच ।

ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम् ।
कथमेतेन देहेन स्यादिहैव समागमः ॥ ७

वैशंपायन उवाच ।

चिन्तयामास विदुरस्तमृषिं संशितव्रतम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ॥ ८
स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ॥ ९
भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसे ।
यो न शक्यो मया वक्तुं तमस्मै वक्तुमर्हसि ।
यं श्रुत्वायं मनुष्येन्द्रः सुखदुःखातिगो भवेत् ॥ १०
लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ ।
विषहेरन्भयामर्षौ क्षुत्पिपासे मदोद्भवौ ।
अरतिश्चैव तन्द्री च कामक्रोधौ क्षयोदयौ ॥ ११

C. 5. 1576
B. 5. 41. 12
K. 5. 41. 12

इति श्रीमहाभारते उद्योगपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ समाप्तं प्रजागरपर्व ॥

---

वै सनातनं. — d) $K_5$ (corrupt) संज्ञातैः साम्नि चेत्तव.

5 a) $D_7$ $G_3$ °योन्यां (for °योनौ). $T_1$ $G_{1.4}$ हि जातोस्मि (for अहं जातो). — b) $D_2$ अहं; $G_5$ ते (for अतो). $D_2$ तद् (for अन्यद्). — c) S (except $T_2$ $G_3$) कवेरस्य (for कुमा°). $B_{2.4}$ च (for तु).

6 a) $Dn_1$ ब्राह्मयां हि; $G_{1.4.5}$ ब्राह्मणीं. $B_4$ $T_1$ $G_{2.3}$ M तु (for हि). $K_1$ संपन्नः (for आपन्नः). $D_{10}$ ब्राह्मीं योनिं समापन्नः. — b) $Dn_2$ $D_1$ $T_1$ $G_{2.3.5}$ स गुह्यं; $D_3$ स्वगुह्यं. $D_9$ असौ (for यो). — c) $G_{2-4}$ गुह्यो; $M_{3.5}$ गर्ह्यौ. $K_1$ वेदात्मा (for देवानां). — d) $K_{1.4}$ $D_2$ नैतद् (for एतद्).

7 a) $K_{4.5}$ $D_{2.3}$ प्रब्रूहि (for ब्रवीहि). — b) $K_4$ तत्पुराणं; $D_{3.4}$ G M तं पुराणं (by transp.). $D_3$ तु (for तं). $D_{10}$ क्व पुराणः सनातनः. — c) $Dn_1$ $D_{3.4}$ S (except $T_2$ $G_3$) देवेन; $D_{10}$ च मया (for देहेन). — d) $D_9$ S (except $T_2$) transp. स्यात् and इहैव.

8 $K_4$ om. $8^{ab}$. — b) N (except $B_5$ $Dn_2$ $Ds_1$ $D_1$; $K_4$ om.) $M_2$ शंसित° (for संशित°). $G_2$ तमृषिं च सनातनं. — c) $D_7$ मनसा (for स च तत्).

9 $9^{b}$ = 1. 13. $37^{b}$; 53. $13^{d}$; 96. $52^{d}$ etc. — cd) $T_1$ $G_{1.4.5}$ अथो° (for सुखो°). $T_1$ तथैनं; $G_{1.4}$ तदैनं; $G_5$ तदेनं (for अथैनं).

10 Before 10, $T_1$ $G_{1.4.5}$ ins. विदुरः. — b) $K_5$ धीमतः; B Dn Ds $D_{3-7}$ $T_2$ $G_2$ मानसः; $D_1$ विद्यते (for मानसे). — d) $K_4$ त्वं तस्मै; $K_5$ B Dn Ds $D_{7.8.10}$ $T_1$ $G_{1.4.5}$ त्वमस्मै; $D_{3.4}$ असौ तद् (for तमस्मै). $G_2$ तस्मै वक्तुं त्वमर्हसि. — e) $K_4$ श्रुत्वाथ; $D_9$ $T_1$ $G_{1.2.4.5}$ श्रुत्वा यत्; $G_3$ M श्रुत्वायं (or श्रुत्वा यं) (for यं श्रुत्वा). $K_4$ $D_9$ $G_{2.3.5}$ M तु; $T_1$ $G_1$ तत्; $G_4$ तं (for अयं). $K_1$ मनुष्येभ्यः. — f) N (except Ds) $T_2$ $G_{1.2}$ सर्व- (for सुख-).

11 b) $K_1$ (after corr.) $D_3$ S (except $T_2$) तथा (for यथा). $K_{1.5}$ S (except $T_2$) एव तु; $D_3$ एव च (for एनं न). — c) $K_1$ (by marg. corr.) विषहेत; $C_s$ °हेरन् (as in text). S (except $T_2$) मदो(M भयो)-न्मादौ (for भयामर्षौ). — d) $K_1m$ S ($T_2$ also as in text) भयाभये; $K_5$ $D_{7.8}$ मदोद्भवे; $D_9$ महद्भये. Cn cites उद्भवः. — e) $K_1$ (by marg. corr.) S (except $T_2$) अरतिं (for अरतिः). $B_{2.5}$ तंद्रीः; S (except T) तंद्रीं. — f) $D_9$ जयाजयौ; $G_5$ क्षयाक्षयौ (for क्षयोदयौ).

Colophon. $K_{2.3}$ missing. — *Major parvan:* $D_9$ उद्यम (for उद्योग)! — *Sub-parvan:* $K_5$ $D_7$ संजययान; B Dn Ds $D_{1.3-6.9.10}$ T $G_{1.4.5}$ M प्रजागर ($G_5$ विदुर-प्रजागर), to which $B_{2.4.5}$ Dn $D_{3-6.9}$ $T_2$ $G_{1.4.5}$ $M_1$ add समाप्त. — *Adhy. name:* $K_1$ $B_1$ $D_{1.2}$ $M_{3.5}$ विदुरवाक्यं (followed by समाप्तं); $K_4$ $B_3$ Dn Ds $D_{7.10}$ विदुरवाक्यानि (followed by समाप्तानि except in Ds); $D_3$ विदुरनीतिः; $M_{1.2}$ जातिप्रशंसनं; $M_4$ जातिप्रशंसनं and विदुरवाक्यं (followed by समाप्तं). — *Adhy. no.* (figures, words or both): $K_1$ $D_{7.8}$ $T_2$ 41; $D_5$ 40; $D_6$ 38; $T_1$ G M 42. — *S'loka no.:* $K_5$ Dn $D_3$ 12. — *Aggregate s'loka no.* (of "Viduravākya"): $Dn_1$ 864.

## 42

☞ Here begins the Sanatsujātaparvan, also called the Sanatsujātīya. In addition to the four commentaries utilized above, the Bhāṣya of Śrīmat Śaṁkarācārya on the Sanatsujātīya (designated Cs′), as published in the Gujarati Printing Press edition (1920), was collated for this section. Of the Northern recension of the Sanatsujātīya (adhy. 42–45), Ś1 K (K2.3 missing) agree generally with B in matters of omission, insertion and sequence of verses or passages; and this agreement is mostly supported by M of the Southern recension. The D MSS., on the other hand, are divided among themselves *in a strange way*: most of them contain the Vulgate text of *Nīl.* (agreeing fairly closely with that of the old printed editions), but there are some D MSS. (especially Ds D8–10) which betray the *direct* influence of Śaṁkara's commentary and agree generally with TG! Nīlakaṇṭha's text is best characterized by himself when he commences his commentary on this episode by remarking: उद्योगपर्वणि सनत्सुजातीये भाष्यकारादिभिर्व्याख्यातान्संप्रतितनपुस्तकेषु च स्थितान्पाठाञ्श्लोकांश्च गुणोपसंहारन्यायेनैकीकृत्य व्याख्यायते. His text, as indicated by his own statement, is of an inclusive rather than of exclusive type; and this result he has achieved, not only by indiscriminately culling stanzas commented upon by the "Bhāṣyakāra" (probably Śaṁkara) and even such as are to be found only in very modern manuscripts, but also by bodily incorporating passages from divergent versions and inserting them at various points of the text with entire disregard of sequence and sometimes even of sense. The result has been a hopeless medley of disjointed units. Even variant versions of the same verse or passage are complacently dovetailed or repeated (see, for instance, Bombay ed. adhy. 42, stanzas 17 and 26, 23 and 25, 27 and 28; adhy. 43, stanzas 50 and 51, 52 and 53–54; adhy. 44, lines $3^{ab}$ and $4^{ab}$; adhy. 46, stanzas 6 and 20, 15 and 27, 16 and 23; 17 and 24). The Southern recension of the Sanatsujātīya, on the other hand, exists in two sharply divergent forms. The M version has none of the additional passages of the Vulgate text, and, as noted above, shows almost complete agreement with Ś1 K and B in this respect. The TG version, on the other hand, is the source of most of the additional and variant passages incorporated in the Vulgate, and therefore presents a text which differs *materially* from that of M. Śaṁkara has generally accepted the TG version; but since his text is also probably eclectic, it is difficult to fix it down to any particular MS. or group of MSS. of this version. Even apart from sporadic Northern influence, the TG tradition, again, does not appear to be uniform; for, the individual MSS. of this version differ a great deal among themselves, especially regarding sequence of the various units. The differences are so complicated and arbitrary in some places that elaborate tables have to be furnished below to guide the reader through the tangled system of transpositions, omissions and insertions (see v.l. 5. 43. 14–23; 45. 3). It is clear that, in spite of the authority of Śaṁkara, the text cannot be satisfactorily constituted wholly on the basis of TG, versions which do not present a uniform or consistent text-tradition; nor can it be based on the indiscriminately conflated Vulgate text, which is merely an incoherent assemblage of passages from different sources. Our text is based mainly on the *agreement* of Ś1 K with M, supported by B, a basis which is as sound as it is broad; and it is authenticated generally by the scholia of Dev., Arj. and Sarvajña. The Javanese version gives us only a few extracts, which are cited *in toto* in App. II; but in spite of the divergent versions of the text, it contains no lines or stanzas, which do not occur in our text! On the other hand, the variant or additional passages, which distinguish TG (with Śaṁkara) from our text *are not found at all* in the Javanese version! — It is worthy of note that the commentary of Śaṁkara on the Sanatsujāta begins with our adhy. 42, and *not* with adhy. 41, which latter is commonly but erroneously treated, in most of the older printed editions, as the first adhyāya of the Sanatsujātaparvan. — With regard to the omission from our text of adhy. 45 of the Bombay edition (=adhy. 46 of the Calcutta), cf. v.l. 5. 44. 24.

## ४२

वैशंपायन उवाच ।

ततो राजा धृतराष्ट्रो मनीषी
संपूज्य वाक्यं विदुरेरितं तत् ।
सनत्सुजातं रहिते महात्मा
पप्रच्छ बुद्धिं परमां बुभूषन् ॥ १

धृतराष्ट्र उवाच ।

सनत्सुजात यदिदं शृणोमि
मृत्युर्हि नास्तीति तवोपदेशम् ।
देवासुरा ह्याचरन्ब्रह्मचर्य-
ममृत्यवे तत्कतरन्नु सत्यम् ॥ २

सनत्सुजात उवाच ।

अमृत्युः कर्मणा केचिन्मृत्युर्नास्तीति चापरे ।
शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः ॥ ३
उभे सत्ये क्षत्रियाद्यप्रवृत्ते
मोहो मृत्युः संमतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि
सदाप्रमादममृतत्वं ब्रवीमि ॥ ४
प्रमादाद्वै असुराः पराभव-
न्नप्रमादाद्ब्रह्मभूता भवन्ति ।
न वै मृत्युर्व्याघ्र इवात्ति जन्तू-
न्न ह्यस्य रूपमुपलभ्यते ह ॥ ५
यमं त्वेके मृत्युमतोऽन्यमाहु-
रात्मावसन्नममृतं ब्रह्मचर्यम् ।
पितृलोके राज्यमनुशास्ति देवः
शिवः शिवानामशिवोऽशिवानाम् ॥ ६

C. 5. 1581
B. 5. 42. 6
K. 5. 42. 6

---

☞ This adhy. is missing in K2.8 (cf. v.l. 5. 41. 1; 32. 15).

1 ^b) M3–5 विदुरेण तत्; Cs′ विदुरेरितं (as in text). G5 तु; Cs′ तत् (as in text). K4 B D1–7.9 T2 (m as in text) संपूज्य तं (D1.2 °ज्यैनं) धर्मभृतां वरिष्ठं. — G4 om. 1^c–2^d. — ^c) D7 रहसि (? gloss); all comm. रहिते (as in text).

2 G4 om. 2 (cf. v.l. 1). — ^a) K4 B Dn1 D2–7.9 T2 अहमिमं; D1 यमिमं; D10 G1.5 यदिमं (for यदिदं). — ^b) K4 B Dn D1–7.9.10 T2 om. हि, and transp. मृत्युर् and न. Ds also om. हि. Ca.d cite मृत्युर्नास्तीति; Cs′ मृत्युर्हि नास्तीति (as in text). K4 D1.2 इह वादं (K4 °दः); B1.4.5 Dn2 D5–7 T2 Cn.s प्रवादं; B2 प्रसादः; B3 Dn1 प्रसादं; D9 प्रसादात्; M अपदेशः (for उपदेशम्). Cs′ cites उपदिष्टं. — ^c) K1.5 Ds D8 G5 om. हि. K1 G5 M Cs अचरन्; Cs′ आच° (as in text).

3 ^a) K4 B D (except Ds D4.8.10) T2 Ca.d अपृच्छः; Cs.s′.np अमृत्युः (as in text). K4 B Dn Ds D1–7.9 T2 (before corr.) Cs यन्मां (B4 Dn2 यच्च); Cs′.np केचित् (as in text). Ca.d.n cite यत्. — ^b) K4 D1.2.9 यत्परं; B Ds D5–7 T2 Cn चापरं; Cs′ चापरे (as in text). — ^d) D1 G4 तत्; Ca.d.s′ एतत् (as in text). B2 S (except T2 G5) विशंकथाः (cf. 1. 67. 13 and v. l.); all comm. as in text.

4 ^a) K4 B2.4 Cs तस्य विद्धि; Dn D1.2.5.6.9 T2 (also as in text) एतस्य विद्धि; Cnp आद्यप्रवृत्ते (as in text). Ca cites एतस्य, Cs′ क्षत्रियाद्य. B1.3.5 क्षत्रियस्येह विद्धि (for °याद्यप्रवृत्ते). — ^b) K4 B Dn D1.2.5.9 T2 (also as in text). Ca.d मोहात्; M (except M1) मोहैः; Cs.s′ मोहः (as in text). D5 संस्मृतो; Cs.s′ as in text. K4 B Dn D1–4.6.9 T2 M अयं; Cs′ यः (as in text). — ^d) B4 Dn M (M1 *sup. lin.* as in text) तथा; Cs.s′ सदा (as in text). K4 D8 अप्रमादात्; Cd.s.s′ as in text.

5 ^a) D1.8 T1 वा (for वै). — ^b) K1 न प्रमादाद्वै; K4 न च प्रमादात्; Cs.s′ अप्रमादात् (as in text). K1.4 D7 हि देवाः; K5 Ds D8.10 T1 G Cs′.np सुराश्च (for भवन्ति). — K4 om. 5^c–7^b. — ^c) B3 Dn2 D2–4.8 T2 एव; D9 चैव; Ca.d.s′ वै (as in text). D1 एति (for अत्ति). — ^d) D8.10 T1 G1.2.4.5 अपि; G3 M (except M5) Cs′ च; Ca.d.s हि (as in text). B3 Dn D2–4.6.9 T2 G3 M2 हि; G5 च (for ह).

6 K4 om. 6 (cf. v.l. 5). — ^a) Ds त्वेको; D1 त्वेकं; G3 चैके; all comm. त्वेके (as in text). — ^b) K5m (orig. as in text) Ds D8 T1 G Cs′.np आत्मावासं (Ds °स्तं); D1 नात्मावसन्नं; Cn.s as in text. Dn1 D2.4.9 Ca.d आत्मा व(Dn1 वा-; D9 वै)सन्नमृतं ब्र°. — ^c) D1 G3 अनुप्रशास्ति; Cs′ अनुशास्ति देवः (as in text).

C. 5. 1582
B. 5. 42. 7
K. 5. 42. 7

आस्यादेष निःसरते नराणां
क्रोधः प्रमादो मोहरूपश्च मृत्युः ।
ते मोहितास्तद्वशे वर्तमाना
इतः प्रेतास्तत्र पुनः पतन्ति ॥ ७
ततस्तं देवा अनु विप्लवन्ते
अतो मृत्युर्मरणाख्यामुपैति ।
कर्मोदये कर्मफलानुरागा-
स्तत्रानु यान्ति न तरन्ति मृत्युम् ॥ ८
योऽभिध्यायन्नुत्पतिष्णून्निहन्या-
दनादरेणाप्रतिबुध्यमानः ।
स वै मृत्युर्मृत्युरिवात्ति भूत्वा
एवं विद्वान्यो विनिहन्ति कामान् ॥ ९
कामानुसारी पुरुषः कामाननु विनश्यति ।
कामान्व्युदस्य धुनुते यत्किंचित्पुरुषो रजः ॥ १०

---

7 K4 om. $7^{ab}$ (cf. v.l. 5). — $^a$) K1 (before corr.) B Dn D2.5–7.9 T2 G3 M1 (*inf. lin.*) Ca.d.s अस्यादेशात्; D1 अस्मादेतत्; G5 आलस्यदोषात्; Cs'.np आस्यादेष (as in text). K5 D8 Cn निःसरति; Ca.d.s.s' as in text. — $^b$) B2.4 Dn2 लोभ°; Cd.s' मोह° (as in text). Cs cites क्रोधमोहौ. — After $7^{ab}$, K1 (marg.).5 Dn Ds D2 (marg. *sec. m.*).3.4.8.10 T G ins.:

243* अहंगतेनैव चरन्विमार्गा-
न्न चात्मनो योगमुपैति कश्चित् ।

[ Noticed in Cs' but not in Ca.d.s. — (L. 1) G1.5 इव (for एव). — (L. 2) Ds G4 कंचित्; G1.5 देही; G2.8 Cs' किंचित् (for कश्चित्). ]

— Ds2 om. $7^{cd}$; Ds1 transp. $7^{cd}$ and $8^{ab}$. — $^d$) K5 Ds1 D8.10 अतः; all comm. इतः (as in text). Ds1 G1.3 प्रयांति; Cs.s' पतन्ति (as in text).

8 Ds1 transp. $7^{cd}$ and $8^{ab}$. — $^a$) T1 G5 Ca अतः; M तं (M2 कं) वै; Cd.s.s' ततः (as in text). M om. तं. B3 Dn2 D3–5 तान्; Ca.d.s.s' तं (as in text). D1 ते वा (for तं देवा). K5 D8.10 S (except T2) Cs' परिप्लवंते; Ca.d.s विप्लवन्ते (as in text). — $^b$) Dn1 D8.9 Ca ततो; Cd.s.s' अतो (as in text). K5 D8.10 T1 G M1 (*inf. lin.*) Cs' मरणादभ्युपैति; M कर्मणा ह्यभ्युपैति; Ca.s मरणाख्यामु° (as in text). — $^c$) K4 B2 D1.2 M (M1 *inf. lin.* as in text) कर्मफलानुगास्ते; D3–6.9 °लान्वितास्ते; Cs' °लानुरागाः (as in text). Ca.d cite कर्मफलानुगाः, Cs फलानुगाः. — $^d$) K5 यांति ते; B1.3.5 Dn D3–6 T2 (before corr.) ते यांति. Ds यांतीति (for यान्ति). Here and in the sequel, T1 has incorporated into its text fragments of Sanatsujātīya stanzas with the remark "यज्ञनारायणीये". Yajñanārāyaṇa was a Southern commentator. Thus after 8, T1 ins. यज्ञनारायणीये । ततस्तं देवा अनु परिप्लवन्ते । — After 8, K1 (marg.).5 D (except D1.5.6.9; D7 om. lines 3–6) T G (except G3) ins.:

244* सदर्थयोगानवगमात्समन्ता-
त्प्रवर्तते भोगयोगेन देही ।
तद्वै महामोहनमिन्द्रियाणां
मिथ्यार्थयोगस्य गतिर्हि नित्या ।
मिथ्यार्थयोगाभिहतान्तरात्मा [5]
स्मरन्नुपास्ते विषयान्समन्तात् ।

[ Noticed in Cs', but not in Ca.d.s. — (L. 1) Ds °योगावगमात्; T1 °योगाभिग°. — (L. 4) K1 T2 G1.2.4 °र्थयोगेस्य (for °र्थयोगस्य). — (L. 6) G2.4.5 समस्तान् (for समन्तात्). ]

— Thereafter K1 (marg.).5 Dn D10 T1 G (G3 om.) read 12; while Ds D3.4.8 T2 read 12 here for the first time, *repeating* it in its proper place. Cd reads as in text.

9 $^a$) K4 B Dn D1–5.6 (before corr.).7 Cs सः; Cs' यः (as in text). G5 [अ]नुध्यायन्; M [अ]भिध्यायेद्; Ca.d.s as in text. K1 (before corr.).4 B Dn D1–7.9 Ca.d.s उत्पतितान्; Cs' उत्पतिष्णून् (as in text). M (except M2) न हन्यात्; all comm. निह° (as in text). — $^b$) K5 D8.10 M (except M2) Cs' अनाचारेण; B1.3.5 सदाचारेण; T1 अनासारेण; G5 °चरेण; Ca.d.s °दरेण (as in text). — $^c$) B Dn D3–7 Ca.s नैनं; D1 न तं; D2 न वै; Cs' स वै (as in text). K1 D9 G5 M5 Ca मृत्युं; K5 मृत्योः; Cd.s.s' मृत्युः (first occurrence of the word) as in text. Ca अभिभूयात् (for अत्ति भूत्वा). D1.2.4.9 भूतानि; D5 भूतं; Cs.s' भूत्वा (as in text). — $^d$) Ds D8 G2.5 ह्येवं; G1.4 ह्येनं (for एवं). Ds D3.10 T1 G1.2.4.5 [अ]भिहंतीह (G1.4 °व); G3 M ह्यभिहंति (for विनि°). — After 9, D9 reads 12.

10 $^b$) K4 D9 G3 कामाद्; Cs.s' कामान् (as in text). — D9 om. $10^c$–$11^d$. — $^c$) Ds कामान्व्युदस्यन्; D2 G3 M5 कामानुदस्य; G4 M2.4 कामान्युदस्य; Ca.d.s' कामान्व्युदस्य (as in text). D1 कुरुते; all comm. धुनुते (as in text).

## ५३

C. 5. 2121
B. 5. 54. 1
K. 5. 54. 1

संजय उवाच ।

एवमेतन्महाराज यथा वदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ १
इदं तु नाभिजानामि तव धीरस्य नित्यशः ।
यत्पुत्रवशमागच्छेः सत्त्वज्ञः सव्यसाचिनः ॥ २
नैष कालो महाराज तव शश्वत्कृतागसः ।
त्वया ह्येवादितः पार्था निकृता भरतर्षभ ॥ ३
पिता श्रेष्ठः सुहृद्यश्च सम्यक्प्रणिहितात्मवान् ।
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ॥ ४
इदं जितमिदं लब्धमिति श्रुत्वा पराजितान् ।
द्यूतकाले महाराज स्मयसे स्म कुमारवत् ॥ ५
परुषाण्युच्यमानान्स पुरा पार्थानुपेक्षसे ।
कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ॥ ६
पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः ।
अथ वीरैर्जितां भूमिमखिलां प्रत्यपद्यथाः ॥ ७
बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता ।
मयेदं कृतमित्येव मन्यसे राजसत्तम ॥ ८
ग्रस्तान्गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि ।
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ ९
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् ।
पाण्डवेषु वनं राजन्प्रव्रजत्सु पुनः पुनः ॥ १०
प्रवर्षतः शरव्रातानर्जुनस्य शितान्बहून् ।
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ ११
अस्यतां फल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
केशवः सर्वभूतानां चक्राणां च सुदर्शनम् ॥ १२
वानरो रोचमानश्च केतुः केतुमतां वरः ।

---

वीर° (for धीर°). Ds $D_{5.6.8}$ धीमतः; $D_1$ निश्चयं; $T_1$ $G_1$ निर्णयं (for नित्यशः). — $^{c}$) B (except $B_3$) $Dn_1$ $D_{3.4}$ यः (for यत्). T $G_{1.2}$ M (except $M_1$) °शतम् (for °वशम्). $D_1$ आपन्नः; Ds अन्विच्छेः; $D_8$ S ($G_5$ om.) आगच्छेत् ($T_1$ °च्छत्; $M_5$ °च्छे). — $^{d}$) $K_4$ $B_3$ D (except $D_{6.8}$; $D_9$ missing) तत्वज्ञः; S ($G_5$ om.) सत्वस्थं. $D_7$ $T_2$ $G_{1.2}$ $M_2$ सव्यसाचिनं.

3 $^{a}$) $D_1$ $G_3$ नैव; Cs नैष (as in text). $G_5$ एवमेतन्महाराज. — $^{b}$) $D_2$ तावकाश्च कृता°. Cs cites शश्वत् (as in text). — $^{c}$) S अर्दि($G_3$ °र्थि)ताः (for आदितः). $K_1$ पार्थौ. — $^{d}$) $K_1$ निकृतो; $Dn_1$ $D_{3.4}$ वंचिता (? gloss); S (except $G_2$ $M_5$) निकृत्या (for निकृता). — After 3, S ins.:

333* स्वीकृतास्तैर्जनपदाः कुरवस्ते सजाङ्गलाः ।
कथं वीरैर्जितां भूमिमखिलां प्रतिपद्यथाः ।

[ =(var.) 7. — (L. 1) $G_{2-4}$ ते (for तैर्). — (L. 2) $G_5$ प्रतिपद्यते. ]

4 $^{a}$) $K_1$ $D_{1.7.10}$ T $G_{3.5}$ M (except $M_2$) ज्येष्ठः (for श्रेष्ठः). Ds $G_5$ सुहृच्चयश्च; $D_2$ गुरुर्यस्य; $T_1$ सुहृदश्च. — $^{c}$) $K_1$ S स्व(T G सु)मतं (for हि हितं).

5 $^{b}$) S °जितं ($G_4$ °जयं) (for °जितान्). — After 5, T G (except $G_2$) read 10.

6 $^{a}$) $K_1$ $D_{7.10}$ तान्; $K_4$ $D_{3-6}$ स्वं; B Dn Ds $D_8$ च; $T_1$ $G_{1.4.5}$ तु; $T_2$ तैः (for स्म). — $^{c}$) $D_1$ राज्यं कृत्स्नं (by transp.). M (except $M_1$) इह (for इति).

7 After $7^{ab}$, $D_5$ (marg.).8 ins.:

334* प्रार्थयन्ति महायुद्धे नानुबन्धमवेक्षसे ।

— $D_2$ transp. $7^{cd}$ and $8^{ab}$. — $^{c}$) $K_1$ पृथक्; S कथं (for अथ). $D_2$ वीर्यार्जिताम्. $K_4$ B D (except $D_{7.10}$; $D_9$ missing) उर्वीम् (for भूमिम्). — $^{d}$) $D_5$ S (except $T_2$ $G_{1.2}$) प्रति° (for प्रत्य°).

8 $D_2$ transp. $7^{cd}$ and $8^{ab}$. — $^{a}$) $D_1$ S (except $T_2$ $G_{1.2.4}$) °वीर्यजिता. — $^{c}$) $K_4$ $D_{1-3.7}$ एवं (for एव). — $^{d}$) $G_{2.3}$ साधु° (for राज°).

9 $G_4$ (hapl.) om. 9. — $^{c}$) $K_4$ पुरा (for पुनः).

10 T G (except $G_2$) read 10 after 5. — $^{c}$) $K_4$ $B_2$ $D_{1-4}$ $T_2$ $G_{2-4}$ वने (for वनं).

11 $^{a}$) $K_4$ शरजालान्. — $^{b}$) $K_4$ $D_{10}$ (*sup. lin.* शरान्) सितान्; $B_3$ तथा (for शितान्).

12 $^{a}$) Some N MSS. फाल्गुनः. S Cs पांडव(Cs °वः)श्रेष्ठो. — $^{b}$) $K_1$ $D_{3.4.8}$ गांडिवं; Cs as in text. — $^{d}$) $K_4$ $B_{1.2.5}$ D (except $D_{1.2.7.10}$; $D_9$ missing) आयुधानां; $T_2$ अस्त्राणां च (for चक्राणां च).

13 $^{a}$) $D_{5.8}$ तु (for च). — $^{c}$) $G_4$ वहतो; $G_5$ सुरथो (for सरथो). — $^{d}$) B (except $B_4$) Dn $D_{6.8}$ बहून्; $G_5$ युधि (for वहन्). $G_{3.4}$ वाहाः श्वेतहया रणे ($G_4$ रथे). — $^{e}$) $B_4$ Ds ते; $D_2$ $T_2$ $G_{2.3}$ M वो; $T_1$ $G_5$ वै; $G_{1.4}$ यो (for नो). S राज्ञः (for राजन्). — $^{f}$) $D_{1.6}$ इवोदितं.

एवमेतानि सरथो वहन्श्वेतहयो रणे ।
क्षपयिष्यति नो राजन्कालचक्रमिवोद्यतम् ॥ १३
तस्याद्य वसुधा राजन्निखिला भरतर्षभ ।
यस्य भीमार्जुनौ योधौ स राजा राजसत्तम ॥ १४
तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ।
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः ॥ १५
न हि भीमभयाद्भीता लप्स्यन्ते विजयं विभो ।
तव पुत्रा महाराज राजानश्चानुसारिणः ॥ १६
मत्स्यास्त्वामद्य नार्चन्ति पञ्चालाश्च सकेकयाः ।
शाल्वेयाः शूरसेनाश्च सर्वे त्वामवजानते ।
पार्थं ह्येते गताः सर्वे वीर्यज्ञास्तस्य धीमतः ॥ १७
अनर्हानेव तु वधे धर्मयुक्तान्विकर्मणा ।
सर्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः ।
तव पुत्रो महाराज नात्र शोचितुमर्हसि ॥ १८
द्यूतकाले मया चोक्तं विदुरेण च धीमता ।
यदिदं ते विलपितं पाण्डवान्प्रति भारत ।
अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ १९

C. 5. 2142
B. 5. 54. 22
K. 5. 54. 22

इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

14 [b]) Ds T2 G4 M (except M1) अखिला (for नि°). — [d]) K1 B5 Dn2 Ds D3–5.8.10 °सत्तमः.

15 [c]) M दुर्योधनमुखान्. D7 तात; D10 सर्वे (for दृष्ट्वा).

16 [a]) T1 G1.2.5 °बलाद् (for °भयाद्). K4 B2.5 Dn Ds D3–6 न भीमार्जुनयोर्भीता. — [b]) B1.3.4 Dn D3–7.10 लप्स्यंति; T G लभंते. B5 T2 G3.4 प्रभो; T1 G1.5 कथं (for विभो). — [c]) S (except G5) °बाहो (for °राज). — [d]) D2.10 (m as in text) °चारिणः (for °सारिणः).

17 [a]) D1.2 तात; G2 एव (for अद्य). D8 नार्छंति; G3 M नेच्छंति. — [b]) A few MSS. पंचालाः. Some N MSS. कैकयाः. B4 मद्रके° (for च सके°). — [c]) Some MSS. साल्वेयाः. B3 शूरसेनाश्च सर्वेषां. — [d]) K1 सर्वे ते त्वामुपेक्षते; B8 शाल्वेया अवजानते; D10 सर्वे ते त्वावजा°; S सर्वे प्राच्याश्च मारिष. — [e]) D7.10 transp. ह्येते and सर्वे. S एव (for ह्येते). T1 G1.5 आगताः (for गताः). — After 17, S reads 18[ef]; while N (K2.3.5 D9 missing) ins.:

335* भक्त्या ह्यस्य विरुध्यन्ते तव पुत्रैः सदैव ते ।

[ Dn1 Ds1 D3.4.6 भक्ताः. Ds1 तस्य. K1 D7.10 दुरात्मभिः; D1 महाबलैः (for सदैव ते). B5 Dn1 D2.3.6 तैः (for ते). ]

18 [a]) D1 अर्हानेकत्र बाध्येद्यो; D2 अर्हानेव तु राधेयो; D7 तानेव बुबुधे यो वै; D10 अनर्हो नैव बुबुधे; S अनर्हो येन वध्येत (T1 बाध्येत; G2 बुध्येत; G3.5 युध्येत). — [b]) S धर्मयुक्तो विचक्षणः. — After 18[ab], K4 B D (except D1; D2 marg. *sec. m.*; D9 missing) ins.:

336* योऽक्लेशयत्पाण्डुपुत्रान्यो विद्वेष्ट्यधुनापि वै ।

— [c]) S सर्वैरुपायैर्निग्राह्यः. — [d]) D1.2.7 T2 G4 M1 (*inf. lin.*). 2.4 (*inf. lin.*) सोधमः; T1 G1–3 M1.3–5 सोधर्म्यः (for सानुगः). — After 18[cd], S ins.:

337* अपरोक्षं महाराज साक्षाच्चैनं ब्रवीम्यहम् ।

[ M एतद् (for एनं). ]

— S reads 18[ef] after 17. — [e]) K1 D5.6 महाराजन्. S पुत्रस्य तव दोषेण. — [f]) K4.5 B Dn Ds D2–8 नानु°; D1.10 नातः; G5 नाव- (for नात्र).

19 [a]) K4 D3.4 G3 प्रोक्तं (for चोक्तं). — [b]) S तथा भीष्मेण धी°. — [e]) K4 Dn2 D1.3 G1 अनीशेनैव; D7 °शे तव; T2 G2–5 °शे त्वयि. Ca. d cite अनीशेन (as in text). — [f]) D2 एव (for एतन्).

Colophon missing in K2.3 D9; K5 om. it. — *Sub-parvan:* K1.4 B D संजययान (D2 यानसंधि; D9 missing); T1 G1–4 M संजयप्रतियान. — *Adhy. name:* M पांडवप्रशंसनं. — *Adhy. no.* (figures, words or both): K1 G5 54; D5 53; D6 50; D7 55; T G1–4 M 56 (M2–5 57). — *S'loka no.:* Dn 22; D8 38; G5 23.

## 54

☞ This adhy. is missing in K2.3 D9 (cf. v.l. 5. 41. 1; 32. 15; 50. 59). K5 om. 1–25[ab] (cf. v.l. 5. 52. 1).

1 G2.4 M1–3.5 om. 1[cd]; T2 reads it in marg. — [c]) T G1.5 च (for स्म). K1 Ds3 परा- (for परान्). K1 B2.4 Dn Ds D5.6.8 T2 G3 जेतुं (for राजन्). M4

५४



दुर्योधन उवाच ।

न भेतव्यं महाराज न शोच्या भवता वयम् ।
समर्थाः स्म परान्राजन्विजेतुं समरे विभो ॥ १
वनं प्रव्राजितान्पार्थान्यदायान्मधुसूदनः ।
महता बलचक्रेण परराष्ट्रावमर्दिना ॥ २
केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः ।
राजानश्चान्वयुः पार्थान्बहवोऽन्येऽनुयायिनः ॥ ३
इन्द्रप्रस्थस्य चादूरात्समाजग्मुर्महारथाः ।
व्यगर्हयंश्च संगम्य भवन्तं कुरुभिः सह ॥ ४
ते युधिष्ठिरमासीनमजिनैः प्रतिवासितम् ।
कृष्णप्रधानाः संहत्य पर्युपासन्त भारत ॥ ५
प्रत्यादानं च राज्यस्य कार्यमूचुर्नराधिपाः ।
भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः ॥ ६
श्रुत्वा चैतन्मयोक्तास्तु भीष्मद्रोणकृपास्तदा ।
ज्ञातिक्षयभयाद्राजन्भीतेन भरतर्षभ ॥ ७
न ते स्थास्यन्ति समये पाण्डवा इति मे मतिः ।
समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ॥ ८
ऋते च विदुरं सर्वे यूयं वध्या महात्मनः ।
धृतराष्ट्रश्च धर्मज्ञो न वध्यः कुरुसत्तमः ॥ ९
समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः ।
एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे ॥ १०
तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान्वा संपरित्यज्य प्रतियुध्यामहे परान् ॥ ११
प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः ।
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः ॥ १२
विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः ॥ १३
प्रणिपाते न दोषोऽस्ति बन्धूनां शाश्वतीः समाः ।

---

महाबाहो (for परान्राजन्). — $^{d}$) $K_1$ राजेंद्र; $B_{2.4}$ $Dn$ $Ds$ $D_{5.6.8}$ $G_3$ बलिनः; $T_2$ राजंश्च (for विजेतुं). $D_1$ वयं; $D_2$ प्रभो (for विभो).

2 $^{a}$) $K_4$ B D (except $D_{1.2}$; $D_9$ missing) $G_{3.4}$ वने. $K_{1.4}$ $B_{1.2.5}$ $D_{2-5.8}$ $G_3$ प्रव्रजितान्. — $^{c}$) $D_2$ महता च बलौघेन. — $^{d}$) $K_1$ परराष्ट्रवि°.

3 $^{a}$) A few MSS. कैकया or कैकेया. — $^{b}$) $T_1$ $G_1$ वीर्यवान्; $T_2$ M पार्थिवः (for पार्षतः). — $G_5$ om. $3^{cd}$. — $^{c}$) $G_3$ आययुः (for अन्वयुः). $D_{10}$ पार्थं; $M_{1.2.5}$ (*inf. lin.*) पश्चाद् (for पार्थान्). — $^{d}$) $D_{1.2}$ ये; $G_4$ हि (for अन्ये).

4 $^{c}$) $K_1$ विगर्हंश्चाप्यसंगम्य; $D_{1.2.10}$ S वि($G_{1.2}$ व्य)गर्हयंतः ($D_1$ °त) सं°.

5 $^{a}$) $D_{5.6.8}$ $G_3$ युधिष्ठिरं समासीनं. — $^{b}$) $T_2$ अनुजैः (for अजिनैः). S परिवारितं. — $^{c}$) $G_5$ संगम्य; $M_2$ संगत्य; C a. d संहत्य (as in text). — $^{d}$) $K_1$ $B_5$ $Dn_1$ $Ds$ $T_1$ G (except $G_3$) पर्युपासत.

6 $^{a}$) $K_1$ °दानेन; $D_1$ °दानस्य (for °दानं च).

7 $^{a}$) $K_4$ B $Dn$ $Ds$ $D_{3-6}$ $M_4$ चैवं; $D_1$ एवैतन्; $D_2$ एव तु; G चैते (for चैतन्). $D_{1.2}$ ते (for तु). — $^{b}$) $K_1$ $B_5$ $D_{1.2.5.6.8}$ $T_2$ $G_{2.3}$ °कृपास्तथा; $G_4$ °कृपादयः.

8 $D_1$ om. $8^{ab}$. — $^{a}$) B $Ds_1$ न नः; $Dn$ $D_6$ ततः; $Ds_2$ न तु; $D_2$ नाव-; T $G_4$ न चेत्; $G_{1.3.5}$ M न च; $G_2$ न हि (for न ते). $Ds$ $D_{3-5.8}$ $T_2$ समरे (for °ये). — $G_2$ om. $8^{cd}$.

9 $D_{10}$ om. $9^{a}$–$10^{a}$. — $^{a}$) $Dn_1$ वै; $G_2$ हि (for च). $K_4$ B D (except $D_{1.7}$; $D_{10}$ om.; $D_9$ missing) $G_3$ $M_{2.5}$ विदुरात्. — $^{b}$) $B_{2-4}$ $Dn$ $Ds$ मता मम; $D_{7.8}$ T $G_{1.5}$ महात्मना ($T_2$ °नां) (for महात्मनः). — $^{c}$) $K_4$ B D (except $D_{1.2.7}$; $D_{10}$ om.; $D_9$ missing) $M_2$ तु (for च). — $^{d}$) $B_{2.3}$ $D_{2.5.6.8}$ $T_1$ $G_{3.5}$ $M_{3-5}$ °सत्तम.

10 $D_{10}$ om. $10^{a}$ (cf. v.l. 9). — $^{a}$) $D_{2.7}$ $G_2$ हि (for च). $D_2$ T $G_{1.2.4.5}$ M नः कृत्स्नं (by transp.); $D_7$ नः सर्वं. $G_3$ समुच्छेदं ततः कृत्वा. — $^{b}$) $G_3$ कृत्स्नं (for कृत्वा). $D_2$ तत्र (for तात). — $^{c}$) $B_{2.5}$ $Ds_1$ ऐक° (for एक°). $K_1$ $Ds_2$ $D_{10}$ च; $D_2$ $G_3$ हि; $G_4$ स; $M_1$ स्वं (*inf. lin.* as in text) (for स्म).

11 $^{b}$) M (except $M_1$) प्रणिपातं; Ca. d as in text. — $^{d}$) $T_2$ $G_{2.3}$ °योत्स्यामहे.

12 $^{a}$) $T_1$ नियते; $T_2$ $G_5$ नियतं. — $^{b}$) $G_4$ ह्यस्माकं तु परा°.

13 $^{c}$) $K_4$ $D_{3.4}$ पांडवैः सर्वैः; $G_1$ पांडवाः सर्वे. — $^{d}$) $T_1$ $G_1$ दुर्द्यूतेन (for स्वज°).

14 $^{b}$) $K_4$ B D (except $D_{1.3.10}$; $D_9$ missing) संधिनैः (for बन्धूनां). Cs cites संधिः. — $^{c}$) $T_1$ G (except $G_2$) चैव (for त्वेव). — $^{d}$) $K_4$ B D (except

पितरं त्वेव शोचामि प्रज्ञानेत्रं जनेश्वरम् ।
मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकम् ॥ १४
कृतं हि तव पुत्रैश्च परेषामवरोधनम् ।
मत्प्रियार्थं पुरैवैतद्विदितं ते नरोत्तम ॥ १५
ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः ।
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः ॥ १६
ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ।
मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम् ॥१७
अभिद्रुग्धाः परे चेन्नो न भेतव्यं परंतप ।
असमर्थाः परे जेतुमस्मान्युधि जनेश्वर ॥ १८
एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान् ।
आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः ॥ १९
पुरैकेन हि भीष्मेण विजिताः सर्वपार्थिवाः ।
मृते पितर्यभिक्रुद्धो रथेनैकेन भारत ॥ २०
जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः ।
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् ॥ २१
स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे ।
परान्विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ ।
इत्येषां निश्चयो ह्यासीत्तत्कालममितौजसाम् ॥ २२
पुरा परेषां पृथिवी कृत्स्नासीद्वशवर्तिनी ।
अस्मान्पुनरमी नाद्य समर्था जेतुमाहवे ।
छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः ॥ २३
अस्मत्संस्था च पृथिवी वर्तते भरतर्षभ ।
एकार्थाः सुखदुःखेषु मयानीताश्च पार्थिवाः ॥ २४
अप्यग्निं प्रविशेयुस्ते समुद्रं वा परंतप ।
मदर्थे पार्थिवाः सर्वे तद्विद्धि कुरुसत्तम ॥ २५
उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम् ।
विलपन्तं बहुविधं भीतं परविकत्थने ॥ २६
एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान्प्रति ।
आत्मानं मन्यते सर्वो व्येतु ते भयमागतम् ॥ २७

C. 5. 2170
B. 5. 55. 28
K. 5. 55. 28

---

$D_{1.10}$; $D_9$ missing) जनाधिपं; $T_2$ नरेश्वरं (for जने°). — [f]) S अनुत्तमम् (for अनन्तकम्). — After 5. 56. 27, $G_5$ *repeats* 14–42[ab], *with Dn readings!!*

15 [b]) $T_2$ उपरोधनं; $G_3$ आपराध°; $M_3$ अपरोध°. — [c]) $K_1$ $D_{10}$m इंद्रियार्थं; $T_1$ G (except $G_4$) $M_5$ त्वत्प्रियार्थं. $K_1$ $D_{1.2.7.10}$ पुरा चै($K_1$ वै)तद्; Dn $D_3$ पुरे वै($Dn_1$ चै)तद्; S पैरे($G_3$ वध)श्चैव. — [d]) $K_1$ $D_{7.10}$ नृपोत्तम; $D_1$ नराधिप; S जनेश्वर (for नरो°).

16 [c]) $K_1$ $D_{1.7}$ $M_{2.3}$ प्रतिहरिष्यंति; $T_2$ परिवारयिष्यंति (hypermetric). — [d]) $D_{3.4.8}$ $T_2$ $G_{3-5}$ कुलच्छेदेन.

17 [c]) $G_5$ मां चाहुर् (for मत्वा मां).

18 [a]) $D_1$ द्रोगधारो वै; $G_3$ अभिरुद्धाः; $G_4$ °क्रुद्धाः; $G_5$ °द्रुह्यः; all comm. °द्रुग्धाः (as in text). $G_3$ च केचिन्नः; $G_4$ परे चैव; $G_5$ परश्चैव; Ca परे चेन्नः (as in text). Cd cites चेन्नः (as in text). — [b]) $D_1$ नरेश्वर (for परं°). — [d]) $D_7$ भुवि (for युधि). $K_1$ $D_{7.10}$ $G_4$ नरेश्वर; $K_4$ B Dn Ds $D_{3-6.8.10}$m समास्थि($D_{3.4}$ °श्रि)तान्; $D_1$ परंतप (for जने°).

19 [a]) $K_1$ $B_3$ $D_{7.10}$ $T_2$ $G_5$ स्म (for स्मो). — [b]) $D_4$ reads पांडवान्प्रति, in addition to सर्वपार्थिवान्.

20 [a]) T $G_{1-3.5}$ M अपि (for हि). $G_4$ पुनरेकेन भीष्मेण. — [c]) $K_4$ B ($B_4$ marg.) Dn Ds $D_{3-6}$ अति-; $D_{2.7}$ $G_3$ अपि (for अभि-).

21 [b]) $D_6$ $G_5$ $M_2$ °सत्तम.

22 [d]) $G_3$ $M_{1.3.4}$ व्यैतु; $G_4$ व्यपेतु (for व्येतु). — [e]) $D_{10}$ एतेषां (for इत्येषां). — [f]) $K_4$ B D (except $D_{7.8.10}$; $D_9$ missing) तत्कालेमिततेजसां; $T_1$ $G_{1.5}$ तत्कालमतितेजसां; $G_4$ तस्मिन्कालेमितौजसां.

23 [c]) $D_1$ $G_3$ तस्मात् (for अस्मान्). T G (except $G_2$) इमे (for अमी). — [ef]) $T_1$ भिन्न°; $M_1$ हीन°; Ca छिन्न° (as in text). $T_2$ परं वै वीर्यहीनाश्च पार्थाः संभिन्नपक्षकाः.

24 $M_1$ om. 24. — [d]) B Dn Ds $D_{3-6}$ समानीताश्च. Ca cites समानीताः; Cs मया आनीताः. M ($M_1$ om.) बांधवाः (for पार्थिवाः).

25 $K_5$ resumes from 25[cd] (cf. v.l. 5. 52. 1). — [a]) $T_1$ $G_{1.5}$ अप्यग्नीन्. — [c]) B D (except $D_{7.10}$; $D_9$ missing) $G_4$ मदर्थं. — [d]) Ds कुरुनंदन; $D_{1.7.10}$ S भरतर्षभ (for कुरु°).

26 [a]) $D_{10}$ $G_5$ अपि (for इव). $D_1$ $G_3$ M त्वा (for त्वां). — [b]) $D_7$ हसंति स्म (for प्रहसन्ति). $K_1$ $M_1$ इव; $B_3$ च; $D_{7.8}$ $G_3$ सु- (for इह). $D_{1.3.4}$ दुःखिताः. — [c]) $D_{7.10}$ प्रलपंतं. — [d]) $Dn_1$ $G_3$ M °विकत्थनैः; Cs as in text. Ca.d cite परेषां विकत्थने.

27 [a]) $D_1$ एवं (for एषां). $D_{1.2}$ om. हि. $K_5$ $D_{1.2}$ राजन् (for राज्ञां). — [b]) Dn $D_7$ $T_1$ $G_{1.2}$ समर्थं; $D_1$ M

C. 5. 2170
B. 5. 55. 29
K. 5. 55. 29

सर्वां समग्रां सेनां मे वासवोऽपि न शक्नुयात् ।
हन्तुमक्षय्यरूपेयं ब्रह्मणापि स्वयंभुवा ॥ २८
युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान्स याचति ।
भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे प्रभो ॥ २९
समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ।
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्थ भारत ॥ ३०
मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत्कश्चिदतिक्रान्तो भविता न च कश्चन ॥ ३१
युक्तो दुःखोचितश्चाहं विद्यापारगतस्तथा ।
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ॥ ३२
दुर्योधनसमो नास्ति गदायामिति निश्चयः ।
संकर्षणस्य भद्रं ते यत्तदैनमुपावसम् ॥ ३३
युद्धे संकर्षणसमो बलेनाभ्यधिको भुवि ।
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ॥ ३४
एकं प्रहारं यं दद्यां भीमाय रुषितो नृप ।
स एवैनं नयेद्घोरं क्षिप्रं वैवस्वतक्षयम् ॥ ३५
इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् ।
सुचिरं प्रार्थितो ह्येष मम नित्यं मनोरथः ॥ ३६
गदया निहतो ह्याजौ मम पार्थो वृकोदरः ।
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ॥ ३७
गदाप्रहाराभिहतो हिमवानपि पर्वतः ।
सकृन्मया विशीर्येत गिरिः शतसहस्रधा ॥ ३८
स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा ।
दुर्योधनसमो नास्ति गदायामिति निश्चयः ॥ ३९
तत्ते वृकोदरमयं भयं व्येतु महाहवे ।
व्यपनेष्याम्यहं ह्येनं मा राजन्विमना भव ॥ ४०

---

समर्थाः; $D_2$ $G_4$ समर्थान्. — d) $G_4$ $M_{1.3.4}$ व्यैतु. $K_{1.5}$ $D_1$ भयमुत्तमं; $D_{2.7.10}$ मानसो ज्वरः; S मानसं भयम् (for भयमागतम्).

28 a) $K_4$ B Dn Ds $D_{2.7.8}$ (by corr.). $_{10}$m जेतुं (for सर्वां). $D_7$ समर्थां; $D_8$ (before corr.) $G_1$ संग्राम- (for समग्रां). Ds येनास्मि (for सेनां मे). — c) $D_{1.2}$ S °रूपां ($D_2$ °रूपा) हि (for °रूपेयं). All comm. cite अक्षय्यरूपा (as in text). — d) $G_{1.4.5}$ हि (for अपि). $K_4$ B Dn Ds $D_{3-6.8}$ ब्रह्मणोपि स्वयंभुवः.

29 a) S युधिष्ठिरोपि तज्ज्ञात्वा ($T_2$ तच्छ्रुत्वा). — b) $K_1$ $B_{3.4}$ Dn $D_{1.7}$ स्म; $K_5$ $D_2$ S च; $D_{10}$ तु (for स). $K_{1.5}$ $B_{3.5}$ $D_{3.10}$ $T_1$ $G_3$ याचते. — c) $K_{1.5}$ $D_{7.10}$ अयं (for हि). — d) $K_{1.5}$ $D_{7.10}$ एव; $T_2$ $G_{2.3}$ चापि (for चैव). $K_4$ B D (except $D_{1.7.10}$; $D_9$ missing) विभो (for प्रभो).

30 d) $K_4$ B D (except $D_{1.2.7}$; $D_9$ missing) वेत्सि (for वेत्थ).

31 $K_1$ $D_1$ $T_2$ $G_4$ om. (hapl.) $31^{cd}$. — c) $K_5$ $D_7$ नास्ति (for नासीत्). — d) $K_5$ $D_{7.10}$ वा न (for न च).

32 a) $K_4$ B Dn $D_{2-7}$ दुःखोषितः ($B_3$ दुःखे जितः); Ca.d.s दुःखोचितः (as in text). — b) $K_{1.5}$ $D_{2.7.10}$ विद्यायाः ($K_1$ °यां) पारगस्; $Dn_2$ $D_1$ S विद्यापारं गतस्. $T_1$ $G_{3.4}$ $M_4$ तदा (for तथा). — c) S तेभ्यश्च ($G_5$ युद्धे च) (for नान्येभ्यो). $D_2$ तस्माद्भीमान्न चान्येभ्यो. — d) $K_{1.5}$ ते (for मे). $D_1$ विद्यते मे भयं क्वचित्.

33 $33^{ab} = 39^{cd}$. — c) $D_{3.4}$ संकर्षणश्च; Ca.d as in text. T G (except $G_4$) भवने (for भद्रं ते). — d) $D_{1.7}$ यत्तदेनं (cf. Cs below); $D_2$ यत्र चैनं; $D_{3.4}$ यत्तदैवं; $D_{10}$ यत्र दैन्यं; S तत्र चैनं; Ca.d यत्तदैनं (as in text). Cs cites यत्, तत् and एनं. Ds $D_{2.7}$ Cd.s °विशं; $D_{10}$ °गतं; Ca °वसं (as in text). $K_1$ $Dn_1$ यत्तदेनं ($Dn_1$ °दन्नं) पुरावसं; $K_5$ युद्धेनं वः पुरा कृतं (sic).

34 b) $T_1$ बले वा; $G_{3.5}$ M बले च (for बलेन). $K_{1.5}$ $D_{7.10}$ अस्म्यधिको; $Dn_1$ Ds अस्त्य°; $D_1$ अस्म्यतुलो; $M_{3.4}$ अप्यधिको (for अभ्यधिको).

35 a) T G चेत् (for यं). — c) T G तदै($G_3$ तथै)वैनं ($G_4$ तत एनं) (for स एवैनं). $K_4$ $B_2$ D (except $D_{2.10}$) $G_4$ घोरः (for घोरं).

36 $G_5$ $M_1$ om. (? hapl.) $36^{cd}$. — d) $D_1$ राजन् (for नित्यं). $D_{10}$ (*sup. lin.* as in text) S वृकोदरः (for मनो°).

37 $G_3$ (hapl.) om. $37^{ab}$; $D_2$ reads it in marg. — a) $D_7$ राजन्; $G_5$ अप्याजौ (for ह्याजौ). — b) $K_4$ B D ($D_9$ missing) मया (for मम). — c) $D_{1.2}$ वसुधां (for पृथिवीं). — d) $K_5$ गतासुः (? gloss); Ca परासुः (as in text).

38 b) $T_2$ वज्रिणा (for हिमवान्). $K_{1.5}$ $B_{1.2.5}$ $D_{1.2.8}$ $T_2$ $G_{1.2}$ $M_5$ इव (for अपि). — c) $K_{4.5}$ B D ($D_9$ missing) $T_2$ $G_{1.2.4}$ विदीर्येत.

39 a) S °जानीते (for °जानाति). — $39^{cd} = 33^{ab}$.

तस्मिन्मया हते क्षिप्रमर्जुनं बहवो रथाः ।
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ॥ ४१
भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा ।
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः ॥ ४२
एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान् ।
समस्तास्तु क्षणेनैतान्नेष्यन्ति यमसादनम् ॥ ४३
समग्रा पार्थिवी सेना पार्थमेकं धनंजयम् ।
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते ॥ ४४
शरव्रातैस्तु भीष्मेण शतशोऽथ सहस्रशः ।
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ॥ ४५
पितामहो हि गाङ्गेयः शंतनोरधि भारत ।
ब्रह्मर्षिसदृशो जज्ञे देवैरपि दुरुत्सहः ।
पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ॥ ४६
ब्रह्मर्षेश्च भरद्वाजाद्द्रोण्यां द्रोणो व्यजायत ।
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ॥ ४७
कृपश्चाचार्यमुख्योऽयं महर्षेर्गौतमादपि ।
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः ॥ ४८
अयोनिजं त्रयं ह्येतत्पिता माता च मातुलः ।
अश्वत्थाम्नो महाराज स च शूरः स्थितो मम ॥ ४९
सर्व एते महाराज देवकल्पा महारथाः ।
शक्रस्यापि व्यथां कुर्युः संयुगे भरतर्षभ ॥ ५०
भीष्मद्रोणकृपाणां च तुल्यः कर्णो मतो मम ।
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ॥ ५१
कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ।

C. 5. 2197
B. 5. 55. 54
K. 5. 55. 55

---

40 a) D2.8 T1 G1 °कृतं; T2 °भयं (for °मयं). — b) M व्यैतु (for व्येतु). B3 व्येतु ते भयमाहवे; T2 व्येतु राजन्महाहवे. — c) K5 M1 ह्येतन्; G2 सर्वं; G3 शोकं (for ह्येनं).

41 a) D8 अस्मिन् (for तस्मिन्). D1.2 हते मया (by transp.); S महाहवे.

42 c) D1 °ज्योतिषेश्वरः.

43 c) K4 B Dn Ds D3-7.10 Ca समेताः; D1.2 T2 G2 M2 समस्तान्; D8 समेतान् (for समस्ताः). S एव (for एतान्). — d) D1 यममंदिरं.

44 a) K1 समस्ता; K5 D1.7 समर्था (for समग्रा). K1 (before corr.) D8 पृथिवी- (for पार्थिवी). S समर्थाः (G4 सामात्यां; M2 समस्तां) पांडवीं सेनां. — b) D5.6.8 पार्थिवानां; S हरिकेतुं (for पार्थमेकं). D1.2.10 m प्रबाधितुं (for धनं°). — c) S (except M1.2.5) तस्माद्. D1.2.8 T G अशक्तो.

45 b) K1.5 शतशो विचितो भृशं; K4 Dn2 D3.4 (m as in text).7.10 °शो निचितोवशः; D1.2 °शो निचितोंगशः; T1 G M1 शतशो (G1 दशाप्या-) वृण्वता दिशः; T2 M2-5 °शो विजि(T2 °घृ)ता दिशः. Ca cites निचितः, Ca.d.s अंगशः. — d) D2 पार्थो गंता (by transp.).

46 a) K4 B Dn Ds D1.3-6.8.10 T2 G3.4 M2 अपि; D2 अयं (for हि). — b) Some MSS. and Ca.s शांतनोर्; Cd as in text. K1.5 D1.2.8 अपि (K1 अपि च); D7.10 इति; Ca.d.s अधि (as in text). S शंतनो रथिनां वरः. — c) M1 ब्रह्मवित्सदृशो. — d) K4 B (except B2) D (D9 missing) Ca सुदुःसहः (D2 दुरासहः; D7 दुरासदः); G2 सुदुर्जयः (for दुरुत्सहः). — After 46cd, N (K2.8 D9 missing) ins.:

338* न हन्ता विद्यते चापि राजन्भीष्मस्य कश्चन ।

— e) S अपि (for हि). D1.2 उक्तः पित्रा ह्यसौ पूर्वं. — f) G2 कामतस्त्वं मरि°.

47 a) D1.7 महर्षेश्च. — b) T2 G1.2 M2.5 अपि (for वि-). K4 B Dn Ds D2-6 द्रोणो द्रोण्यामजायत. — D1 (hapl.) om. 47d–50a.

48 D1 om. 48 (cf. v.l. 47). — a) K5 कृपाचार्यो मुख्योयं च; G3 कृपाचार्यश्च मुख्योयं. — b) K5 D10 S (except T2 G1.2) ब्रह्मर्षेर् (for महर्षेर्). — c) D2 °स्तंबभवः; G5 °स्तंबेभवत्. G4 धी° (for श्री°). — d) G3 M2 न वध्य (for अवध्य).

49 D1 om. 49 (cf. v.l. 47). — a) G2-4 तु (for हि). K4 B Dn Ds D2-6.8 °जास्त्रयो ह्येते (D2 ह्यत्र). — b) G3 पुत्रो (for माता). G2-4 M1.3.4 अथ (for च). — c) K1 B2 D8 S (except G3 M2-4) अश्वत्थामा.

50 D1 om. 50a (cf. v.l. 47). — b) D1 ब्रह्म° (for देव°). — After 50, N (K2.8 D9 missing) ins.:

339* नैतेषामर्जुनः शक्त एकैकं प्रति वीक्षितुम् ।
सहितास्तु नरव्याघ्रा हनिष्यन्ति धनंजयम् ।

51 G2.4 M om. 51. — b) Dn1 D3.4.6 G3 कर्णस्तुल्यो (by transp.). — c) K4 Dn1 D1 तु (for च).

52 ab) D8 कवचे (for रुचिरे). D6 G4.5 वास्तां; D3 आस्तां (for चास्तां). K1 रुचिते शुभे; G3 रुचिरप्रभे. K4 Dn1 D3.4 S (except T1 G1) transp. रुचिरे and सहजे. — c) B3.4 Dn2 D7.8 शच्यर्थं; G5 M शक्त्यर्थे (M1

C. 5. 2198
B. 5. 55. 55
K. 5. 55. 55

C.
B.
K.

ते शच्यर्थे महेन्द्रेण याचितः स परंतपः ।
अमोघया महाराज शक्त्या परमभीमया ॥ ५२
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनंजयः ।
विजयो मे ध्रुवं राजन्फलं पाणाविवाहितम् ।
अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः ॥ ५३
अद्धा ह्येकेन भीष्मोऽयमयुतं हन्ति भारत ।
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि ॥ ५४
संशप्तानि च वृन्दानि क्षत्रियाणां परंतप ।
अर्जुनं वयमस्मान्वा धनंजय इति स्म ह ॥ ५५
तांश्चालमिति मन्यन्ते सव्यसाचिवधे विभो ।
पार्थिवाः स भवांस्त्राजन्नकस्माद्व्यथते कथम् ॥ ५६
भीमसेने च निहते कोऽन्यो युध्येत भारत ।
परेषां तन्ममाचक्ष्व यदि वेत्थ परंतप ॥ ५७
पञ्च ते भ्रातरः सर्वे धृष्टद्युम्नोऽथ सात्यकिः ।
परेषां सप्त ये राजन्योधाः परमकं बलम् ॥ ५८
अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः ।
द्रौणिर्वैकर्तनः कर्णः सोमदत्तोऽथ बाह्लिकः ॥ ५९
प्राग्ज्योतिषाधिपः शल्य आवन्त्योऽथ जयद्रथः ।
दुःशासनो दुर्मुखश्च दुःसहश्च विशां पते ॥ ६०
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ।
शलो भूरिश्रवाश्चोभौ विकर्णश्च तवात्मजः ॥ ६१
अक्षौहिण्यो हि मे राजन्दशैका च समाहृताः ।

---

*inf. lin.* as in text). — $^{d}$) $Dn_{2}$ $T_{2}$ $G_{2}$ परंतप. — $^{e}$) $D_{10}$m सफलया (? gloss) (for अमोघया). — $^{f}$) $D_{7}$ $T_{1}$ G (except $G_{5}$) परम($G_{3.4}$ समर)भीषया.

53 $^{a}$) $D_{7}$ शक्त्याप°; $G_{2.5}$ M (except $M_{4}$) °गूढश्च; $G_{3}$ शक्त्याव°; Cs as in text. — $B_{4}$ om. $53^{cd}$; $G_{2.3}$ om. (hapl.) $53^{e}$–$53^{f}$. — $^{e}$) $K_{4}$ $D_{2-4}$ ध्रुवो (for ध्रुवं). S ($G_{2.3}$ om.) महाराज (for ध्रुवं राजन्). — After $53^{cd}$, $T_{1}$ $G_{1.4.5}$ M (except $M_{1}$) read $59^{c}$–$60^{b}$ (for the first time), *repeating* the lines in their proper place. — $^{f}$) $D_{1.2}$ युधि; $G_{5}$ विद्धि (for भुवि).

54 $^{a}$) $D_{1}$ S (except $T_{1}$) अपि (for हि). — $^{b}$) $K_{4}$ B (except $B_{3}$) D ($D_{9}$ missing) Cd प्रयुतं (for अयुतं). — $^{d}$) $T_{1}$ $G_{1}$ °कृपादयः (for °कृपा अपि).

55 $^{a}$) $M_{3-5}$ संसक्तानि; Cd संशप्तानि (as in text). $K_{1.5}$ $D_{1.2.7}$ प्रवृत्तानि; T $G_{1.2.5}$ च वृत्तानि (for च वृन्दानि). $K_{4}$ B Dn Ds $D_{3-6.8.10}$ संश(some MSS. संस)प्तकानां वृंदानि; $G_{3}$ संशप्तकानि वृंदानि. Ca cites संशप्तकानां, Cs संसप्तकानि. — $^{c}$) Ds वायं; Cd वयम् (as in text). — $^{d}$) $K_{4}$ B D (except $D_{1.2.7}$; $D_{9}$ missing) निहन्यात्कपिकेतनः.

56 $^{a}$) $K_{4}$ B (except $B_{1}$) Dn $D_{3-5}$ तं; $D_{6}$ तत्; $G_{2}$ M ते (for तान्). $D_{7.10}$ मन्येहं (for मन्यन्ते). $D_{2}$ तांश्च कालमहं मन्ये. Ca.d.s cite तान् अलं इति मन्यंते. — $^{b}$) $D_{1}$ °वधं; Ca.d.s °वधे (as in text). $K_{4}$ $B_{3}$ $D_{5.6.8}$ वृताः; $B_{1.2.4.5}$ Dn Ds $D_{2-4.10}$ Cs घृताः ($D_{10}$ घृतान्); $D_{1}$ प्रभो (for विभो). — $^{c}$) $D_{10}$ पार्थिवान्; Ca.d as in text. $D_{1}$ सन्; $D_{7}$ च (for स). S संगता (for स भवान्). $K_{4}$ B D (except $D_{7}$; $D_{9}$ missing) तेभ्यो (for राजन्). — $^{d}$) $K_{4}$ B D (except $D_{7.8}$; $D_{9}$ missing) ह्यकस्मात् (for अकस्मात्). $K_{5}$ $D_{8}$ S व्यथसे; Ca.d as in text.

57 After 57, S ins.:

340* पाञ्चालेषु च भग्नेषु कोऽन्यः स्थातुमिहार्हति ।

58 $^{a}$) $K_{1.5}$ $D_{1.7.10}$ एते (for ते). — $^{b}$) $D_{3.4}$ अपि (for अथ). — $^{d}$) $G_{2}$ M (except $M_{1}$) यौधाः. $K_{4}$ B Dn Ds $D_{2-6.8}$ योधाः सारं बलं मतं ($B_{3}$ महत्); $D_{1}$ योध्यास्माकं बलं महत्.

59 $^{a}$) = Gītā (Vulg.) 1. $7^{a}$. $K_{4}$ $D_{3.4}$ $G_{4}$ च (for तु). — $^{b}$) S (except $T_{1}$ $G_{4.5}$) °कृपां नृप. — $T_{1}$ $G_{1.4.5}$ M (except $M_{1}$) *repeat* $59^{c}$–$60^{b}$ here (with v.l.), reading it for the first time after $53^{cd}$. — $^{c}$) $G_{3}$ द्रौणिः कर्णौ विकर्णश्च. — $^{d}$) $T_{1}$ $G_{1}$ (first time) स· (for अथ).

60 $T_{1}$ $G_{1.4.5}$ M (except $M_{1}$) *repeat* $60^{ab}$ here (with v.l.); cf. v.l. 59. — $^{b}$) B Dn Ds $D_{8}$ $T_{1}$ $G_{1}$ (latter two second time) आवंत्यौ च; $T_{1}$ $G_{1.4.5}$ $M_{2-5}$ (all first time) सिंधुराजो; $T_{2}$ आवंती च; $G_{3}$ अवंत्येशो (for आवन्त्योऽथ). — $^{cd}$) $K_{1.5}$ $D_{7}$ विकर्ण° (for दुर्मुख°). $B_{4}$ $D_{2}$ transp. दुर्मुख° and दुःसह°. $B_{2}$ दुर्मुख° (repeated) (for दुःसह°). $T_{2}$ G (except $G_{1}$) $M_{1}$ स (for the second च). S विविंशतिः (for विशां पते); cf. v.l. $61^{b}$.

61 $^{a}$) $T_{1}$ $G_{1}$ श्रुतायुश्चाश्रुतायुश्च. — $^{b}$) $K_{5}$ $B_{5}$ S विशां पते (for विविंशतिः); cf. v.l. $60^{d}$. — $^{c}$) $K_{4.5}$ $B_{5}$ $Dn_{1}$ $D_{1-4}$ T $G_{1.2}$ शल्यो (for शलो). $K_{4}$ B (except $B_{3}$) D (except $D_{7.10}$; $D_{9}$ missing) $G_{3}$ चैव (for

न्यूनाः परेषां सप्तैव कस्मान्मे स्यात्पराजयः ॥ ६२
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥ ६३
गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणमात्मनश्च विशां पते ॥ ६४
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ॥ ६५

वैशंपायन उवाच ।

इत्युक्त्वा संजयं भूयः पर्यपृच्छत भारत ।
विधित्सुः प्राप्तकालानि ज्ञात्वा परपुरंजयः ॥ ६६

इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## ५५

दुर्योधन उवाच ।

अक्षौहिणीः सप्त लब्ध्वा राजभिः सह संजय ।
किं स्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ १

संजय उवाच ।

अतीव मुदितो राजन्युद्धप्रेप्सुर्युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः ॥ २
रथं तु दिव्यं कौन्तेयः सर्वा विभ्राजयन्दिशः ।
मन्त्रं जिज्ञासमानः सन्बीभत्सुः समयोजयत् ॥ ३
तमपश्याम संनद्धं मेघं विद्युत्प्रभं यथा ।
स मन्त्रान्समभिध्याय हृष्यमाणोऽभ्यभाषत ॥ ४

C. 5. 2217
B. 5. 56. 4
K. 5. 56. 4

चोभौ). — [d]) $D_2$ महारथः (for तवात्मजः).

62 [a]) $D_8$ अक्षौहिण्या; $G_{1.2}$ अक्षोहिण्यश्च. $K_5$ $D_{1.7.10}$ S च; $D_2$ [अ]स्ति (for हि). $K_4$ $D_{3.4}$ महाराज (for हि मे राजन्). $G_2$ संति (for राजन्). — [b]) $D_{1.5}$ दश चैका. $K_{1.5}$ $B_3$ $D_{1.3.10}$ समाहिताः; $D_7$ °कृताः; S समाश्रि(G4 °वृ)ताः. — [d]) $T_1$ $G_1$ तस्मात्तेषां; $G_4$ कथं मे स्यात् (for कस्मान्मे स्यात्).

63 [a]) $K_1$ हि त्रिगुणोहीनं; $Dn_1$ $D_8$ $D_{10}$ द्विगुणतो हीनं; S त्रिगुणयोगेन. All comm. cite त्रिगुणतः (as in text). — [b]) $K_5$ $D_{1.2}$ साध्यं (for योध्यं). $D_2$ आह (for प्राह). — [c]) $K_4$ वेद्यं; $T_1$ राजन्; $C_s$ चेयं (as in text). — [d]) $T_1$ चेयम् (for राजन्). — $K_5$ om. 63[d]–64[b].

64 $K_5$ om. 64[ab] (cf. v.l. 63). — [d]) $K_4$ $D_2$ आत्मानं च (for आत्मनश्च).

65 [a]) $T_1$ $G_{1.5}$ अवि° (for समा°). — $K_5$ om. 65[c]–66[b].

66 $K_5$ om. 66[ab] (cf. v.l. 65). $K_{4.5}$ B D (except $D_{7.10}$; $D_9$ missing) $G_2$ $M_1$ om. the ref. — [a]) $K_{1.4}$ $D_{1.5.7.8}$ इत्युक्तः. $T_2$ भीतः (for भूयः). — [c]) $K_4$ B D (except $D_{1.3.4.10}$; $D_9$ missing) $T_2$ $G_{1.2.5}$ विवित्सुः; $K_5$ विद्धि नः; Ca. d विधित्सुः (as in text). — [d]) $G_{1.5}$ राजा (for ज्ञात्वा). $D_2$ भरतसत्तम (for पर°).

Colophon missing in $K_{2.3}$ $D_9$. — *Sub-parvan:* $K_{1.4.5}$ B D संजययान ($D_2$ यानसंधि; $D_9$ missing); $G_1$ $M_{1.3-5}$ संजयप्रतियान. — *Adhy. name:* $M_{2-5}$ धृतराष्ट्रशोकापनोदनं. — *Adhy. no.* (figures, words or both): $K_1$ 55; $D_5$ 54; $D_6$ 51; $D_7$ $G_5$ 56; T $G_{1-4}$ M 57 ($M_{2.3.5}$ 58). — *S'loka no.:* Dn 69; $D_3$ 72; $G_5$ 68.

### 55

☞ This adhy. is missing in $K_{2.3}$ $D_9$ (cf. v.l. 5. 41. 1; 32. 15; 50. 59).

1 $K_{1.4.5}$ $D_{1-8}$ धृतराष्ट्रः (for दुर्योधनः). — [a]) A few MSS. अक्षोहिणीः. — [b]) $G_2$ भ्रातृ° (for राज°). — $D_2$ om. 1[cd]. — [c]) $K_{1.5}$ Cd अर्चंति; $D_1$ चर्चंति (for इच्छति). — [d]) $T_1$ $G_{1.5}$ महारथः (for युधि°).

2 $G_{2.4}$ om. 2[ab]. — [c]) $K_{1.5}$ $D_{7.10}$ चैव; $T_2$ $G_{2-4}$ M चापि (for चोभौ). — [d]) $K_1$ $T_1$ $G_{1.3.5}$ यमस्यापि; $K_5$ यमस्थानं; $G_{2.4}$ M यमौ चापि (for यमावपि).

3 [a]) $D_1$ रथे तिष्ठंस्तु कौंतेयः. — [c]) $K_{1.5}$ $D_{1.2.7.10}$ T $G_{3.4}$ $M_1$ मंत्राञ्. $K_5$ $D_1$ स; S तु (for सन्).

4 [a]) S बीभत्सुं (for संनद्धं). — [b]) $K_4$ B Dn $D_{3-6.8}$ विद्युद्युतं; $C_s$ °त्प्रभं (as in text). — [c]) $K_4$ B D (except $D_{7.8}$; $D_9$ missing) समंतात् (for स मन्त्रान्). $K_5$ $D_8$ $D_{3.10}$ S (except $T_1$) समभिध्यायन्.

5 [c]) $G_{3.4}$ M मा (for मां). — [d]) $K_5$ $D_{1.10}$ S तच्च (for तथा). $K_1$ $T_2$ $G_4$ अच्युतं; $Ds_2$ उत्तम; $D_2$ $T_1$ $G_{1.5}$

C. 5. 2218
B. 5. 56. 5
K. 5. 58. 4

पूर्वरूपमिदं पश्य वयं जेष्याम संजय ।
बीभत्सुर्मां यथोवाच तथावैम्यहमप्युत ॥ ५

दुर्योधन उवाच ।

प्रशंसस्यभिनन्दंस्तान्पार्थानक्षपराजितान् ।
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजः ॥ ६

संजय उवाच ।

भौवनः सह शक्रेण बहुचित्रं विशां पते ।
रूपाणि कल्पयामास त्वष्टा धात्रा सहाभिभो ॥ ७
ध्वजे हि तस्मिन्रूपाणि चक्रुस्ते देवमायया ।
महाधनानि दिव्यानि महान्ति च लघूनि च ॥ ८
सर्वा दिशो योजनमात्रमन्तरं
स तिर्यगूर्ध्वं च रुरोध वै ध्वजः ।
न संसज्जेत्तरुभिः संवृतोऽपि
तथा हि माया विहिता भौवनेन ॥ ९
यथाकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च विद्म किं नु तत् ।
तथा ध्वजो विहितो भौवनेन
बह्वाकारं दृश्यते रूपमस्य ॥ १०
यथाग्निधूमो दिवमेति रुद्ध्वा
वर्णान्बिभ्रत्तैजसं तच्छरीरम् ।
तथा ध्वजो विहितो भौवनेन
न चेद्भारो भविता नोत रोधः ॥ ११
श्वेतास्तस्मिन्वातवेगाः सदश्वा
दिव्या युक्ताश्चित्ररथेन दत्ताः ।
शतं यत्तत्पूर्यते नित्यकालं
हतं हतं दत्तवरं पुरस्तात् ॥ १२

---

$M_{2}$ अच्युत (for अप्युत).

6 $K_{1.4.5}$ $Dn_{1}$ $D_{1-8}$ धृतराष्ट्रः (for दुर्योधनः). $G_{3}$ om. the ref. — $D_{6}$ (hapl.) om. 6 and the ref. before 7. — $^{a}$) $D_{7}$ समस्तांस्तान् (for अभिनन्दंस्तान्). — $^{b}$) $K_{1.5}$ $D_{7}$ सर्वान् (for पार्थान्). — $^{c}$) S रथं (for रथे). — $^{d}$) $K_{4}$ B Dn Ds $D_{2-5.8}$ $G_{2}$ ध्वजाः.

7 $D_{6}$ om. the ref. (cf. v.l. 6). — $^{a}$) $K_{4}$ B D (except $D_{1.8.10}$; $D_{9}$ missing) Cs भौमनः; Cd as in text (cf. v.l. 9, 10). $Dn_{1}$ $G_{5}$ चक्रेण (for श°). — $^{b}$) S (except $M_{1.4}$) बहुचित्रो. — $^{d}$) $K_{4}$ $B_{1.3.5}$ Dn Ds $D_{3-6}$ Cs धाता (for धात्रा). $D_{7}$ धाता त्वष्टा (for त्वष्टा धात्रा). $K_{4}$ $B_{1.3.5}$ $D_{3-6}$ सदा विभो; $B_{2.4}$ समं विभो; $D_{2.7.8}$ $G_{2}$ $M_{5}$ सहाविभो.

8 $^{a}$) S तस्य ($G_{3}$ सर्वं-) (for तस्मिन्). — After 8, $K_{4}$ (om. line 2) B D ($D_{9}$ missing; $D_{2.10}$ marg. *sec. m.*) ins.:

341* भीमसेनानुरोधाय हनूमान्मारुतात्मजः ।
आत्मप्रतिकृतिं तस्मिन्ध्वज आरोपयिष्यति ।

9 $K_{4}$ om. $9^{ab}$. — $^{a}$) $T_{1}$ $G_{1}$ उन्नतं (for अन्तरं). — $^{c}$) $K_{4}$ Ds $D_{5.6}$ न सज्जत्यसौ; $B_{1.3.5}$ Dn $D_{3.4}$ न संसज्जत्यसौ; $B_{2.4}$ सज्जत्यसौ; $D_{1.7}$ $G_{4}$ न संसजेत्; $D_{2}$ न स सज्जेत्; $D_{8}$ $T_{1}$ $G_{1}$ न सज्जते; $T_{2}$ न संसजेते; $M_{3}$ नः संसंजेत् (for न संसज्जेत्). $T_{2}$ बहु° (for तरु°). — $^{d}$) $K_{1.5}$ $D_{2.7.10}$ M om. हि. $K_{4}$ B Dn Ds $D_{3-7}$ भौमनेन (cf. v.l. 7, 10).

10 $^{b}$) $K_{4}$ Ds $D_{5-7}$ $T_{2}$ $G_{2.4}$ चैव वर्णं; $T_{1}$ $G_{1.5}$ चैकरूपं. B (except $B_{2}$) Dn $D_{1.2.10}$ $M_{2}$ वेद्मि (for विद्म). $T_{1}$ $G_{1-3.5}$ M किंचन; $T_{2}$ किंचित् (for किं नु तत्). $G_{4}$ न विदुः कथंचन (for न च वेद्मि किं नु तत्). — $^{c}$) = $11^{c}$. $K_{5}$ रचितो (for विहितो). $K_{4}$ B Dn Ds $D_{2-7}$ भौमनेन (cf. v.l. 7, 9). — $K_{5}$ $B_{3}$ om. (hapl.) $10^{d}$–$11^{c}$; $D_{3}$ reads the portion in marg. (*sec. m.*).

11 $K_{5}$ $B_{3}$ om. $11^{abc}$ (cf. v.l. 10). $D_{7}$ reads $11^{ab}$ twice (with v.l.). — $^{a}$) $D_{7}$ (second time) तथा (for यथा). $D_{7}$ (second time) $T_{1}$ $G_{1.5}$ एव (for एति). $D_{1}$ तांस्तान्; Cd रुद्ध्वा (as in text). $D_{7}$ (first time) निरुद्धो गरीयान् (for दिवमेति रुद्ध्वा). — $^{b}$) M (except $M_{1}$) वर्णं. $G_{4}$ सिताभ्रं (for बिभ्रत्). $K_{4}$ B Dn Ds $D_{3-6.7}$ (second time)$._{10}$ तैजसांश्चित्ररूपान्. — $^{c}$) = $10^{c}$. $K_{4}$ B ($B_{3}$ om.) Dn Ds $D_{2-7}$ $G_{3.4}$ भौमनेन. — $^{d}$) $M_{1}$ विहितो; Cs भविता (as in text). S (except $T_{2}$) नोत (M नैव) बाधा ($G_{2.4.5}$ °धः). Cd cites रोधः and न चेन्न भारः. Cs cites the whole pāda as in text.

12 $^{a}$) $D_{1}$ वायु° (for वात°). — $^{b}$) S रथे (for दिव्या). $D_{7}$ युक्ताश्चित्राः पावकेनेह दत्ताः. — After $12^{ab}$, $K_{4}$ Dn $D_{2}$ (marg. *sec. m.*)$._{3-6.8.10}$ ins.:

342* भुव्यन्तरिक्षे दिवि वा नरेन्द्र
एषां गतिर्हीयते नात्र सर्वा ।

— $^{c}$) S हि यत् (for यत्तत्).

13 $^{a}$) $K_{1}$ दधिवर्णा; S दत्तवरा ($G_{4}$ °र्णा) (for

तथा राज्ञो दन्तवर्णा बृहन्तो
रथे युक्ता भान्ति तद्वीर्यतुल्याः ।
ऋश्यप्रख्या भीमसेनस्य वाहा
रणे वायोस्तुल्यवेगा बभूवुः ॥ १३
कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा
भ्रात्रा दत्ताः प्रीयता फल्गुनेन ।
भ्रातुर्वीरस्य स्वैस्तुरंगैर्विशिष्टा
मुदा युक्ताः सहदेवं वहन्ति ॥ १४
माद्रीपुत्रं नकुलं त्वाजमीढं
महेन्द्रदत्ता हरयो वाजिमुख्याः ।
समा वायोर्बलवन्तस्तरस्विनो
वहन्ति वीरं वृत्रशत्रुं यथेन्द्रम् ॥ १५
तुल्याश्चैभिर्वयसा विक्रमेण
जवेन चैवाप्रतिरूपाः सदश्वाः ।
सौभद्रादीन्द्रौपदेयान्कुमारा-
न्वहन्त्यश्वा देवदत्ता बृहन्तः ॥ १६

इति श्रीमहाभारते उद्योगपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## ५६

धृतराष्ट्र उवाच ।
कांस्तत्र संजयापश्यः प्रत्यर्थेन समागतान् ।
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् ॥ १

संजय उवाच ।
मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम् ।
चेकितानं च तत्रैव युयुधानं च सात्यकिम् ॥ २
पृथगक्षौहिणीभ्यां तौ पाण्डवानभिसंश्रितौ ।
महारथौ समाख्यातावुभौ पुरुषमानिनौ ॥ ३
अक्षौहिण्याथ पाञ्चाल्यो दशभिस्तनयैर्वृतः ।
सत्यजित्प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः ॥ ४

C. 5. 2235
B. 5. 67. 4
K. 5. 57. 4

---

दन्तवर्णा). — [b]) $D_{1.5}$ °युक्ताः (for °तुल्याः). — [c]) $K_1$ $B_{1.3.5}$ Dn $Ds_2$ $D_1$ ऋष्य°; $K_{4.5}$ $D_{3.4.5}$m.$_{6-8.10}$ ऋक्ष°; $Ds_1$ ऋक्षमुख्याः; $D_2$ ऋक्षव्रताः; $D_5$ वाक्ष्य°; Cd.s ऋश्यप्रख्याः (as in text). ❀Cn: पाठान्तरे ऋश्यो मृगभेदः।❀ — [d]) $K_{1.4}$ B D (except $D_{1.2.7.10}$; $D_9$ missing) रथे (for रणे). $T_2$ $G_2$ हयाः (for वायोः). $K_{1.5}$ $D_{1.2.7.10}$ T $G_{1.2}$ °रूपा (for °वेगा).

14 [a]) $M_1$ कल्माषपादाः (for °षाङ्गाः). $K_1$ $Dn_1$ $D_{5.6}$ $G_5$ तित्तिर-; $B_2$ $D_8$ तित्तिराः. $T_2$ -पृष्ठचित्राः; $G_2$ -पुष्पचित्राः. — [b]) Some N MSS. फाल्गुनेन. — [c]) $D_{1.3.4}$ वीरः (for वीरस्य). $G_5$ स्व- (for स्वैस्). $K_{1.4}$ तुरगैर्.

15 [a]) $B_3$ $G_3$ M माद्रीसुतं. $K_5$ B $Dn_1$ $D_{7.10}$ $G_{3.4}$ त्वाजमीढ; T $G_{1.2}$ $M_{2.5}$ चाजमीढं. — [b]) $T_1$ $G_1$ वहंति (for वाजिमुख्याः). — [d]) $D_{1.2}$ °हणं; S °वधे (for °शत्रुं).

16 [a]) $K_5$ $D_7$ चैते; $D_1$ चापि; $D_2$ सर्वे (for चैभिर्). — [b]) $K_5$ $D_{7.10}$ $G_2$ M (except $M_1$) प्रति° (for अप्रति°). $K_4$ B Dn Ds $D_{1-6.8}$ महाजवाश्चित्ररूपाः सदश्वाः ($B_2$ °श्चित्ररथेन दत्ताः).

Colophon missing in $K_{2.3}$ $D_9$. — *Sub-parvan:* $K_{1.4.5}$ $B_{2-5}$ D ($D_9$ missing) संजययान; $T_1$ $G_1$ M संजयप्रतियान. — *Adhy. name:* M अर्जुनरथादिसंकीर्तनं. — *Adhy. no.* (figures, words or both): $K_1$ 56; $D_5$ 55; $D_6$ 52; $D_7$ $G_5$ 57; T $G_{1-4}$ M 58 ($M_{2.3.5}$ 59). — *S'loka no.:* Dn 17.

### 56

☞ This adhy. is missing in $K_{2.3}$ $D_9$ (cf. v.l. 5. 41. 1; 32. 15; 50. 59.

1 [a]) $D_2$ आचक्ष्व; $G_2$ $M_2$ अद्राक्षीः (for अपश्यः). — [b]) = (var.) 5. 49. 1[d]. $K_4$ B Dn $D_{3-6.10}$ S प्रीत्यर्थेन; $D_{7.10}$m Cs प्रत्यर्थिनः; Ca.d as in text. $D_2$ प्रत्यक्षेण समागताः. — [c]) $D_{3.4}$ पांडवार्थं. $K_5$ योत्स्यंते पांडवस्यार्थे; $D_2$ योत्स्यंते पांडवार्थेषु.

3 [a]) Some S MSS. अक्षोहिणी°. Dn $D_{5.6.8}$ तु; $D_8$ ते (for तौ). — [c]) S °रथ- (for °रथौ). — [d]) S तावुभौ पुरुष($G_2$ $M_2$ भरत)र्षभौ.

4 [a]) Some S MSS. अक्षोहिण्या. $D_1$ $G_5$ च; T $G_{1-4}$ M तु (for अथ). — [c]) $K_5$ सत्यमुखप्र° (hypermetric); $T_1$ $G_{1.5}$ सत्यकप्र°; $G_2$ सात्यकिप्र°; $G_4$ सत्यव्रतमुखैर्. $G_2$ वीरो (for वीरैर्).

C. 5. 2236
B. 5. 57. 5
K. 5. 57. 5

द्रुपदो वर्धयन्मानं शिखण्डिपरिपालितः ।
उपायात्सर्वसैन्यानां प्रतिच्छाद्य तदा वपुः ॥ ५
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
सूर्यदत्तादिभिर्वीरैर्मदिराश्वपुरोगमैः ॥ ६
सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा ।
अक्षौहिण्यैव सैन्यस्य वृतः पार्थं समाश्रितः ॥ ७
जारासंधिर्मागधश्च धृष्टकेतुश्च चेदिराट् ।
पृथक्पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ॥ ८
केकया भ्रातरः पञ्च सर्वे लोहितकध्वजाः ।
अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः ॥ ९
एतानेतावतस्तत्र यानपश्यं समागतान् ।
ये पाण्डवार्थे योत्स्यन्ति धार्तराष्ट्रस्य वाहिनीम् ॥ १०
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
स तस्य सेनाप्रमुखे धृष्टद्युम्नो महामनाः ॥ ११
भीष्मः शांतनवो राजन्भागः क्लृप्तः शिखण्डिनः ।
तं विराटोऽनु संयाता सह मत्स्यैः प्रहारिभिः ॥ १२
ज्येष्ठस्य पाण्डुपुत्रस्य भागो मद्राधिपो बली ।
तौ तु तत्राब्रुवन्केचिद्विषमौ नो मताविति ॥ १३
दुर्योधनः सहसुतः सार्धं भ्रातृशतेन च ।
प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः ॥ १४
अर्जुनस्य तु भागेन कर्णो वैकर्तनो मतः ।
अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः ॥ १५
अशक्याश्चैव ये केचित्पृथिव्यां शूरमानिनः ।
सर्वांस्तानर्जुनः पार्थः कल्पयामास भागतः ॥ १६
महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
केकयानेव भागेन कृत्वा योत्स्यन्ति संयुगे ॥ १७
तेषामेव कृतो भागो मालवाः शाल्वकेकयाः ।
त्रिगर्तानां च द्वौ मुख्यौ यौ तौ संशप्तकाविति ॥ १८

---

5 $G_{4}$ (hapl.) om. 5–6. — $^{a}$) $G_{3}$ द्रुपदो वर्धयामास. — $^{b}$) $B_{1.2.4}$ $G_{3}$ °वारितः. — $^{c}$) S ($G_{4}$ om.) सर्वसैन्येन. — $^{d}$) $T_{2}$ प्रच्छाद्य च (for प्रतिच्छाद्य). $B_{3}$ तदा प्रभाः; S ($G_{4}$ om.) महीं तदा (for तदा वपुः).

7 $^{a}$) $B_{3}$ $D_{2}$ S पृथिवीपालैर्. — $^{b}$) $T_{1}$ $G_{1.5}$ ज्ञाति° (for भ्रातृ°). — $^{c}$) Some S MSS. अक्षोहिण्यैव. $K_{4}$ B (except $B_{3}$) D (except $D_{1.2.7}$; $D_{9}$ missing) सैन्यानां. — $^{d}$) S (except $G_{3}$) पार्थान् (for पार्थं). $K_{4}$ $D_{3.4}$ °स्थितः; $G_{5}$ °हितः (for °श्रितः).

8 $^{a}$) $K_{4.5}$ $Dn_{1}$ $Ds_{2}$ $D_{1.3}$ $T_{2}$ $G_{3.4}$ $M_{2}$ जरासंधिर्. — $^{c}$) $D_{7}$ धर्मराजमनुप्राप्तौ. — $^{d}$) Some S MSS. अक्षोहिणी°.

9 $^{ab}$) Some N MSS. कैकया. $K_{5}$ transp. पञ्च and सर्वे. — $G_{2}$ om. $9^{cd}$. — $^{c}$) $D_{7}$ $T_{1}$ $G_{1.5}$ अक्षो($D_{7}$ °क्षौ)हिण्या. — $^{d}$) M (except $M_{1}$) अपि ($M_{4}$ *inf. lin.* अभि- as in text). $D_{1.2}$ पांडवानां बले($D_{2}$ रणे)भवन्.

10 $^{a}$) $K_{1.5}$ $D_{1.2.10}$ एव ततस् (for एतावतस्). — $^{b}$) B (except $B_{3}$) Dn Ds $D_{3-6.8}$ T $G_{1.2.4}$ तान्; $G_{5}$ तदा (for यान्). — $^{d}$) S सैनिकान् (for वाहिनीम्).

11 $^{ab}$) $T_{1}$ $G_{1}$ transp. वेद and दैवं. $G_{3}$ वेत्ति (for वेद). $T_{2}$ $G_{2}$ देवगंधर्वम्. — $^{c}$) $K_{4}$ B D (except $D_{1.7.10}$; $D_{9}$ missing) तत्र (for तस्य). S स तस्य ($G_{4}$ सबल-; $M_{1}$ सर्वस्य) प्रमुखे नेता ($T_{2}$ तादृक्). — $^{d}$) $K_{4}$ B (except $B_{3}$) D (except $D_{1.2.7.10}$; $D_{9}$ missing) $G_{4}$ (before corr.) °रथः (for °मनाः).

12 $^{b}$) $K_{5}$ $D_{2}$ भागे (for भागः). $K_{5}$ दत्तः (for क्लृप्तः). — $^{c}$) $G_{4}$ अपि (for अनु-). — $^{d}$) $K_{4}$ B D (except $D_{7.10}$; $D_{9}$ missing) $T_{1}$ $G_{1.2}$ सार्धं (for सह). $K_{5}$ पुत्रैः; a few S MSS. मात्स्यैः (for मत्स्यैः).

13 $^{b}$) $B_{2.4}$ $G_{4}$ कृतः (for बली). — $^{d}$) $D_{2}$ $G_{3}$ तौ (for नो). $K_{1.5}$ $D_{10}$ (m as in text) विषमाविति भारत.

14 $^{a}$) $K_{1.5}$ $D_{7.10}$ (*sup. lin.* as in text) ससैन्यश्च; $D_{1.2}$ $T_{1}$ $G_{1.5}$ तव सुतः (for सहसुतः). — $^{b}$) $D_{1.2}$ $G_{4}$ सह (for सार्धं).

15 $^{a}$) $D_{7}$ $G_{4.5}$ च (for तु). — $^{b}$) $K_{1.5}$ $D_{10}$ ततः; $D_{2}$ S गतः ($G_{4}$ कृतः) (for मतः). — $^{c}$) $K_{1.5}$ $D_{1.2.7}$ भगदत्तः (for विकर्णश्च).

16 $G_{2}$ is missing from 16 up to $57^{ab}$. $G_{5}$ om. 16. — $^{d}$) $K_{1.5}$ $D_{7}$ भागशः (for °तः).

17 $G_{2}$ missing (cf. v.l. 16). — $^{bc}$) N (except B) mostly कैकयाः and कैकयान्. $D_{1}$ चैव (for एव). — $^{d}$) $D_{1}$ संगरे; S (except $G_{4}$; $G_{2}$ missing) °गताः (for °युगे).

18 $G_{2}$ missing (cf. v.l. 16). — $^{b}$) M (except $M_{1}$) मालवः. $K_{1.5}$ $D_{1}$ शाल्वकैकयाः; $K_{4}$ Dn Ds $D_{3-6.8.10}$ शाल्वकास्तथा; $T_{1}$ $G_{1.5}$ साल्वकोसलाः; $T_{2}$ $G_{3.4}$ $M_{1.2}$ साल्व°; $M_{3-5}$ सह केकयैः. — $^{c}$) $D_{2}$ त्रिगर्तकानां (for त्रिगर्तानां च). $D_{1}$ S ($G_{2}$ missing) तु (for च).

दुर्योधनसुताः सर्वे तथा दुःशासनस्य च ।
सौभद्रेण कृतो भागो राजा चैव बृहद्बलः ॥ १९
द्रौपदेया महेष्वासाः सुवर्णविकृतध्वजाः ।
धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत ॥ २०
चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति ।
भोजं तु कृतवर्माणं युयुधानो युयुत्सति ॥ २१
सहदेवस्तु माद्रेयः शूरः संक्रन्दनो युधि ।
स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् ॥ २२
उलूकं चापि कैतव्यं ये च सारस्वता गणाः ।
नकुलः कल्पयामास भागं माद्रवतीसुतः ॥ २३
ये चान्ये पार्थिवा राजन्प्रत्युद्यास्यन्ति संयुगे ।
समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् ॥ २४
एवमेषामनीकानि प्रविभक्तानि भागशः ।
यत्ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् ॥ २५

धृतराष्ट्र उवाच ।

न सन्ति सर्वे पुत्रा मे मूढा दुर्द्यूतदेविनः ।
येषां युद्धं बलवता भीमेन रणमूर्धनि ॥ २६
राजानः पार्थिवाः सर्वे प्रोक्षिताः कालधर्मणा ।
गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकम् ॥ २७
विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः ।
तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ॥ २८
सर्वे ह्यतिरथाः शूराः कीर्तिमन्तः प्रतापिनः ।
सूर्यपावकयोस्तुल्यास्तेजसा समितिंजयाः ॥ २९
येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः ।
योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ॥ ३०
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
सात्यकिर्द्रुपदश्चैव धृष्टद्युम्नस्य चात्मजः ॥ ३१
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ।

C. 5. 2263
B. 5. 57. 32
K. 5. 57. 32

---

$D_{10}$ नृपौ (for च द्वौ). $K_1$ $D_{1.2}$ transp. द्वौ and मुख्यौ. $K_5$ $T_2$ यौ; $B_{3.4}$ Dn $D_8$ वै (for द्वौ). — $^{d}$) $K_5$ यौ तौ संवर्तकाविति; $D_6$ ख्यातौ संसप्तकाविति. Some N MSS. संसप्त° (for संशप्त°).

20 $G_2$ missing (cf. v.l. 16). — $^{d}$) $D_{1.2}$ भागशः (for भारत). S ($G_2$ missing) अभि($T_1$ $G_1$ °भ्या)यांति महारथाः.

21 $G_2$ missing (cf. v.l. 16). — $^{a}$) $T_1$ $G_{1.5}$ सौमदत्तिं. — $^{c}$) $K_{1.5}$ $D_3$ भोजस्तु. — $^{d}$) $K_1$ $D_7$ युयुत्सते.

22 $G_2$ missing (cf. v.l. 16). — $^{b}$) $D_{7.10}$ युवा (for युधि). — $^{c}$) $D_1$ स्वयं संकल्प°; $D_2$ शकुनिं कल्प°. — $^{d}$) Some S MSS. स्यालं (for श्यालं).

23 $G_2$ missing (cf. v.l. 16). — $^{a}$) $K_4$ B D (except $D_{1.2.10}$; $D_9$ missing) चैव (for चापि). $D_1$ S ($G_2$ missing) कौरव्य ($D_1$ $G_4$ °व्यं; $G_3$ °व्यः); Ca कैतव्यं (as in text). — $^{b}$) $D_{1.8}$ सारस्वतां; Cs as in text.

24 $G_2$ missing (cf. v.l. 16). — $^{b}$) $K_{1.4.5}$ $B_3$ Dn $D_{1-6.10}$ $G_1$ संगरे (for °युगे). — $^{c}$) $T_1$ $G_1$ न्यायेन तेन (for समा°). — $^{d}$) $K_1$ त्वकल्प°; $K_5$ स्वकल्प°; $D_{3.4}$ $G_4$ प्रकल्प° (for अकल्प°). $D_{7.10}$ पांडवाश्चाप्य($D_{10}$ °स्तान)कल्पयन्.

25 $G_2$ missing (cf. v.l. 16). — $^{c}$) $D_8$ यद्धि (for यत्ते). — After 25, $D_8$ ins. an addl. colophon.

26 $G_2$ missing (cf. v.l. 16). — $^{ab}$) $D_2$ $T_1$ transp. सर्वे and पुत्राः. $D_1$ transp. पुत्रा and मूढा. $D_1$ °मानिनः; $D_7$ $G_3$ °वेदिनः; $G_4$ °सेविनः (for °देविनः).

27 $G_2$ missing (cf. v.l. 16). — $^{a}$) $K_5$ इमे ते (for राजानः). $T_1$ प्रेक्षिताः; $T_2$ प्रेषिताः; $G_1$ प्रोषिताः (for पार्थिवाः). — $^{b}$) $K_1$ $D_{7.8}$ प्रेक्षिताः; $K_5$ $G_{4.5}$ प्रेषिताः; $T_1$ प्रापिताः; $T_2$ पार्थिवाः; $G_{1.3}$ प्रोषिताः; Ca प्रोक्षिताः (as in text). $K_5$ $D_2$ °कर्मणा; $D_7$ $M_{3-5}$ °धर्मिणा; Ca °धर्मणा (as in text). — After 27, $G_5$ *repeats* 5. 54. 14–42$^{ab}$ (*with Dn readings*)!!

28 $G_2$ missing (cf. v.l. 16). — $^{cd}$) $K_{1.5}$ $B_{1.3}$ $D_{1.10}$ T G ($G_2$ missing) तान् (for तां), and प्रभग्नान् (for °ग्नां).

30 $G_2$ missing (cf. v.l. 16). — $^{a}$) $D_{1.8}$ तेषां (for येषां). S ($G_2$ missing) राजा (for नेता). — $^{c}$) $G_1$ $M_{3.5}$ यौधौ. $D_{1.2}$ (before corr.) योद्धा वृकोदरश्चैव. — $^{d}$) $Dn_2$ $D_{1.2}$(before corr.)$_{.8.10}$ $M_{3-5}$ सव्यसाची. $D_{1.2}$ (before corr.) च पांडवः (for -वृकोदरौ).

31 $G_2$ missing (cf. v.l. 16). $G_4$ om. 31$^{cd}$; $K_4$ om. 31$^{d}$–32$^{a}$. — $^{d}$) $D_8$ $D_7$ $T_1$ $G_{1.3.5}$ M चात्मजाः. Dn $D_{2-6.8.10}$ धृष्टकेतु($D_{5.6.10}$ °द्युम्न)श्च सानुजः ($D_{10}$ m पार्थिवः).

32 $G_2$ missing (cf. v.l. 16). $K_4$ om. 32$^{a}$ (cf. v.l. 31). — $^{b}$) M युयुधानश्च दुर्जयः. — After 32,

C. 5. 2263
B. 5. 57. 32
K. 5. 57. 32

शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ॥ ३२
काशयश्चेदयश्चैव मत्स्याः सर्वे च सृञ्जयाः ।
विराटपुत्रो बभ्रुश्च पाञ्चालाश्च प्रभद्रकाः ॥ ३३
येषामिन्द्रोऽप्यकामानां न हरेत्पृथिवीमिमाम् ।
वीराणां रणधीराणां ये भिन्द्युः पर्वतानपि ॥ ३४
तान्सर्वान्गुणसंपन्नानमनुष्यप्रतापिनः ।
क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति संजय ॥ ३५

दुर्योधन उवाच ।

उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ ।
अथ कस्मात्पाण्डवानामेकतो मन्यसे जयम् ॥ ३६
पितामहं च द्रोणं च कृपं कर्णं च दुर्जयम् ।
जयद्रथं सोमदत्तमश्वत्थामानमेव च ॥ ३७
सुचेतसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः ।
अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः ॥ ३८
सर्वा च पृथिवी सृष्टा मदर्थे तात पाण्डवान् ।
आर्यान्धृतिमतः शूरानग्निकल्पान्प्रबाधितुम् ॥ ३९
न मामकान्पाण्डवास्ते समर्थाः प्रतिवीक्षितुम् ।
पराक्रान्तो ह्यहं पाण्डून्सपुत्रान्योद्धुमाहवे ॥ ४०
मत्प्रियं पार्थिवाः सर्वे ये चिकीर्षन्ति भारत ।
ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना ॥ ४१
महता रथवंशेन शरजालैश्च मामकैः ।
अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैः सह ॥ ४२

धृतराष्ट्र उवाच ।

उन्मत्त इव मे पुत्रो विलपत्येष संजय ।

---

D8 ins.:

343* ततः श्वेतस्तु वैराटिः केतुमान्वाहिनीपतिः ।

33 G2 missing (cf. v.l. 16). — $^{a}$) G3.4 काशेयः. K1.5 D7.10 चात्र; D1.2 यत्र (for चैव). — $^{b}$) D1.2 स- (for च). — $^{c}$) D3.4 °पुत्रौ. D1 बंधु° (for बभ्रु°). T1 विराटः सहपुत्रश्च; T2 विराटः सहदेवश्च also. — $^{d}$) K4 D1, 3–5 पांचाल्याश्च.

34 G2 missing (cf. v.l. 16). — $^{a}$) T1 G4.5 एषाम्; M तेषाम् (for येषाम्). — $^{c}$) K5 धीराणां (for वी°). B3 नरवीराणां; Dn2 D2.5.6.8 रणवीराणां; Ds च शरीराणां; S (G2 missing) रणशूराणां. — $^{d}$) K5 Dn D6.7 G4.5 भिद्युः.

35 G2 missing (cf. v.l. 16). — $^{a}$) K4.5 B D (except D1.7.10; D9 missing) T G1.5 सर्वं- (for सर्वान्). — $^{b}$) Ds2 D5.6 G3.4 नमनुष्य° (for अमनुष्य°). — $^{cd}$) K1 °त्रा योद्धुमिच्छंत्यसंशयं.

36 G2 missing (cf. v.l. 16). — $^{a}$) D8 स्तः; S (G2 missing) अपि; Ca.d स्वः (as in text). — $^{b}$) D1 अथ (for तथा). G5 तत्रैवाहवगोचरौ. — $^{d}$) K1.5 S (G2 missing) पश्य° (for मन्य°).

37 G2 missing (cf. v.l. 16). D1.7 (hapl.) om. 37$^{ab}$. — $^{c}$) G1.5 सौमदत्तिम् (for सोमदत्तम्).

38 G2 missing (cf. v.l. 16). — $^{a}$) K1.4 Dn T G1.5 सुतेजसो; D1 सर्वांश्चैतान्; M1 महौजसो (for सुचेतसो).

39 G2 missing (cf. v.l. 16). G3 om. 39$^{ab}$. — $^{a}$) G5 लोका (for सृष्टा). K4 B D (except D1.2; D9 missing) सर्वे च पृथिवीपाला (D6 °ल). Ca.d cite पृथिवी सृष्टा, Cs सर्वां च पृथिवीं सृष्ट्वा. — $^{b}$) G4 M ममार्थे; Ca.d.s as in text. K1 Dn1 Ca.d पांडवाः; Cs as in text. — $^{c}$) K4 B D (except D1.10; D9 missing) आर्याः शस्त्रभृतः (B1.2.4.5 शस्त्रधराः; B3 D3.4 °विदः; D7 धृतिमतः) शूराः. — D3.4 om. 39$^{d}$–40$^{a}$. — $^{d}$) K5 प्रधावितुं; D1 प्रहारिणः; G5 प्रतापिनः; M2 प्रशासितुं (for प्रबाधितुम्). Cs cites बाधितुम्. K4 B Dn Ds D2.5–8 समर्थाः प्रति(D7 च प्र)बाधितुं.

40 G2 missing (cf. v.l. 16). D3.4 om. 40$^{a}$ (cf. v.l. 39); T2 om. 40$^{ab}$. — $^{b}$) K5 D10 त्वभि- (for प्रति-). D1 G4 -बाधितुं (for -वीक्षितुम्).

41 G2 missing (cf. v.l. 16). K4 om. 41. — $^{a}$) G3 पांडवाः; M बांधवाः (for पार्थिवाः). — $^{c}$) T2 Cd.s निवारयिष्यंति. D3.4 ततो नावार°; G5 ते तात वार°. Ca cites निवारयंति. — $^{d}$) K1.5 हरिणान्; D1.6.8 G4 एणेयान्; Cs ऐणेयानि; Ca.d as in text. T2 (*sup. lin.*) G1.5 दंतिनः; G4 दंष्ट्रिणः; Ca.d.s तन्तुना (as in text).

42 G2 missing (cf. v.l. 16). — $^{a}$) K5 °वेगेन (for °वंशेन). — $^{b}$) D1 शरजालेन. B2 सायकैः (for मामकैः). D2 मामकैर्युद्धदुर्मदैः. — $^{c}$) D1 अभिभूता. — After 42, G4 ins. an addl. colophon (*adhy. no.*: 59).

43 G2 missing (cf. v.l. 16). — $^{b}$) K1 M5 एव (for एष). — $^{c}$) D1.2 G4 शक्यो (for शक्तो). K4 B Dn Ds D3–6.8 रणे; D2 [अ]मुना (for युधा). — $^{d}$) D1.2 G4 धर्मराजो युधिष्ठिरः.

न हि शक्तो युधा जेतुं धर्मराजं युधिष्ठिरम् ॥ ४३
जानाति हि सदा भीष्मः पाण्डवानां यशस्विनाम् ।
बलवत्तां सपुत्राणां धर्मज्ञानां महात्मनाम् ॥ ४४
यतो नारोचयमहं विग्रहं तैर्महात्मभिः ।
किं तु संजय मे ब्रूहि पुनस्तेषां विचेष्टितम् ॥ ४५
कस्तांस्तरस्विनो भूयः संदीपयति पाण्डवान् ।
अर्चिष्मतो महेष्वासान्हविषा पावकानिव ॥ ४६

संजय उवाच ।

धृष्टद्युम्नः सदैवैतान्संदीपयति भारत ।
युध्यध्वमिति मा भैष्ट युद्धाद्भरतसत्तमाः ॥ ४७
ये केचित्पार्थिवास्तत्र धार्तराष्ट्रेण संवृताः ।
युद्धे समागमिष्यन्ति तुमुले कवचह्रदे ॥ ४८
तान्सर्वानाहवे क्रुद्धान्सानुबन्धान्समागतान् ।
अहमेकः समादास्ये तिमिर्मत्स्यानिवौदकान् ॥ ४९
भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम् ।
एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ॥ ५०
तथा ब्रुवाणं धर्मात्मा प्राह राजा युधिष्ठिरः ।
तव धैर्यं च वीर्यं च पाञ्चालाः पाण्डवैः सह ।
सर्वे समधिरूढाः स संग्रामान्नः समुद्धर ॥ ५१
जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम् ।
समर्थमेकं पर्याप्तं कौरवाणां युयुत्सताम् ।
भवता यद्विधातव्यं तन्नः श्रेयः परंतप ॥ ५२
संग्रामादपयातानां भग्नानां शरणैषिणाम् ।
पौरुषं दर्शयञ्शूरो यस्तिष्ठेदग्रतः पुमान् ।
क्रीणीयात्तं सहस्रेण नीतिमन्नाम तत्पदम् ॥ ५३
स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ ।

C. 5. 2237
B. 5. 57. 56
K. 5. 57. 56

---

44 $G_2$ missing (cf. v.l. 16). — $^{a}$) $G_4$ इह; M (except $M_1$) च (for हि). $K_4$ B Dn Ds $D_{3-6.8.10}$m यथा (for सदा). — $^{b}$) $K_4$ $D_{8.4}$ तर° (for यश°). — $^{c}$) $T_2$ सपुत्राणां बलवतां.

45 $G_2$ missing (cf. v. l. 16). — $^{a}$) $K_{1.5}$ $D_8$ अतो; $D_6$ यथा; $D_7$ ततो (for यतो). $K_4$ B Dn Ds $D_{8-6}$ नारोचयद्; $K_5$ $D_{10}$ $G_5$ न रोचयम्. $K_4$ B Dn Ds $D_{8-6}$ $G_{3.4}$ $M_{2.5}$ अयं; $G_5$ इमं (for अहं). — $^{b}$) $B_{2.4}$ महारथैः (for महात्मभिः). — $^{c}$) $Ds_2$ $D_{1-4.6}$ $G_4$ नु (for तु). $K_5$ $D_{1.2}$ $T_1$ $G_{1.3.5}$ प्र- (for मे). — $^{d}$) $K_5$ $D_{7.10}$ पांडवानां (for पुनस्तेषां).

47 $G_2$ missing (cf. v.l. 16). — $^{b}$) $K_1$ भारतान्; $D_8$ पांडवान् (for भारत). — $^{c}$) $K_{1.5}$ अपि (for इति).

48 $G_2$ missing (cf. v.l. 16). — $^{b}$) $K_4$ $D_{1.10}$ (*sup. lin.*) संभृताः; $D_7$ °गताः; Ca °वृताः (as in text). — $^{d}$) A few MSS. तुमले. $K_4$ B Dn $Ds_1$ $D_{3-6.10}$ शस्त्रसंकुले; $K_5$ कवचग्रहे; $D_7$ S ($G_2$ missing) स($D_7$ $G_{1.5}$ च)कचग्रहे ($T_2$ कचसंग्रहे also); Ca.d.s कवचह्रदे (as in text).

49 $G_2$ missing (cf. v.l. 16). — $^{a}$) T $G_{1.5}$ क्रुद्धः (for क्रुद्धान्). — $G_5$ om. $49^{c}$–$50^{b}$, but erroneously writes instead $52^{ab}$ and brackets it. — $^{c}$) $G_3$ समाधास्ये. — $^{d}$) $G_3$ नक्रान् (for मत्स्यान्). $K_{1.5}$ B $Dn_2$ $Ds_2$ $D_{1-5.8.10}$ $T_2$ $G_{1.2}$ इवो($T_2$ $G_1$ °वौ)दकात्.

50 $G_2$ missing (cf. v.l. 16). $G_5$ om. $50^{ab}$ (cf. v.l. 49). — $^{ab}$) $K_5$ $G_5$ transp. कर्णं and द्रौणिं; $D_2$ $T_2$ transp. कर्णं and शल्यं. — $^{c}$) $K_{1.5}$ $D_{7.10}$ $T_2$ $G_{3.4}$ M चैव; $T_1$ $G_{1.5}$ अहं (for चापि). B $D_1$ $T_2$ नियोत्स्यामि; Ca.d as in text. — $^{d}$) $T_2$ वरुणा° (for मकरा°).

51 $G_2$ missing (cf. v.l. 16). — $^{a}$) $K_4$ B Dn Ds $D_{3-6}$ ब्रुवंतं (for ब्रुवाणं). — $^{c}$) $B_3$ $D_2$ transp. धैर्यं and वीर्यं. $G_3$ संप्रेक्ष्य (for वीर्यं च). — $^{e}$) $T_1$ $G_1$ सहाधि° (for समधि°).

52 $G_2$ missing (cf. v.l. 16). — $^{a}$) M त्वा (for त्वां). — $^{c}$) $D_7$ समर्थं एको गोप्ता त्वं; Ca as in text. Cd.s cite समर्थं and पर्याप्तं. — After $52^{c}$, N ($K_{2.3}$ $D_9$ missing) ins.:

344* कौरवाणां विनिग्रहे ।
पुरस्तादुपयातानां.

[ (L. 1) $D_8$ विशां पते (for विनिग्रहे). — (L. 2) $D_8$ उपनीतानां (for उपया°). ]

— $K_5$ om. $52^{d}$–$53^{a}$. — $^{e}$) $D_1$ Ca.d.s संविधा°; $G_3$ M तद्विधा° (for यद्विधा°). — $^{f}$) $D_2$ ततः; T $G_{3.4}$ त्वत्तः; M यत्नः (for तन्नः).

53 $G_2$ missing (cf. v.l. 16). $K_5$ om. $53^{a}$ (cf. v.l. 52). — $^{a}$) $K_1$ $D_1$ T $G_{1.5}$ उप° (for अप°). — $^{b}$) $D_1$ विजयैषिणां. — $^{e}$) $B_{1.2}$ महाभाग (for सहस्रेण). — $^{f}$) $D_7$ S ($G_2$ missing) नीतिमान् (for °मन्). $K_4$ B Dn Ds $D_2$m.$_{3-6.8.10}$m इति नीतिमतां मतं.

54 $G_2$ missing (cf. v.l. 16). — $^{a}$) $D_7$ अथ; S ($G_2$ missing) त्वं च (for स त्वं). $G_{4.5}$ वीरश्च शूरश्च (by transp.). — $^{b}$) $G_4$ मानी च पुरुषर्षभ.

C. 5. 2287
B. 5. 57. 56.
K. 5. 57. 56

भयार्तानां परित्राता संयुगेषु न संशयः ॥ ५४
एवं ब्रुवति कौन्तेये धर्मात्मनि युधिष्ठिरे ।
धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसः ॥ ५५
सर्वाञ्जनपदान्सूत योधा दुर्योधनस्य ये ।
सबाह्लीकान्कुरून्ब्रूयाः प्रातिपेयाञ्शरद्वतः ॥ ५६
सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम् ।
दुःशासनं विकर्णं च तथा दुर्योधनं नृपम् ॥ ५७
भीष्मं चैव ब्रूहि गत्वा त्वमाशु
युधिष्ठिरं साधुनैवाभ्युपेत ।
मा वो वधीदर्जुनो देवगुप्तः
क्षिप्रं याचध्वं पाण्डवं लोकवीरम् ॥ ५८
नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन ।
यथाविधः सव्यसाची पाण्डवः शस्त्रवित्तमः ॥ ५९
देवैर्हि संभृतो दिव्यो रथो गाण्डीवधन्वनः ।
न स जेयो मनुष्येण मा स्म कृध्वं मनो युधि ॥ ६०

इति श्रीमहाभारते उद्योगपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

55 $G_2$ missing (cf. v.l. 16). — $^{d}$) $D_7$ कौंतेयं (for मां वचो). $K_4$ B D (except $D_{10}$; $D_9$ missing) °साध्वसं. S ($G_2$ missing) वचो (M ततो) विगतसाध्वसः.

56 $G_2$ missing (cf. v.l. 16). — $^{a}$) $D_2$ तात (for सूत). $G_3$ सर्वान्कुरून्प्रतिब्रूत. — $^{b}$) $G_5$ M (except $M_1$) यौधा. — $^{c}$) Some MSS. °बाह्लिकान्. — $^{d}$) $K_4$ Dn $D_{1-4}$ $T_1$ $G_3$ Ca.d प्रातिपेयाञ्; $G_4$ $M_5$ °वीर्यांञ्. $B_3$ सहस्रशः; $D_{3.4}$ समुद्धतान्; Cs शरद्वतं.

57 $G_2$ missing (cf. v.l. 16). — $^{c}$) $D_7$ च (for वि-). — $^{d}$) $G_3$ द्रौणिं (for तथा). $K_1$ $Dn_1$ S ($G_2$ missing) कृपं (for नृपम्).

58 $G_2$ resumes! — $^{a}$) M स त्वम् (for त्वम्). $K_4$ B Dn Ds $D_{3-6.8.10}$ भीष्मं च ब्रूहि गत्वा त्वमाशु गच्छ च ($K_4$ $B_2$ Ds $D_{10}$ गच्छत) माचिरं; $D_2$m.$_7$ भीष्मं चैव ब्रूहि गत्वा आशु गच्छ च माचिरं (see below). — $^{b}$) $K_4$ B D (except $D_{1.2.8}$; $D_9$ missing) $G_4$ युधिष्ठिरः. $K_{4.5}$ $Dn_1$ $D_{3-6.10}$ Cs अभ्युपैति; B $Dn_2$ $Ds_1$ °पेयो; $Ds_2$ $D_7$ °पेतः; $D_1$ °पैहि; $D_8$ °पैत; $T_2$ $G_1$ °पेत्य; $G_2$ M °पेतं (for अभ्युपेत). — $^{c}$) $G_5$ M (except $M_1$) मा मा (for मा वो). — After 58$^{c}$, $K_4$ B (except $B_4$) D (except $D_1$; $Dn_2$ marg. *sec. m.*; $D_9$ missing) ins.:

345* राज्यं दद्ध्वं धर्मराजस्य तूर्णं.

[ $K_4$ $Dn_1$ $D_2$m.$_{5.6}$ देव° (for धर्म°). $D_2$m.$_{7.10}$ क्षिप्रं (for तूर्णं). ]

— $^{d}$) $K_4$ B (except $B_4$) D (except $D_1$; $D_9$ missing) याचध्वं वै (for क्षिप्रं याचध्वं). Cs cites क्षिप्रं.

59 $^{a}$) S transp. हि and अस्ति. $K_{1.5}$ $D_{7.8.10}$ T G योद्धा; $D_1$ वीरो; $M_{3.4}$ यौधो (for योधो). — $^{b}$) $D_{1.2}$ S अपि (for इह). — $^{c}$) $T_2$ $G_{3.4}$ तथा° (for यथा°). — $^{d}$) $K_{1.5}$ शत्रुजित्तमः; $K_4$ B Dn Ds $D_{3-6.8}$ $T_1$ $G_{1.3.4}$ सत्यविक्रमः; $D_7$ सत्यसंगरः; $D_{10}$ शत्रुसूदनः (for शस्त्र°).

60 $^{a}$) $Ds_2$ $T_2$ $G_2$ $M_4$ दैवैर्हि. $K_{1.5}$ $D_{7.8.10}$ $G_3$ संवृतो. $D_8$ युद्धे (for दिव्यो). — $^{b}$) $D_{10}$ $G_{1.3}$ $M_{2.3.5}$ °धन्विनः. — $^{c}$) $G_4$ मनुष्याणां. — $^{d}$) $B_{2.5}$ $D_{1-6.10}$ $G_4$ $M_1$ मा स्म कृद्ध्वं; $G_3$ मा कुरुध्वं. $K_{1.5}$ $D_{7.8}$ $G_{1.5}$ मा स्म युद्धे मनः कृथाः; $M_{2-5}$ मा स्म क्रोधान्म($M_{2.5}$ °त्म)नो युधि.

Colophon missing in $K_{2.3}$ $D_9$. — *Sub-parvan:* $K_{1.4.5}$ B D संजययान ($D_2$ यानसंधि; $D_9$ missing); $T_1$ $G_1$ M संजयप्रतियान. — *Adhy. name:* $M_1$ धृष्टद्युम्नवाक्यं; $M_{2-5}$ धृष्टद्युम्नवाक्यकथनं. — *Adhy. no.* (figures, words or both): $K_1$ 57; $D_5$ 56; $D_6$ 53; $D_7$ $G_5$ 58; T $G_{2.3}$ $M_{1.4}$ 59; $G_{1.4}$ $M_{2.3.5}$ 60. — *S'loka no.:* $K_5$ Dn 61; $D_8$ 64; $G_5$ 86.

## 57

☞ This adhy. is missing in $K_{2.3}$ $D_9$ (cf. v.l. 5. 41. 1; 32. 15; 50. 59).

1 $^{a}$) $K_1$ $D_{7.10}$ कृतश्रमो; $K_5$ कृतवर्मा; S क्षत्रतेजो (for क्षत्रतेजा). — $^{b}$) $K_{1.5}$ $D_{7.10}$ एव (for अपि). — After 1$^{ab}$, $B_2$ has a substituted folio, numbered 93, beginning with the *colophon* of this adhy. (together with some words of the preceding stanza), the intervening portion being lost on the missing original.

2 $B_2$ missing (cf. v.l. 1). — $^{d}$) $D_8$ $T_1$ $G_{1.5}$ सर्वावस्थासु (for °वस्थम्).

## ५७

धृतराष्ट्र उवाच ।

क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥ १
दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम ।
न हि युद्धं प्रशंसन्ति सर्वावस्थमरिंदम ॥ २
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिंदम ॥ ३
एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम् ।
यत्त्वं प्रशान्तिमिच्छेथाः पाण्डुपुत्रैर्महात्मभिः ॥ ४
अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
जात एव तव स्रावस्त्वं तु मोहान्न बुध्यसे ॥ ५
न ह्यहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न संजयः ॥ ६
न सोमदत्तो नो शल्यो न कृपो युद्धमिच्छति ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ॥ ७
येषु संप्रतितिष्ठेयुः कुरवः पीडिताः परैः ।
ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥ ८
न त्वं करोषि कामेन कर्णः कारयिता तव ।
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ॥ ९

दुर्योधन उवाच ।

नाहं भवति न द्रोणे नाश्वत्थाम्नि न संजये ।
न विकर्णे न काम्बोजे न कृपे न च बाह्लिके ॥ १०
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः ।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वये ॥ ११
अहं च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ ॥ १२
रथो वेदी स्रुवः खड्गो गदा स्रुक्कवचं सदः ।
चातुर्होत्रं च धुर्या मे शरा दर्भा हविर्यशः ॥ १३

C. 5. 2307
B. 5. 58. 13
K. 5. 58. 13

---

3 $3^{ab}$ = (var.) 5. 127. $43^{ab}$. — $B_2$ missing (cf. v.l. 1). $G_3$ (hapl.) om. 3. — $^{b}$) $K_{1.5}$ $D_{1.2}$ जीवनं; $G_5$ पुत्रक (for जीवितुम्).

4 $B_2$ missing (cf. v.l. 1). — $^{c}$) $K_1$ $Ds_2$ $D_{3.4.8}$ यस्त्वं; $D_{1.2}$ स त्वं; $G_5$ यं त्वं (for यत्त्वं). $K_4$ B ($B_2$ missing) Dn Ds $D_{3-6.8}$ मन्येथाः; $D_{1.2.10}$ गच्छेथाः (for इच्छेथाः). — $^{d}$) $D_{1.2}$ पांडोः पुत्रैर्. Ds $G_4$ महारथैः.

5 $B_2$ missing (cf. v.l. 1). — $^{a}$) S (except $T_2$ $G_{1.2}$) त्वम् (for सम्). Cs समपेक्षस्व. Ca.d cite अवेक्षस्व. — $^{c}$) $K_4$ $D_{3-6.8}$ m Cnp शम (for जात). B $Dn_1$ $D_2$ Cn एष; $D_8$ m एषां (for एव). $K_4$ $D_{3-6.8}$ m Cnp महच्छ्रेयः; $K_5$ $B_3$ $Dn_1$ Ds $D_{7.10}$ Cs तवाश्रा($Dn_1$ Ds $D_7$ Cs °स्रा)वः; $B_{1.4.5}$ $D_{2.8}$ Cn तवाभावः; $D_1$ तव श्रेयः; Cnp (also) तराभ्यावः (for तव स्रावः). Ca.d.np आस्रावः. ❀Cn: शम एव महच्छ्रेय इत्याधुनिकः पाठः।❀

6 $B_2$ missing (cf. v.l. 1). — $^{a}$) $K_4$ $B_4$ $D_2$ $M_{2.5}$ तु (for हि). Ds $D_{1.5.8}$ योद्धुम् (for युद्धम्). — $^{b}$) $K_1$ $D_{7.10}$ S नैव चेच्छति ($T_1$ $G_5$ °च्छंति). $T_1$ $G_5$ बाह्लिकाः. — $^{d}$) $T_1$ $G_{1.5}$ महायशाः (for न संजयः).

7 $B_2$ missing (cf. v.l. 1). — $^{a}$) $K_1$ B ($B_2$ missing) Dn Ds $D_{1.2}$ न शलो ($Dn_1$ $Ds_2$ $D_1$ °ल्यो); $D_7$ $T_2$ $G_{3.4}$ न कृपो; $D_{10}$ शल्यो न (for नो शल्यो). — $^{b}$) $D_7$ $T_2$ $G_{3.4}$ शल्यो (for कृपो). Ds $D_{1.5.6.8}$ T $G_{3.4}$ योद्धुम् (for युद्धम्). — After 7, S *repeats* $4^{cd}$ (with v.l.).

8 $B_2$ missing (cf. v.l. 1). — $^{a}$) $T_1$ $M_4$ एषु; $T_2$ $G_5$ एषां; $G_{1-4}$ येषां (for येषु). $G_4$ समभि° (for संप्रति°). $K_5$ ये युद्धे संप्रतिष्ठेयुः. — $^{b}$) $D_{1.2}$ पी($D_2$ पं)डिताः कुरवः परैः. — $^{c}$) $D_1$ $G_4$ °जानंति (for °नन्दन्ति). — $^{d}$) $K_4$ न च (for तात). $K_4$ $D_8$ m रुच्यते (for रोचताम्).

9 $B_2$ missing (cf. v.l. 1). — $^{b}$) T G कारयितुं (for °ता). $K_1$ पुनः; $K_5$ S प्रभुः (for तव).

10 $B_2$ missing (cf. v.l. 1). — $^{b}$) $T_1$ $G_{1.5}$ न कृपे न च बाह्लिके (= $10^{d}$). — $^{c}$) $K_4$ B ($B_2$ missing) Dn Ds $D_{3-6.8}$ भीष्मे न च (for विकर्णे न). — $^{d}$) $G_5$ संजये (for बाह्लिके). $T_1$ $G_1$ नाश्वत्थाम्नि च संजये [ = (var.) $10^{b}$ ].

11 $B_2$ missing (cf. v.l. 1). — $^{d}$) $G_2$ °श्वसे; M °रभे (for °ह्वये).

12 $B_2$ missing (cf. v.l. 1). — $^{d}$) T G (except $G_2$) दीक्षितो. $K_4$ B ($B_2$ missing) $Dn_1$ Ds $D_{3-8}$ पुरुषर्षभौ (for भरतर्षभ).

13 $B_2$ missing (cf. v.l. 1). — $^{a}$) $K_3$ $D_8$ S (except $M_2$) वेदिः; $D_7$ वैदिः. $K_5$ $B_4$ $D_{7.10}$ श्रुवः.

C. 5. 2308
B. 5. 58. 14
K. 5. 58. 14

आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य स्वयमेष्यावो हतामित्रौ श्रिया वृतौ ॥ १४
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः ॥ १५
अहं हि पाण्डवान्हत्वा प्रशास्ता पृथिवीमिमाम् ।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम् ॥ १६
त्यक्तं मे जीवितं राजन्धनं राज्यं च पार्थिव ।
न जातु पाण्डवैः सार्धं वसेयमहमच्युत ॥ १७
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ १८

धृतराष्ट्र उवाच ।

सर्वान्वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ १९
रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान्वरान्हनिष्यन्ति समेता युधि पाण्डवाः ॥ २०
प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमन्तिनी त्रस्ता प्रमृष्टा दीर्घबाहुना ॥ २१
संपूर्णं पूरयन्भूयो बलं पार्थस्य माधवः ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ २२
सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् ॥ २३
यदा द्रक्ष्यसि भीमेन कुञ्जरान्विनिपातितान् ।
विशीर्णदन्तान्गिर्याभान्भिन्नकुम्भान्सशोणितान् ।२४
तानभिप्रेक्ष्य संग्रामे विशीर्णानिव पर्वतान् ।

— [b]) S कवचो(G3 वर्म वा-; G4 चर्म चा)जिनं (for कवचं सदः). — [c]) K1 D1.7.8.10 (m as in text) धनुर्ज्या; K5 च युग्या; S सदश्वा (for च धुर्या). Cs cites धुर्याः.

14 B2 missing (cf. v.l. 1). — [a]) G4 °यूपेन; Cs °यज्ञेन (as in text). — [c]) K4.5 B (B2 missing) Dn Ds D3-6.8 च समेष्यावो (D3.4 °मो); G4 श्रियमेष्यावो (for स्वयमेष्यावो).

15 B2 missing (cf. v.l. 1). — [c]) G3 हि जेष्यामः (for हनिष्यामः). — [d]) K5 त्रय एव च; G2 समरे प्रभो (for समरे त्रयः).

16 B2 missing (cf. v.l. 1). K5 D1 om. (hapl.) 16[cd]; G5 (hapl.) om. 16[c]-17[d]. — [c]) D2 °सुता (for °पुत्रा). K1 D10 मां हत्वा पांडुपुत्रा वा (D10 °त्राश्च).

17 B2 missing (cf. v.l. 1). G5 om. 17 (cf. v.l. 16). — [a]) B4 Dn Ds D5.6.8 T2 G2 राज्यं (for राजन्). — [b]) B4 D5.6.8 सर्वं; T2 इष्टं (for राज्यं). T1 G1 भारत; G4 बांधवान् (for पार्थिव). — [d]) S (G5 om.) भुंजेयं (G4 भुंजीत) पृथिवीमिमां.

18 =(var.) 5. 125. 26. B2 missing (cf. v.l. 1). D1 om. 18. — [b]) K1 D7.10 भिंद्येद् (for विध्येद्). S भारत (for मारिष). — [cd]) K5 °त्याज्या भूमिर् (for °त्याज्यं भूमेर्).

19 B2 missing (cf. v.l. 1). K4 reads from 5. 57. 19 up to 5. 58. 19 after 5. 59. 19. — [a]) K4 सर्वथा; D2 सर्वान्वै. — [b]) K1 इत्युक्तो (for त्यक्तो). G5 मम (for मया). — [c]) D3.4 T1 G1.5 °यास्यंति (for °यास्यध्वं). — [d]) K4.5 D1 यातं (for यान्तं). Dn1 D3 वैवस्वतं क्षयं.

20 B2 missing (cf. v.l. 1). — [a]) = (var.) 5. 50. 9[a]. K1.4.5 Dn Ds D5.6.10 कुरूणां; S (except G1.2) मृगाणां; Cnp अजानां; Cn रुरूणाम् (as in text). ❀Cn: रुरूणामिवेत्यत्र कुरूणां लाटभाषया । अजानामिति पाठो युक्तः।❀ K1.5 अपि; Ds D8 (by corr.) एव (for इव). — [b]) Ds2 D1 व्याघ्रः and वरः. — [c]) T1 M4 वरान्परान्; M1 परान्वरान्. D2 कौरवान्निहनिष्यंति. — [d]) B1 S समेतान्.

21 B2 missing (cf. v.l. 1). — [a]) S प्रतीपमेति मे सेना (G4 by transp. सेना मे); Cs as in text. Ca.d cite प्रतीपं and इव. — [b]) K5 T G (except G2) भारत; Ca.d भारती (as in text). — [c]) K4 D5.6 स्रस्ता; Cs व्यस्ता (as in text). B (B2 missing) Dn Ds D3-6.8 M2.5 ग्रस्ता; T1 G2.4 मध्ये (for त्रस्ता). — [d]) B3 Ds °सृष्टा; D2 °भक्ता (for °मृष्टा).

22 B2 missing (cf. v.l. 1). — [a]) G2.3 पूरयेद्. — [b]) B4 D2-6 Cn धनं (for बलं).

23 B2 missing (cf. v.l. 1). — [a]) T2 प्रयुक्तानां; Cs प्रयुद्धानां (as in text). D7.10 सेनामुखेषु योधानां. — [b]) T2 भीमो हंता (for भीमसेनो). — [c]) K1.4 D1.5.6.8 ते (for तं). — [d]) S °भयाः (for °भयम्). — After 23, S reads 27.

24 B2 missing (cf. v.l. 1). G4 om. 24-25. Before 24, Ds ins. धृतराष्ट्र उ°. — [c]) S (G4 om.) °गात्रान् (T2 °कुंभान्) (for °दन्तान्). D2 शैलाभान्; T G3.5 M1 द्रवतो; G1.2 M2-6 धावंतो (for गिर्याभान्). — [d]) T1 G1.5 महारणे (for सशोणितान्).

भीतो भीमस्य संस्पर्शात्स्मर्तासि वचनस्य मे ॥ २५
निर्दग्धं भीमसेनेन सैन्यं हतरथद्विपम् ।
गतिमग्नेरिव प्रेक्ष्य स्मर्तासि वचनस्य मे ॥ २६
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः ।
गदया भीमसेनेन हताः शममुपैष्यथ ॥२७
महावनमिव छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां संग्रामे तदा स्मर्तासि मे वचः ॥ २८
वैशंपायन उवाच ।
एतावदुक्त्वा राजा तु स सर्वान्पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ संजयम् ॥ २९

इति श्रीमहाभारते उद्योगपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## ५८

धृतराष्ट्र उवाच ।
यदब्रूतां महात्मानौ वासुदेवधनंजयौ ।
तन्मे ब्रूहि महाप्राज्ञ शुश्रूषे वचनं तव ॥ १

संजय उवाच ।
शृणु राजन्यथा दृष्टौ मया कृष्णधनंजयौ ।
ऊचतुश्चापि यद्वीरौ तत्ते वक्ष्यामि भारत ॥ २

C. 5. 2324
B. 5. 59. 2

---

25 B2 missing (cf. v.l. 1). G4 om. 25 (cf. v.l. 24). — a) T1 G5 तदाभिप्रेक्ष्य. — b) K1.5 D10 °कीर्णां° (for °शीर्णां°). B3 D1 transp. इव and पर्वतान्. — c) K5 D1.2.7 भीतान्; D5.6 भीमान् (for भीतो). — d) =26d. B3 T G1 वचनं मम; D2 वचनानि मे (for वचनस्य मे).

26 B2 missing (cf. v.l. 1). K5 Ds1 T2 om. (hapl.) 26. — a) G4 गदया (for निर्दग्धं). — b) B (B2 missing) Dn D6 सैन्यं रथहयद्विपं. — c) T1 G1-4 M मार्गम् (for गतिम्). G5 तदाभिप्रेक्ष्य संग्रामे. — d) = 25d. B1.3.5 D3 T1 G1-4 M स्मर्तासि वचनं मम.

27 B2 missing (cf. v.l. 1). S reads 27 after 23. — a) D7 आगंता (for आगामि). S मह(T1 G4.5 M2 °हा)न्नो भयमत्रागान् (T2 G4 भयं नो महदत्रागान्). — b) S विग्रहं (for पाण्डवैः). — G4 om. 27cd. — c) T1 G1.5 °सेनस्य (for °सेनेन). — d) K1 D1.7.8 उपेष्यथ; D6 उपैष्यत. K5 हताशाः समुपेष्यथ; S हतः शांतिमुपेष्यसि (G2 °ति).

28 B2 missing (cf. v.l. 1). — a) K1 Ds1 D6.8 छन्नं (for छिन्नं). — c) K4 B (B2 missing) Dn Ds1 D3-6.8.10 भीमेन (for संग्रामे).

29 B2 resumes from 29d (cf. v.l. 1). — a) D2 राजन्स; T1 G1 राजा तं; T2 राजा स; G5 राजानं (for राजा तु). — b) K4.5 B (B2 missing) D G2 सर्वांस्तान् (K5 D7.10 सर्वान्स); T1 G1.5 स तु वै (for स सर्वान्).

Colophon missing in K2.3 D9. — *Sub-parvan:* K1.4.5 B Dn Ds D1.5-8.10 संजययान; D2 यानसंधि; T1 G1 M1-3.5 संजयप्रतियान. — *Adhy. name:* M2.3.5 शमप्रशंसनं; M4 संजयप्रतिवचने शमप्रशंसनं. — *Adhy. no.* (figures, words or both): K1 58; D5 57; D8 54; D7 G5 59; T G2.3 M1.4 60; G1.4 M2.3.5 61. — *S'loka no.:* Dn D3 29; D7 G5 28.

☞ After adhy. 57, T G1.5 read adhy. 64!

### 58

☞ This adhy. is missing in K2.3 D9 (cf. v.l. 5 41. 1; 32. 15; 50. 59). For sequence of K4 cf. v.l. 5. 57. 19. S reads this adhy. (58) after 5. 47. 1 (M3.5 read it after 5. 47. 19).

1 c) Ds °प्रज्ञ; D1.7 °भाग (for °प्राज्ञ). — For 1, S *repeats* 5. 47. 1 (v.l. जनार्दनः for धनंजयः).

2 S om. 2. — b) D1 वासुदेवधनंजयौ. — After 2ab, D10 (marg. *sec. m.*) ins. 346* (for the first time), *repeating* it after 5ab.

3 Before 3, S ins. संजयः. — a) K4.5 Ds D1-4.7.10 °प्रेक्ष्य; Ca. d °प्रेक्षन् (as in text). S आगुल्फेभ्योभि- (G3 पि; G5 हि)संवीतः. — b) Dn Ds प्रयातः; S सवेतः; Ca प्रयतः (as in text). — d) K5 D1.10 S (except G2-4) आख्यातो; B3 न्याख्यातुं. S (except M2) नर-सिंहयोः; Ca as in text.

C. 5. 2325
B. 5. 59. 3
K. 5. 47. 19

पादाङ्गुलीरभिप्रेक्षन्प्रयतोऽहं कृताञ्जलिः ।
शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः ॥ ३
नैवाभिमन्युर्न यमौ तं देशमभियान्ति वै ।
यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ॥ ४
उभौ मध्वासवक्षीवावुभौ चन्दनरूषितौ ।
स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ ॥ ५
नैकरत्नविचित्रं तु काञ्चनं महदासनम् ।
विविधास्तरणास्तीर्णं यत्रासातामरिंदमौ ॥ ६
अर्जुनोत्सङ्गगौ पादौ केशवस्योपलक्षये ।
अर्जुनस्य च कृष्णायां सत्यायां च महात्मनः ॥ ७
काञ्चनं पादपीठं तु पार्थो मे प्रादिशत्तदा ।
तदहं पाणिना स्पृष्ट्वा ततो भूमावुपाविशम् ॥ ८
ऊर्ध्वरेखतलौ पादौ पार्थस्य शुभलक्षणौ ।
पादपीठादपहृतौ तत्रापश्यमहं शुभौ ॥ ९
श्यामौ बृहन्तौ तरुणौ शालस्कन्धाविवोद्गतौ ।
एकासनगतौ दृष्ट्वा भयं मां महदाविशत् ॥ १०
इन्द्रविष्णुसमावेतौ मन्दात्मा नावबुध्यते ।
संश्रयाद्द्रोणभीष्माभ्यां कर्णस्य च विकत्थनात् ॥ ११
निदेशस्थाविमौ यस्य मानसस्तस्य सेत्स्यते ।
संकल्पो धर्मराजस्य निश्चयो मे तदाभवत् ॥ १२
सत्कृतश्चान्नपानाभ्यामाच्छन्नो लब्धसत्क्रियः ।
अञ्जलिं मूर्ध्नि संधाय तौ संदेशमचोदयम् ॥ १३

---

4 [a]) $D_7$ S (except $M_2$) च (for एव). — [b]) $D_{7.10}$ उपयांति वै; S अभिजग्मतुः. — [c]) $K_1$ तत्र; $G_2$ यथा (for यत्र). $K_5$ $M_4$ यत्र कृष्णा च कृष्णश्च ($M_4$ °ष्णौ च). — [d]) $K_5$ मनस्विनी; B (except $B_4$) Ds $D_{3-6}$ च भाविनी.

5 [b]) S वर- (for उभौ). $K_{1.5}$ °चर्चितौ; $D_{2.7.8}$ °भूषितौ (for °रूषितौ). — After $5^{ab}$, $K_{1.5}$ $Ds_1$ $D_{6.8.10}$ ins.:

346* एकपर्यङ्कशयनौ दृष्टौ मे केशवार्जुनौ ।

[ For $D_{10}$ cf. v.l. 2. $K_1$ °शयितौ (for °शयनौ). $D_{10}$ (first time) ऐकमत्यं समागतौ (for the posterior half). ]

— $G_3$ (hapl.) om. $5^{cd}$. — [c]) T G ($G_3$ om.) वरवस्त्रांगौ; M सुकुमारांगौ. — [d]) S ($G_3$ om.) त्वरा°.

6 [a]) $K_1$ S (except $T_2$) च (for तु). — [b]) S च वरासनं (for महदा°). — [c]) $K_1$ विचित्रा°; $B_4$ Dn $D_{5.6.8}$ °णाकीर्णं; S नाना($G_2$ दारु)स्तरणसंस्तीर्णं. — [d]) $K_{1.5}$ $D_{1.6}$ आसेताम्; $B_2$ आस्यताम्; $D_8$ आसीताम्; Cn आसाताम् (as in text). S यत्रास्तां तौ ($G_{1.4.5}$ °साते) नरर्षभौ. — After 6, S (except $M_{4.5}$) ins.:

347* सत्याङ्कमुपधानं तु कृत्वा शेते जनार्दनः ।

7 [a]) S अर्जुनांकगतौ पादौ. — $D_6$ om. $7^{cd}$. — [c]) $K_{1.5}$ $Ds_2$ $D_{7.10}$ तु (for च). S (except $T_2$) कृष्णायाः. — [d]) S शुभायाश्चांकगावुभौ.

8 $G_4$ (hapl.) om. 8–9. — [a]) $K_1$ $D_7$ च (for तु). — [b]) $G_{1.5}$ वै (for मे). $K_1$ $B_2$ $Dn_2$ Ds $D_{3-6.8.10}$ यदा; S ($G_4$ om.) मुदा ($T_2$ $G_3$ दृशा) (for तदा). — [cd]) $K_{1.5}$ तम् (for तद्). S ($G_4$ om.) दासीभ्यामाहृतं मह्यं स्पृष्ट्वा भूमा°.

9 $G_4$ om. 9 (cf. v.l. 8). — [a]) $K_4$ $D_{2-6}$ °रेखातलौ. $K_5$ B $D_{1.7.9.10}$ °लेखतलौ; $T_1$ $G_{1.3.5}$ °रेखांकितौ; $T_2$ °रेखान्वितौ; $G_2$ °लेखावुभौ; M °रेखाततौ. — [c]) Ds $D_{5.6}$ अपकृतौ; $D_{1.2}$ अपसृतौ. — $K_5$ (hapl.) om. from तत्र (in $9^d$) up to गतौ (in $10^c$). — [d]) S ($G_4$ om.) धारयेतां वरस्त्रियौ. — After 9, S (except $G_4$) ins.:

348* न नूनं कल्मषं किंचिन्मम कर्मसु विद्यते ।
स्त्रीरत्नाभ्यां समेतौ यन्मिथो मामभ्यभाषताम् ।
विस्मयो मे महानासीदास्त्रं मे बहु संगतम् ।
हृष्टानि चैव रोमाणि दृष्ट्वा तौ सहितावुभौ ।
[ (L. 1) $G_3$ $M_{3-5}$ जन्मसु (for कर्मसु). ]

10 $K_5$ om. up to °गतौ (in $10^c$) (cf. v.l. 9). — [b]) $K_4$ उद्धतौ; $D_7$ उच्छ्रितौ (for उद्गतौ). S नागाविव समुच्छ्रितौ. — [c]) S एकशय्या° (for एकासन°). — [d]) $B_3$ $T_1$ G मे (for मां). — After 10, S ins.:

349* ततोऽभ्यचिन्तयं तत्र दृष्ट्वा तौ पुरुषर्षभौ ।
[ $G_{3-5}$ $M_2$ हि (for अभि-). ]

11 $T_2$ om. 11. S (except $T_2$) read 11 after 352*. — [ab]) S ($T_2$ om.) सोयमिंद्रसमौ वीरौ ($G_1$ शूरौ) तौ मंदो ($T_1$ $G_{1.4.5}$ कृष्णौ; $G_3$ अंधो) नावबु°. — [c]) $D_2$ संश्रयाद्भीष्मद्रोणाभ्यां; S ($T_2$ om.) भीष्मद्रोणाश्रयाच्चैव.

12 S transp. $12^{ab}$ and $12^{cd}$. — [a]) S निदेशगौ; Ca. d °स्थौ (as in text). — [b]) $D_2$ योत्स्यतः; $D_8$ तप्स्यते (for सेत्स्यते). S नरनारायणावुभौ ($G_{3.5}$ °वृषी). — [d]) S नानवाप्योस्ति कश्चन.

13 [a]) $B_{2.4}$ हि (for च). — [b]) $K_4$ $B_4$ Dn $D_{2-6.8}$ आसीनः; Ca. d आच्छन्नः (as in text). — [c]) $K_5$ कृतांज-

धनुर्बाणोचितेनैकपाणिना शुभलक्षणम् ।
पादमानमयन्पार्थः केशवं समचोदयत् ॥ १४
इन्द्रकेतुरिवोत्थाय सर्वाभरणभूषितः ।
इन्द्रवीर्योपमः कृष्णः संविष्टो माभ्यभाषत ॥ १५
वाचं स वदतां श्रेष्ठो ह्लादिनीं वचनक्षमाम् ।
त्रासनीं धार्तराष्ट्राणां मृदुपूर्वां सुदारुणाम् ॥ १६
वाचं तां वचनार्हस्य शिक्षाक्षरसमन्विताम् ।
अश्रौषमहमिष्टार्थां पश्चाद्धृदयशोषिणीम् ॥ १७

वासुदेव उवाच ।

संजयेदं वचो ब्रूया धृतराष्ट्रं मनीषिणम् ।
शृण्वतः कुरुमुख्यस्य द्रोणस्यापि च शृण्वतः ॥ १८
यजध्वं विपुलैर्यज्ञैर्विप्रेभ्यो दत्त दक्षिणाः ।
पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतम् ॥ १९
अर्थांस्त्यजत पात्रेभ्यः सुतान्प्राप्नुत कामजान् ।
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ २०
ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥ २१
तेजोमयं दुराधर्षं गाण्डीवं यस्य कार्मुकम् ।
मद्द्वितीयेन तेनेह वैरं वः सव्यसाचिना ॥ २२
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमिच्छति ।

C. 5. 2351
B. 5. 59. 24

लिर्हि संधाय. — $^{d}$) S संदेशं चाभ्यचोदयं.

14 $^{ab}$) K4 B D (except D1.7; D9 missing) धनुर्गुणकिणांकेन (for the prior half). S धनुर्ध(M °र्वे)रोचितेनाथ पाणिनैकं स(G1 सु)लक्षणं. — $^{cd}$) K2 D8 °नोद° (for °चोद°). S पादमादाय यत्पार्थः केशवस्य यशस्विनः (T1 G1.4.5 महात्मनः; M5 यशस्विनं).

15 $^{a}$) K4 °ध्वजः (for °केतुः). K1.5 D1.2.10 (m as in text) उत्तिष्ठन् (for उत्थाय). — $^{b}$) D2 °भूषणः; S दिव्या°. — $^{d}$) K1.5 D1.6.8.10 (m as in text) संदे(K5 °दि)ष्टुं; D2 °देशं (for °विष्टो). K4 D3-6 M मामभाषत; K3 D7 अभ्यभा°; D2 चाभ्यभा°. Ca cites मा.

16 $^{a}$) S स वाचं (by transp.). K1.4.5 Dn2 D5.6.8 सं- (for स). — $^{b}$) K1 D3 D8 C3 ह्रादिनीं; D2 उवाच; S आददे; Ca.d ह्लादिनीं (as in text). — $^{c}$) B4 D1-4.7 त्रासिनीं; D8 शंसनीं; S दीपनीं. D1 सर्वभूतानां. — After 16, S ins.:

350* बहिश्चरस्य प्राणस्य प्रियस्य प्रियकारिणः ।
मतिमान्मतिमास्थाय केशवः संदधे वचः ।

17 $^{ab}$) S वचनं वचनज्ञस्य °समन्वितं. — $^{c}$) S मनःप्रसादमश्रौषं. Ca.d cite इष्टार्थां. — $^{d}$) K5 B1-3.5 D10 °शोषणीं; B4 Dn2 °हारिणीं; Dn1 Ca.d °दारणीं; D1 °धारिणीं; D2 °वारणीं; S °तापनं.

18 T2 G2.4 M om. the ref. T1 G1.3.5 श्रीभगवान् (G1 cont. उवाच!). — $^{a}$) G5 एनं (for इदं). K1.5 D1.7.10 Ca.d ब्रूहि; D8 ब्रूयां; C3 ब्रूयाः (as in text). — $^{b}$) S प्राप्य क्षत्रियसंसदं. Ca.s cite धृतराष्ट्रं. — $^{c}$) S °वृद्धस्य (for °मुख्यस्य). K4 B D (except D1.2.10; D9 missing) कुरुमुख्यस्य भीष्मस्य. — $^{d}$) S आचार्यस्य च धीमतः. — After 18, N (K2.3 D9 missing; K4 transp.) ins.:

351* आवयोर्वचनात्सूत ज्येष्ठानप्यभिवादयन् ।
यवीयसश्च कुशलं पश्चात्पृष्ट्वैवमुत्तरम् ।

[ Noticed in Ca.d.s. — (L. 1) K1.5 D7 पूर्वमुक्त्वाभिवादनं (for the posterior half). — (L. 2) K1.5 D1.2.7.10 Cd कौशल्यं (for कुशलं). K1.5 D1.2.7 पश्चादिदमथोत्तरं (for the posterior half). Ca.d.s seem to cite सुखं. ]

19 S transp. 19 and 20. — $^{a}$) K4.5 B D (D9 missing) T2 G2 विविधैः (for विपुलैः). — $^{b}$) S दक्षिणाश्च प्रयच्छत. Ca cites दत्त (as in text). — $^{d}$) S आगतं वो महद्भयं.

20 S transp. 19 and 20. — $^{a}$) K4 वार्थिषु; S पात्रे(T2 °र्थे)षु (for पात्रेभ्यः). — $^{b}$) S सुखमाप्नुत कामजं. Ca.s cite कामजान्.

21 T G1.2.5 transp. $21^{ab}$ and $21^{cd}$. — $^{a}$) K5 रोषं (for ऋणं). S ऋणं प्रवृद्धमिव मे. — $^{c}$) S गोविंदेति यदाक्रोशत्.

22 $^{a}$) S (except G3.4) तेजो महद् (for तेजोमयं). — $^{b}$) Dn Ds1 गांडिवं. S बिभ्रता गांडिवं धनुः. — $^{c}$) K1 न द्विं; D8 अद्विं° (for मद्विं°). S पार्थेन (for तेनेह). — $^{d}$) S वैरं वः प्रत्युपस्थितं. — After 22, S ins.:

352* कृष्णस्य तद्वचः श्रुत्वा भयं मां महदाविशत् ।
तव पुत्रस्य लोभं तु वर्तमानं प्रसृज्यतः ।,

followed by st. 11 (which is om. in T2); cf. $10^{cd}$.

23 =(var.) 5. 122. 55. — S om. 23-30. — $^{cd}$) D8 हि (for न). K1.5 D1.2.8 Ca.s विपरीतः परीतो (for यो न कालपरीतो). K1.5 D8.10 वा अपि; K4 B8 D3.4 स्यादपि; D1 वा ह्यपि; D7 वा यदि (for वाप्यपि).

C. 5. 2351
B. 5. 59. 24

यो न कालपरीतो वाप्यपि साक्षात्पुरंदरः ॥ २३
बाहुभ्यामुद्वहेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ २४
देवासुरमनुष्येषु यक्षगन्धर्वभोगिषु ।
न तं पश्याम्यहं युद्धे पाण्डवं योऽभ्ययाद्रणे ॥ २५
यत्तद्विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ २६
एकेन पाण्डुपुत्रेण विराटनगरे यदा ।
भग्नाः पलायन्त दिशः पर्याप्तं तन्निदर्शनम् ॥ २७
बलं वीर्यं च तेजश्च शीघ्रता लघुहस्तता ।
अविषादश्च धैर्यं च पार्थान्नान्यत्र विद्यते ॥ २८

संजय उवाच ।

इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन्गिरा ।
गर्जन्समयवर्षीव गगने पाकशासनः ॥ २९
केशवस्य वचः श्रुत्वा किरीटी श्वेतवाहनः ।
अर्जुनस्तन्महद्वाक्यमब्रवील्लोमहर्षणम् ॥ ३०

इति श्रीमहाभारते उद्योगपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## ५९

वैशंपायन उवाच ।

संजयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्नरेश्वरः ।
ततः संख्यातुमारेभे तद्वचो गुणदोषतः ॥ १
प्रसंख्याय च सौक्ष्म्येण गुणदोषान्विचक्षणः ।
यथावन्मतितत्त्वेन जयकामः सुतान्प्रति ॥ २
बलाबले विनिश्चित्य याथातथ्येन बुद्धिमान् ।

---

24 =(var.) 5. 122. 56. — S om. 24 (cf. v.l. 23). — $^a$) $K_{1.4}$ उद्धरेद्; $D_1$ उत्सहेद् (for उद्वहेद्). — $^c$) $K_5$ $Dn_2$ त्रिदिवान्. $K_5$ सर्वान् (for देवान्).

26 =(var.) 5. 63. 15; =(var.) 5. 122. 53. — S om. 26 (cf. v.l. 23); Ds om. $26^{cd}$. — $^d$)=$27^d$; 5. 136. $8^d$.

27 S om. 27 (cf. v.l. 23); $B_4$ (hapl.) om. 27. $K_1$ $D_8$ transp. 27 and 28. — $^b$) $B_{1.2.5}$ $D_2$ तदा (for यदा). — $^c$) $K_4$ B ($B_4$ om.) D (except $D_{7.8.10}$) पलायत. — $^d$)=$26^d$ (q. v.).

28 S om. 28 (cf. v.l. 23). $K_1$ $D_8$ transp. 27 and 28. — $^a$) $D_{1.2}$ transp. वीर्यं and तेजः. — $D_1$ om. $28^{bc}$. — $^b$) $D_2$ कृत° (for लघु°). — $^c$) $K_1$ (before corr.) शीघ्रं; $K_1m$ $D_{10}$ वीर्यं (for धैर्यं). — $^d$) $K_{1.5}$ $B_8$ $D_{1.7}$ पार्थे (for पार्थात्). B (except $B_5$) दृश्य° (for विद्य°).

29 S om. 29 (cf. v.l. 23). $K_4$ B D (except $D_{8.10}$; $D_9$ missing) om. the ref. — $^b$) $B_{3.5}$ $D_{10}$ इव (for गिरा). — $^c$) $K_1$ $Dn_1$ $D_{7.8}$ च (for इव).

30 S om. 30 (cf. v.l. 23). — $^c$) $D_7$ अर्जुनस्य (for °नस्तत्). — $^d$) B Dn Ds $D_{1.2.5.6}$ रोम° (for लोम°); cf. v.l. 1. 1. 1, 5 etc.

Colophon missing in $K_{2.8}$ $D_9$. — *Sub-parvan:* $K_{1.4.5}$ B Dn Ds $D_{1.5-8.10}$ संजययान; $D_2$ यानसंधि; $T_1$ $G_{1.4}$ M संजयप्रतियान. — *Adhy. name:* $M_1$ वासुदेववाक्यं; $M_2$ वासुदेवकथनं; $M_{3-5}$ वासुदेववाक्यकथनं. — *Adhy. no.* (figures, words or both): $K_1$ 59; $D_5$ $T_2$ 58; $D_6$ 55; $D_7$ 60; $T_1$ $M_{2.3.5}$ 50; G $M_{1.4}$ 49 ($G_5$ 48). — *S'loka no.:* Dn 31; $D_8$ 32.

### 59

☞ This adhy. is missing in $K_{2.8}$ $D_9$ (cf. v.l. 5. 41. 1; 32. 15; 50. 59).

1 $^a$) S पुनरेव महाबाहुः ($T_1$ $G_1$ °भाग). — $^b$) $B_{2.4}$ $Dn_1$ $D_{5.6}$ जनेश्वरः; $G_4$ नराधिपः (for नरे°). $Dn_2$ किरीटी श्वेतवाहनः! — $^c$) $D_{1.2}$ संख्यातुं स समारेभे. — $^d$) $K_5$ $G_4$ तत्वतो (for तद्वचो). $G_5$ गुणनिश्चये; Cs as in text. — After 1, $G_5$ reads $3^{ab}$, followed by 353* (cf. v.l. 3).

2 $G_2$ (hapl.) om. $2^a$–$3^b$ and line 1 of 353* (see below). — $^a$) $K_5$ S ($G_2$ om.) संप्र° (for प्रसं°). $K_1$ $D_{1.2.7.10}$ तु; $T_1$ $G_1$ स (for च). $K_5$ $D_{1.2.7}$ $G_5$ सूक्ष्मेण; $T_1$ $G_2$ तत्वेन; $M_{3.4}$ साक्ष्येण; Ca. d सौक्ष्म्येण (as in text). $B_{1.3.5}$ स प्रसंख्याय सौ°. — $^c$) $K_5$ यथावन्मति तत्रैव; $D_1$

शक्तिं संख्यातुमारेभे तदा वै मनुजाधिपः ॥ ३
देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान् ।
कुरूञ्शक्त्याल्पतरया दुर्योधनमथाब्रवीत् ॥ ४
दुर्योधनेयं चिन्ता मे शश्वन्नाप्युपशाम्यति ।
सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ॥ ५
आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते ।
प्रियाणि चैषां कुर्वन्ति यथाशक्ति हितानि च ॥ ६
एवमेवोपकर्तॄणां प्रायशो लक्षयामहे ।
इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत्प्रियम् ॥ ७

अग्निः साचिव्यकर्ता स्यात्खाण्डवे तत्कृतं स्मरन् ।
अर्जुनस्यातिभीमेऽस्मिन्कुरुपाण्डुसमागमे ॥ ८
जातगृध्याभिपन्नाश्च पाण्डवानामनेकशः ।
धर्मादयो भविष्यन्ति समाहूता दिवौकसः ॥ ९
भीष्मद्रोणकृपादीनां भयादशनिसंमितम् ।
रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः ॥ १०
ते देवसहिताः पार्था न शक्याः प्रतिवीक्षितुम् ।
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ॥ ११
दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम् ।

C. 5. 2370
B. 5. 60. 12
K. 5. 60. 13

---

यथा विंदति तत्वेन; T G1.5 यथात्ममतितत्वेन. — $^{d}$) D1 जयकामान्.

3 G2 om. $3^{ab}$ (cf. v.l. 2). G5 reads $3^{ab}$ after 1. — $^{a}$) B D (except D1.7.8.10; D9 missing) Cs बलाबलं; M3–5 °बलौ. — $^{b}$) Ds1 (by corr.).2 T1 G3–5 यथातथ्येन. — T G1.3.4 M ins. after $3^{ab}$: G2 (om. line 1).5 (om. line 2), after 1:

353* यदा तु मेने भूयिष्ठं तद्वचो गुणदोषतः ।
　　पुनरेव कुरूणां च पाण्डवानां च बुद्धिमान् ।

— $^{c}$) D2 सा तु (for शक्तिं). M3.4 संध्या(M4 °धा)तुं (for संख्यातुं). — $^{d}$) T1 तथा वै; G4 यथा वै; G5 तदैव; M यथावत् (for तदा वै). T2 G2 मनुजाधिप; G4 पुरुषर्षभः.

4 $^{a}$) B1 D1 S (except T2 M2) दैवमानुषयोः. Cs cites दैवमानुष-. — D6 om. $4^{d}$–$5^{b}$.

5 D6 om. $5^{ab}$ (cf. v.l. 4). Before 5, S ins. धृतराष्ट्रः. — $^{b}$) K4 D1.3.4 G3 M (except M1) हि; B Dn Ds D5.8 वि-; D2 एव; D7 T G1.2.5 अभि- (for अपि). — After $5^{ab}$, S ins.:

354* ईदृशेऽभिनिविष्टस्य पृथिवीक्षयकारके ।
　　अधर्मे चायशस्ये च कार्ये महति दारुणे ।
　　पाण्डवैर्विग्रहस्तात सर्वथा तं न रोचये ।

[ (L. 1) G4 ईदृशे हरिनिष्ठस्य. G4.5 पृथिवीक्षयकारणे (G5 °कः). — (L. 2) T2 G1.2 M1 अधर्म्यें. T1 G3.4 वायशस्ये वा. — (L. 3) G5 M विग्रहं. T G2–4 सर्वथा मे न रोचते. ] — $^{d}$) S तव मानद (for नानुमानतः).

6 D1 om. $6^{b}$–$7^{c}$. — $^{c}$) S इच्छंति; Cs कुर्वन्ति (as in text). — $^{d}$) S कुर्वंति च (M °स्येव) (for यथा°).

7 D1 om. $7^{abc}$ (cf. v.l. 6). — $^{a}$) D2 उपरुद्धायां; Cs उपकर्तॄणां (as in text). — $^{b}$) K4 D2–4 लक्षयाम्यहं; Cs °महे (as in text). — $^{c}$) K1 (m as in text) पृच्छंति; Ca.d.s इच्छन्ति (as in text). K5 इत्थं बहुलं सर्वेषु. — $^{d}$) D1 तमाप्रियं (sic); D1m S तथाप्रि(G5 °क्ष)यं; Cs महत्प्रियं (as in text).

8 $^{a}$) D2 सांनिध्यकर्ता; Cs as in text. Ca.d cite साचिव्यं. K1.5 D7.10 अस्य (for स्यात्). — $^{b}$) Ds पांडवे; Cs खांडवे (as in text). D1 महत्; Ca.d स्मरन् (as in text). — After $8^{ab}$, G2 (which om. $8^{cd}$) reads 5. 60. $5^{c}$–$21^{b}$! — $^{c}$) K4 B D (except D7; D9 missing) अपि (for अति-). — $^{d}$) D1 S (except G3.4; G2 om.) कुरुपांडवसंगमे (T G1 °विग्रहे; M2 °संगरे).

9 $^{a}$) K1 जातवृद्ध्या; K4 B4 Dn D3–6.10m T2 M Cn जा(Dn1 ज्ञा)तिगृध्या; K5 ज्ञानवृद्धा; B3 T1 G4 जात(G4 °ति)गृध्रा; Ds जातिगृह्या; D7 पुत्रप्रीत्या; D10 जातिवृत्त्या; Ca.d.s जातगृध्या (as in text). K1 उपपन्नाः; Ds2 विपन्नाः (for अभि°). K5 तु; T1 G1.5 ते (for च). — $^{b}$) D7 अशेषतः; D10 अनेकधा. — $^{c}$) K4 B Dn Ds D1.3–6.8.10 समेष्यंति (for भवि°). D2 सर्वे सांनिध्यमेष्यंति. — $^{d}$) K1.5 समुद्भूताः; D2 अनाहूताः; G5 समाख्याताः.

10 $^{a}$) K1.5 D7.10 द्रोणभीष्म° (by transp.). — $^{b}$) K4 B4 Dn2 D3.4 °संनिभं; K5 T1 G3–5 M2.5 °संमितान्; D2 T2 G1.2 M1.3.4 °संमितात्. — G3 om. $10^{c}$–$13^{c}$. — $^{c}$) M समरे (for संरम्भं). — $^{d}$) M आगच्छंति (for गमिष्यन्ति).

11 G3 om. 11 (cf. v.l. 10). — $^{a}$) K1 D3 G4 तदैव सहिताः; K4 D1.3.4 T2 G2 तदेवं (D1 T2 °व) सहिताः; K5 तदैवं रक्षिताः; B Dn Ds D2.5.6.10 ते देवैः सहिताः; T1 G1.5 तद्देव°. — $^{b}$) G1 परि° (for प्रति°). — $^{c}$) Dn2 G4 मानुषेषु; G2 मनुष्येषु. Ds G5 M नरव्याघ्र.

12 G3 om. 12 (cf. v.l. 10). — $^{a}$) D7 दुराधर्षं. — $^{b}$) K1 D3.4.7 गांडिवं; K5 D10 गांजीवं. — $^{c}$) Dn T2 दारुणौ (for वारुणौ). D1 om. च. M वारुणे °ये °व्ये.

C. 5. 2370
B. 5. 60. 12
K. 5. 60. 13

वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ १२
वानरश्च ध्वजो दिव्यो निःसङ्गो धूमवद्गतिः ।
रथश्च चतुरन्तायां यस्य नास्ति समस्त्विषा ॥ १३
महामेघनिभश्चापि निर्घोषः श्रूयते जनैः ।
महाशनिसमः शब्दः शात्रवाणां भयंकरः ॥ १४
यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति ।
देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ १५
शतानि पञ्च चैवेषूनुद्वपन्निव दृश्यते ।
निमेषान्तरमात्रेण मुञ्चन्दूरं च पातयन् ॥ १६
यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ १७
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।
अशक्यं रथशार्दूलं पराजेतुमरिंदमम् ॥ १८
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम् ॥ १९
तमर्जुनं महेष्वासं महेन्द्रोपेन्द्ररक्षितम् ।
निघ्नन्तमिव पश्यामि विमर्देऽस्मिन्महामृधे ॥ २०
इत्येवं चिन्तयन्कृत्स्नमहोरात्राणि भारत ।
अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया ॥ २१
क्षयोदयोऽयं सुमहान्कुरूणां प्रत्युपस्थितः ।
अस्य चेत्कलहस्यान्तः शमादन्यो न विद्यते ॥ २२
शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान् ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

— $^{d}$) $G_{4}$ शरपूर्ण-; M शरपूर्णे.

13 $G_{3}$ om. $13^{abc}$ (cf. v.l. 10). — $^{a}$) $K_{5}$ ततो; $B_{2.4}$ Dn $D_{1.10}$ ध्वजे (for ध्वजो). — $^{b}$) $K_{1}$ निःशंको (for निःसङ्गो). S ($G_{3}$ om.) निः($G_{4}$ ह्य)संगगतिराहवे. Ca, d, s cite धूमवद्गतिः (as in text). — $^{c}$) S ($G_{3}$ om.) पृथिव्यां (for रथश्च). — $^{d}$) $K_{4}$ B D (except $D_{1.2}$) क्षितौ (for त्विषा).

14 $^{ab}$) $D_{1}$ महामेघनिभो यस्य. $K_{4}$ जवैः (for जनैः). S रथश्च यस्य वै दिव्यो ($G_{3}$ $M_{1.3.4}$ घोषो) महामेघौघनिस्वनः. — $^{c}$) Ds खड्गः (for शब्दः). S (except $G_{3.4}$) महाशनिसम($G_{5}$ °शर)स्पर्शः.

15 $^{a}$) S यस्य (for यं च). Ca cites यं (as in text). S (except $M_{2.5}$) वीर्यं (for वीर्ये).

16 $^{a}$) $G_{2}$ M शतं च (for शतानि). $K_{1.5}$ $D_{2}$ शतं पंच तथैवेषून्. — $^{b}$) $K_{4}$ B Dn Ds $D_{2-6.8}$ यो गृह्णन्; $K_{5}$ प्रवपन्; $D_{1}$ $T_{2}$ (*inf. lin.*) $G_{1.5}$ M उद्वमन्; $D_{7}$ उद्धरन्; T $G_{2}$ उद्वहन्; $G_{3.4}$ उत्सृजन् (for उद्वपन्). $K_{1}$ $D_{7}$ एव; $K_{4}$ B Dn Ds $D_{2-6.8}$ नैव; $T_{1}$ $G_{1}$ इह (for इव). $K_{5}$ देववत्; $G_{2}$ वृष्टयः (for दृश्यते). — $K_{5}$ om. $16^{c}$–$17^{b}$. — $^{d}$) $G_{2}$ दूरेण; M दूरे च (for दूरं च). $D_{7}$ $G_{3}$ पातयेत् (for °यन्).

17 $K_{5}$ om. $17^{ab}$ (cf. v.l. 16). — $^{a}$) $T_{1}$ तम्; $G_{4}$ यथा (for यम्). M त्वाह (for आह). — $^{c}$) $K_{5}$ नृपः; $D_{1.7}$ च यं; $D_{2}$ स्वयं (for तथा). $K_{1}$ च पांचाल्यो; S च शल्योयं ($G_{3.4}$ °थ) (for तथा शल्यो). — $^{d}$) $D_{1}$ मानुषाः; $M_{3-5}$ बांधवाः (for मानवाः).

18 $^{a}$) $D_{7}$ युद्धे च (for युद्धाय). — $^{c}$) $D_{1}$ रथिनां वीरं; $G_{3}$ नरशार्दूलं (for रथ°).

19 $B_{4}$ om. $19^{ab}$. Ds transp. $19^{ab}$ and $19^{cd}$. — $^{b}$) $K_{5}$ $Dn_{1}$ $D_{6.10}$ च (for यः). — $^{cd}$) $B_{1.3.5}$ om. $19^{cd}$. $D_{1}$ S सदृशः and पांडवः.

20 $K_{4}$ om. from st. 20 up to st. 26 of the *next* adhy. — $^{b}$) B D (except $D_{1.7.10}$; $D_{9}$ missing) महेंद्रोपेंद्रविक्रमं ($B_{2}$ °पमविग्रहं). — $^{d}$) B Ds $D_{3-8.10}$ °भये; Dn °हवे; $G_{5}$ °रथं (for °मृधे).

21 $K_{4}$ om. 21 (cf. v.l. 20). — $^{a}$) $D_{1}$ $T_{2}$ $G_{2.3}$ M एतच् (for एवं). T G नित्यं (for कृत्स्नं). — $^{c}$) $D_{2}$ निःसुखी; $T_{1}$ $G_{1}$ -श्च्यसुखः. $G_{4}$ अनिर्व्यूढसुखश्चास्मि. — $^{d}$) $B_{2}$ $D_{2.5.7}$ $G_{2}$ स($D_{2}$ सा)म-; $D_{1}$ एव; $T_{1}$ नाश- (for शम-). Cd cites सम.

22 $K_{4}$ om. 22 (cf. v.l. 20). — $^{b}$) $B_{2}$ $G_{4}$ समुप°; $B_{3.5}$ प्रत्यव°; $D_{7}$ समव° (for प्रत्युप°). — $^{c}$) $D_{7}$ वै (for चेत्).

23 $K_{4}$ om. 23 (cf. v.l. 20). — $^{a}$) $D_{7}$ अत्यर्थं (for नित्यं). — $^{b}$) $K_{1}$ सह; $K_{5}$ साकं (for तात). Ca cites the whole stanza as in text.

Colophon missing in $K_{2.3}$ $D_{9}$; $K_{4}$ om. it. — *Sub-parvan:* $K_{1.5}$ B Dn Ds $D_{5-8.10}$ संजययान; $D_{1.2}$

६०

वैशंपायन उवाच ।

पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ १
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ॥ २
अकामद्वेषसंयोगाद्द्रोहाल्लोभाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ ३
इति द्वैपायनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ॥ ४
नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन ।
कामाल्लोभादनुक्रोशाद्द्वेषाच्च भरतर्षभ ॥ ५
यदि ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ ६
तस्मान्न भवता चिन्ता कार्यैषा स्यात्कदाचन ।
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ७
अथ चेत्कामसंयोगाद्द्वेषाल्लोभाच्च लक्ष्यते ।
देवेषु देवप्रामाण्यं नैव तद्विक्रमिष्यति ॥ ८
मयाभिमन्त्रितः शश्वज्जातवेदाः प्रशंसति ।

C. 5. 2390
B. 5. 61. 9
K. 5. 61. 9

---

यानसंधि; M (except M1) संजयप्रतियान. — *Adhy. name:* M पांडवशक्तिकथनं. — *Adhy. no.* (figures, words or both): D5 59; D6 55; D7 G2. 3. 5 M1. 4 61; T G4 M2. 3. 5 62; G1 63. — *S'loka no.:* K5 22; Dn 23; D3 21.

## 60

☞ This adhy. is missing in K2. 3 (cf. v.l. 5. 41. 1; 32. 15); st. 1–12 are missing in D9 (cf. v.l. 5. 50. 59). K4 om. 1–26 (cf. v.l. 5. 59. 20).

1 c) K5 D1 आस्थाय; T1 G1. 4. 5 आदाय.

2 Before 2, K5 G3 ins. दुर्योधन उ° (G3 om. उ°). — a) G3 असाध्या (for अशक्या). G4 देवशिशवः; Ca as in text. — c) M व्यैतु; Ca व्येतु (as in text).

3 ab) D2 G1. 2 अकामाद्वेष° (D2 °द्भय°); Ca अराग-द्वेष°; Cs as in text. B1. 3–5 Dn2 D3–6. 8 G3 Ca. d. s transp. द्रोहात् and लोभात्. Ds2 D2 लोभात्; T2 G5 M1 मोहात् (for द्रोहात्). D8 स्नेहात्; D2 द्वेषात् (for लोभात्). B2. 3 Dn1 D1. 10 °संयोगलोभद्रोहा(D10 °संयोग द्रोहलोभा)च्च भा°. — c) D2 अपेक्षया; Ca. d. s उपेक्षया (as in text). — d) B2. 4 आगताः; D2 T G1. 4 आप्नुयुः; Ca as in text.

4 a) T2 एतत् (for इति). — c) Ds2 D6 जामदग्निः. K5 स (for च). K1. 5 D7 रामोपि; S यो रामः. — d) K1. 5 D1. 7. 10 कथाः (for कथाम्). K1. 5 D1. 2. 7. 10 S स्व(D1. 2 T2 G4 चा)कथयत् (for अकथयत्).

5 a) K1. 5 D7. 8. 10 वै (for एव). G4 नैव मानुषभावेन. — b) D1 कथं° (for कदा°). — G2 reads 5c–21d after 5. 59. 8ab (om. altogether 19c–20d). — c) B Dn D8 D3–6. 8 कामात्क्रोधात्तथा लोभात्; D2 अकामद्वेषसंयोगात्. — d) S भेदाद्वा (for द्वेषाच्च). D2 लोभाद्वेषाच्च भारत.

6 a) B3 D (except D1. 2; D9 missing) G1. 4 यदा; G3 यथा (for यदि). K1. 5 Ds2 D10 तु; D7 वा (for हि). — b) D2 प्रजापतिः (for अश्विनावपि). — c) S प्रवर्तेत (for प्रवर्तेरन्). — d) T2 पांडवाः (for न पार्थाः).

7 b) B D (except D10; D9 missing) G3 कथं° (for कदा°). — c) K5 B3 देवास्तु; Dn D3–6. 8 देवेषु; D1 T G देवा(G3 °वै)श्च; D2. 7. 10 देवा (D2 °वे) हि; Cn दैवेषु (as in text). K5 अपेक्षता; Dn2 Ds2 D1. 2. 3 (by corr.). 4. 10 T G (except G5) उपेक्षकाः; Cn अपेक्षकाः (as in text). B3 स्त्वेते; D7 ह्येतैः (for ह्येते). K1 दैवैरुपेक्षिता ह्येते; M देवेपूपेक्षकाः (M1 *sup. lin.* °क्षिताः) कार्या. — d) D2 सर्व° (for शश्वद्°).

8 a) T G5 M कर्म° (for काम°). — b) B (except B3) D (except D3; D9 missing) Ca. d द्वेषः; G5 लोभात् (for द्वेषात्). K1. 5 B (except B3) D (D9 missing) Ca. d लोभः; G5 द्वेषात् (for लोभात्). B4 (m as in text) जायते; Ds D7 दृश्यते; D2 लभ्यते; G4 भारत; Ca. d लक्ष्यते (as in text). — G4 om. 8c–10c. — c) D7 तथा तु; D3 G2 दैवेषु; Ca. d देवेषु (as in text). K1. 5 D1. 2 चैतत्प्रामाण्यात् (D2 °माण्यं); B Dn1 D5. 6. 8. 10 Cn दैवप्रामाण्यात्; Dn2 Ds D3. 4. 7. 10 Ca. s देवप्रामाण्यात्; T1 दैवप्रा°; G3 चैव प्रा°. — d) K1 Ca. d. s तेषां; K5 B D1. 3–8. 10 नैषां (for नैव). D2 नैषां क्रुद्धं क्रमिष्यति; G3 नैतच्चित्रं क्रमिष्यति. Ca. d. s cite विक्रमिष्यति.

C. 5. 2390
B. 5. 61. 9
K. 5. 61. 9

दिधक्षुः सकलाल्लोँकान्परिक्षिप्य समन्ततः ॥ ९
यद्वा परमकं तेजो येन युक्ता दिवौकसः ।
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ १०
प्रदीर्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन्स्थापयाम्यभिमन्त्रणात् ॥ ११
चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च ।
विनाशाय समुत्पन्नं महाघोरं महास्वनम् ॥ १२
अश्मवर्षं च वायुं च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥ १३
स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः ।
देवासुराणां भावानामहमेकः प्रवर्तिता ॥ १४
अक्षौहिणीभिर्यान्देशान्यामि कार्येण केनचित् ।
तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये ॥ १५
भयानि विषये राजन्व्यालादीनि न सन्ति मे ।
मत्तः सुप्तानि भूतानि न हिंसन्ति भयंकराः ॥ १६
निकामवर्षी पर्जन्यो राजन्विषयवासिनाम् ।
धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ॥ १७
अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा ।
धर्मश्चैव मया द्विष्टान्नोत्सहन्तेऽभिरक्षितुम् ॥ १८
यदि ह्येते समर्थाः स्युर्मद्द्विषस्त्रातुमोजसा ।
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः ॥ १९
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ॥ २०
यदभिध्याम्यहं शश्वच्छुभं वा यदि वाशुभम् ।

---

9 $G_4$ om. 9 (cf. v.l. 8). — $^{a}$) $K_1$ $B_4$ $Ds_2$ $D_{1.2.6}$ $G_3$ M (except $M_1$) °मंत्रितं; Ca.d.s as in text. — $^{b}$) $K_5$ $Dn_1$ $D_{3-6.8}$ T G ($G_4$ om.) $M_1$ प्रशाम्यति ($M_1$ *inf. lin.* °सति); Cs प्रशंसति (as in text). — $^{c}$) $K_{1.5}$ दिधक्षन्; Cs दिधक्षुः (as in text).

10 $G_4$ om. 10 (cf. v.l. 8). — $^{b}$) $D_{3.4}$ रक्ता (for युक्ता). — $^{c}$) $K_1$ मयि (for मम). $D_1$ $G_2$ M ($M_1$ *inf. lin.* as in text) अनुमतं; $T_2$ (by corr.) अधिगतं (for अनुपमं). — $^{d}$) $D_1$ विधिमंत्रवत् (for विद्धि भारत).

11 $^{a}$) $B_{2.4.5}$ D (except $D_{1.7}$; $D_9$ missing) Ca.d विदीर्यं°; T $G_{1.3}$ $M_1$ प्रकीर्यं° (for प्रदीर्यं°). — $^{d}$) T G (except $G_3$) $M_1$(*inf. lin.*)$_{.2}$ क्षपयामि; $M_1$ (orig.) स्तंभ°; $M_{3-5}$ क्षम°; Cs स्थाप° (as in text). Ds स्थापयिष्यामि मंत्रणात्.

12 $^{a}$) $G_5$ अपि (for अस्य). — $^{b}$) $B_{2.4}$ $D_1$ जंगमाजंगमस्य च. — $^{d}$) B $Dn_2$ Ds $D_{1.10}$ अहं; $Dn_1$ महद्; S भयं (for the first महा-). $G_2$ महाहवे (for °स्वनम्).

13 $D_9$ resumes (cf. v.l. 5. 50. 59)! — $^{a}$) $K_5$ वायुवशात् (for च वायुं च). — $^{b}$) M (except $M_1$) क्षप° (for शम°). $G_4$ निश्चयः (for नित्यशः). — $^{c}$) $G_4$ नूनं; M ($M_1$ *inf. lin.*) दिक्षु (for ऽभीक्ष्णं).

14 $^{b}$) $K_1$ महा-; $T_1$ $G_{1.5}$ यदा; $T_2$ $G_{2-4}$ $M_{2-5}$ यथा; $M_1$ तथा (for मया). — $^{c}$) $K_5$ भूतानां (for भावानां).

15 $^{a}$) A few S MSS. अक्षो°. — $^{c}$) B D (except $D_{1.8}$; $D_2$ by corr.) तत्राश्वा; $T_2$ $G_{3.4}$ तत्रापि. Ds प्रवर्तंति; Ca.d as in text. — $^{d}$) $D_2$ $T_2$ $G_5$ तत्र (for यत्र). $G_4$ हि (for अभि-). $K_5$ यत्राभिकामये सुखं.

16 $^{a}$) $D_{3.4.9}$ transp. विषये and राजन्. B Dn $D_3$ $D_{2.5-8.10}$ भयानकानि विषये ($D_{7.10}$ सत्वानि). — $^{b}$) $D_{1,3}$(m as in text)$_{.4.9}$ व्याडादीनि; $D_2$ $T_2$ (before corr.) $G_{1.2}$ M व्याघ्रादीनि; $T_1$ $G_{3.4}$ व्याघ्रादीनां; $T_2$ $G_5$ व्याघ्रादिभ्यो (for व्याला°). — $^{c}$) B D (except $D_1$) मंत्रगुप्तानि (for मत्तः सुप्तानि). — $^{d}$) $K_5$ Dn $D_7$ $G_2$ $M_{1.4}$ हि संति (for हिंसन्ति). $D_9$ भयंकरा न हिंसति.

17 $D_9$ om. 17. — $^{a}$) $K_{1.5}$ $D_{7.8.10}$ कामवर्षी च; Ca as in text. Cd cites निकामं. — $^{c}$) $G_{1.5}$ सस्यानां सर्वजंतूनां.

18 $^{a}$) $B_3$ $Dn_2$ Ds $D_{5.6}$ अश्विभ्यामथ. — $^{c}$) $K_{1.5}$ $B_3$ $D_1$ $T_2$ द्विष्टं; $T_1$ $G_2$ त्विष्टः; $G_{1.5}$ -विष्टः; $G_3$ क्लिष्टः; $G_4$ दिष्टः; $M_1$ द्विष्टाः; $M_{3-5}$ स्विष्टः (for द्विष्टान्). — $^{d}$) $K_{1.5}$ नोत्सहेदभिरक्षितुं; S (except $M_2$) सत्यमेतद्ब्रवीमि ते (= 20$^{d}$). — After 18, S (except $M_2$; $G_3$ om.) reads 21 ($G_5$ $M_{3-5}$ *repeating* it in its proper place).

19 $G_3$ om. 19–21. — $^{b}$) T $G_{1.5}$ मद्विष्टं (for मद्द्विषस्). B Dn Ds $D_{5.6}$ अंजसा (for ओजसा). — $G_2$ om. 19$^{c}$–20$^{d}$. — $^{c}$) S ($G_{2.3}$ om.) क($G_4$ अ)स्मात् (for न स्म). — $^{d}$) $D_1$ समाप्नुयुः (for अवा°).

20 $G_{2.3}$ om. 20 (cf. v.l. 19); $D_4$ om. 20$^{b}$–21$^{c}$. Cf. v.l. 18.

21 S (except $M_2$; $G_3$ om.) read 21 after 18 ($G_5$ $M_{3-5}$ *repeating* it here). $G_3$ om. 21 (cf. v.l. 19); $D_4$ om. 21$^{abc}$ (cf. v.l. 20). — $^{c}$) $K_{1.5}$ $D_{1.7.10}$ तद् (for एतत्). T $G_{1.4.5}$ $M_2$ तन्नवेद्विधिपूर्वं मे; $M_{1.3-5}$

नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ २१
भविष्यतीदमिति वा यद्ब्रवीमि परंतप ।
नान्यथा भूतपूर्वं तत्सत्यवागिति मां विदुः ॥ २२
लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ २३
न ह्यहं श्लाघनो राजन्भूतपूर्वः कदाचन ।
असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ २४
पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया ॥ २५
सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः ।
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥ २६
परा बुद्धिः परं तेजो वीर्यं च परमं मयि ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ २७
पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते ॥ २८
इत्युक्त्वा संजयं भूयः पर्यपृच्छत भारत ।
ज्ञात्वा युयुत्सुः कार्याणि प्राप्तकालमरिंदम ॥ २९ C. 5. 2410 B. 5. 61. 29 K. 5. 61. 29

इति श्रीमहाभारते उद्योगपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

---

तत्तद्भवेद्धि पूर्वं मे.

22 G2 om. 22$^{a}$–29$^{b}$. — $^{c}$) K1 वा; B4 D (except D1–4. 7. 10) च; G4 तु (for तत्). — $^{d}$) M (except M1) मा (for मां).

23 G2 om. 23 (cf. v.l. 22). — $^{a}$) K5 मे तात; D10 एवैतत् (for एतन्मे). — $^{b}$) K1. 5 D8 भुवि (for दिक्षु). D1 माहात्म्यं विश्रुतं भुवि. — $^{d}$) G1 श्लाघयन्. G4 अनघ (for नृप).

24 G2 om. 24 (cf. v.l. 22). — $^{b}$) Dn2 Ds2 G4. 5 भूतपूर्वं. D1 T1 कथंचन. — $^{d}$) K1. 5 D8. 10 य (for यद्).

25 G2 om. 25 (cf. v.l. 22). — $^{a}$) A few S MSS. मात्स्याः. — $^{b}$) Some N MSS. कैकयैः. — $^{d}$) D1 निहतान् (for विजितान्).

26 G2 om. 26 (cf. v.l. 22). — $^{c}$) S (G2 om.) नशिष्यंति (for विनङ्क्ष्यन्ति). — $^{d}$) D8 सबांधवाः (for सहान्वयाः).

27 K4 resumes! G2 om. 27 (cf. v.l. 22). — $^{b}$) K1. 5 D7. 10 एव परं (for परमं). B2. 4. 5 D (except D1–4. 7. 10) T2 M2 मम (for मयि). — $^{d}$) S (G2 om.) विशां पते (for विशिष्यते).

28 G2 om. 28 (cf. v.l. 22). — $^{b}$) D6 चैव (for शल्यः). — $^{c}$) K1. 5 प्रनंदंति; D1 विजानंति (for प्रजानन्ति). — $^{d}$) D2 च (for तत्). S (G2 om.) वर्तं° (for विद्य°).

29 G2 om. 29$^{ab}$ (cf. v.l. 22). Before 29, K1 D1 T2 G4. 5 M1 ins. वैशं°. — $^{a}$) K1. 5 D1. 7. 8 उक्तः; K4 D2–6. 9 उक्तः; Cs उक्त्वा (as in text). — $^{b}$) G5 पर्यपृच्छच्च. — $^{c}$) D8. 4. 9 ज्ञाता; S °तुं (for °त्वा). K1. 4. 5 (m as in text) B4 D (except Dn2 D8 D7) Cn युयुत्सोः (for °त्सुः). — $^{d}$) D1 °कालान्; T1 G1. 3. 5 M °कालानि (for °कालम्). K4 B Dn2 D6 T G1. 3. 4 M5 अरिंदमः; M2 ह्यरिंदमः.

Colophon missing in K2. 3 D9. — *Sub-parvan:* K1. 4. 5 B Dn Ds D3–8. 10 संजययान; D2 यानसंधि; M (except M5) संजयप्रतियान. — *Adhy. name:* T1 दुर्योधनविक्रमकथनं; G1. 5 दुर्योधनविकत्थनं; M1 दुर्योधनगर्ववचनं. — *Adhy. no.* (figures, words or both): K1 61; D5 60; D6 57; D7 G2. 3. 5 M1. 4 62; T G4 M2. 3. 5 63; G1 64. — *S'loka no.:* K5 Dn D8 29; G5 30.

## 61

☞ This adhy. is missing in K2. 3 (cf. v.l. 5. 41. 1; 32. 15).

1 $^{a}$) K1. 4. 5 D7. 10 तु; S एव (for तु). K4 B Dn Ds D2–6. 8. 9 पार्थ; D1 G4 पार्थिवं (for पार्थान्).

2 Before 2, T2 M1 ins. कर्णः. — $^{b}$) K1. 5 B3. 4 Dn2 D1. 2. 5–8 कृतं; K4 कृष्टं; Ca हृतं (as in text). K4. 5 D1. 6–8 °पुरं; B2–4 Dn Ds °मयं (Ds2 °व्रतं); D2 °कृतं; D10 °पदं; T1 G1. 4 M2 °वृतं; G5 °घृतं; Ca °परं (as in text). — $^{d}$) K4 B4 Dn D1. 3–6. 8. 9 ते न; D7 न च; T G न ते (for तव). Cn cites प्रतिभा अस्यति,

## ६१

C. 5. 2411
B. 5. 62. 1
K. 5. 62 1

वैशंपायन उवाच ।

तथा तु पृच्छन्तमतीव पार्था-
न्वैचित्रवीर्यं तमचिन्तयित्वा ।
उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन्संसदि कौरवाणाम् ॥ १

मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामाद्धृतं ब्रह्मपरं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्त-
स्त्वयान्तकालेऽप्रतिभास्यतीति ॥ २

महापराधे ह्यपि संनतेन
महर्षिणाहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः
ससागरामप्यवनिं महर्षिः ॥ ३

प्रसादितं ह्यस्य मया मनोऽभू-
च्छुश्रूषया स्वेन च पौरुषेण ।
ततस्तदस्त्रं मम सावशेषं
तस्मात्समर्थोऽस्मि ममैष भारः ॥ ४

निमेषमात्रं तमृषिप्रसाद-
मवाप्य पाञ्चालकरूषमत्स्यान् ।
निहत्य पार्थांश्च सपुत्रपौत्रा-
ल्लँलोकानहं शस्त्रजितान्प्रपत्स्ये ॥ ५

पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।
यथाप्रधानेन बलेन यात्वा
पार्थान्हनिष्यामि ममैष भारः ॥ ६

एवं ब्रुवाणं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने
हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ ७

यत्खाण्डवं दाहयता कृतं हि
कृष्णद्वितीयेन धनंजयेन ।
श्रुत्वैव तत्कर्म नियन्तुमात्मा
शक्यस्त्वया वै सह बान्धवेन ॥ ८

यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान्महेन्द्रः ।
भस्मीकृतां तां पतितां विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ॥ ९

यस्ते शरः सर्पमुखो विभाति

---

$C_a$ प्रतिभास्यति.

3 [a]) S (except $G_4$ $M_5$) महापराधेष्वपि (for °धे ह्यपि). $D_1$ त्वयि (for ह्यपि). $K_{4.5}$ B Dn Ds $D_{3-6, 8-10}$ यन्नतेन; $D_{1.2.7}$ सत्तमेन; $M_{3.4}$ (*inf. lin.* as in text). 5 तन्नतेन (for संनतेन). — [b]) $G_2$ न (for च). — [c]) $B_2$ Ds $D_{3-6}$ S (except $G_5$) अति- (for अपि). — [d]) Some MSS. अवनीं.

4 [a]) $K_1$ $D_{7.10}$ M तस्य; $K_5$ यस्य (for ह्यस्य). — [c]) $K_4$ B D (except $D_{2.7}$) तदस्ति च ($K_4$ वा) (for ततस्तद्). Ds मम चावशेषं; $G_{1.5}$ प्रददावशेषं. — [d]) $K_5$ $D_1$ एव (for एष). $K_{1.5}$ $B_3$ $D_{1.2}$ यत्नः; $G_2$ भावः (for भारः).

5 [a]) $K_4$ B D (except $D_{1.2.3}$) T G (except $G_2$) निमेषमात्रात्. $K_{1.4.5}$ $B_4$ D (except Ds) $T_2$ ऋषेः प्रसादं; $G_4$ ऋषिप्रभावं. — [b]) Some N MSS. पंचाल°; S (mostly) °करूश°. — [c]) T $G_{1.5}$ पांडून् (for पार्थांश्च). $K_4$ B D (except $D_{1.2.7.10}$) सह पुत्रपौत्रैः (for च सपुत्रपौत्रान्). — [d]) S (except $M_1$) शत्रु° (for शस्त्र°).

6 [a]) $D_2$ M मे (for ते). — [c]) $T_2$ $G_5$ ऋषेः ($G_5$ ऋषि-) प्रसादेन (for यथाप्रधानेन). $K_4$ B D (except $D_{7.10}$) गत्वा; $K_5$ यत्तः; T $G_{1.5}$ चैतान्; $G_2$ तेन (for यात्वा). — $G_2$ om. $6^d$–$8^a$. — [d]) $D_{1.9}$ भावः (for भारः).

7 $G_2$ om. 7 (cf. v.l. 6). — [a]) $D_1$ इति (for एवं); $K_4$ B (except $B_3$) D (except $D_{1.2.7.10}$) ब्रुवंतं (for ब्रुवाणं). — [b]) $D_7$ S ($G_2$ om.) °बुद्धिः. — [d]) $K_5$ धृतराष्ट्रस्य पुत्राः.

8 $G_2$ om. $8^a$ (cf. v.l. 6). — [d]) $K_4$ शक्तः; B D (except $D_{7.9.10}$) युक्तः (for शक्यः).

9 [b]) $D_1$ सुरेंद्रः; $G_1$ नरेंद्रः (for महेन्द्रः). — [c]) $K_4$ B D (except $D_7$) समरे (for पतितां).

10 [a]) S शरश्च यः (for यस्ते शरः). $K_1$ अभियाति.

सदाग्र्यमाल्यैर्महितः प्रयत्नात् ।
स पाण्डुपुत्राभिहतः शरौघैः
सह त्वया यास्यति कर्ण नाशम् ॥ १०
बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च गरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ११

कर्ण उवाच ।

असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च भूयश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किंचि-
त्पितामहस्तस्य फलं शृणोतु ॥ १२
न्यस्यामि शस्त्राणि न जातु संख्ये
पितामहो द्रक्ष्यति मां सभायाम् ।
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ १३

वैशंपायन उवाच ।

इत्येवमुक्त्वा स महाधनुष्मा-
न्हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राज-
न्मध्ये कुरूणां प्रहसन्नुवाच ॥ १४
सत्यप्रतिज्ञः किल सूतपुत्र-
स्तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा
लोकक्षयं पश्यत भीमसेनात् ॥ १५
आवन्त्यकालिङ्गजयद्रथेषु
वेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां
सहस्रशश्चायुतशश्च योधान् ॥ १६
यदैव रामे भगवत्यनिन्द्ये
ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ १७
अथोक्तवाक्ये नृपतौ तु भीष्मे
निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धि-
र्दुर्योधनः शांतनवं बभाषे ॥ १८

C. 5. 2428
B. 5. 62. 18
K. 5. 62. 18

इति श्रीमहाभारते उद्योगपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

$K_5$ निपाती (for विभाति). — [b]) $Dn_1$ $D_3$ $D_{5.7}$ अग्र° (for अग्र्य°). · $K_1$ कुलेन; $K_5$ सदैव; S कुले ($G_4$ सदा) ते (for प्रयत्नात्).

11 [c]) $K_4$ $D_9$ बली°; B Dn $D_3$ $D_{2-6}$ वरी°; $D_1$ यवी° (for गरी°). — [d]) $K_4$ $D_{3.4.9}$ प्रहसन्; a few MSS. तुमले; (for तुमुले). $K_4$ $B_3$ $D_{3.4.9}$ वि- (for प्र-).

12 [a]) $K_5$ $T_2$ $G_{1.5}$ यथोक्तं. — [b]) $K_4$ B Dn $D_3$ $D_{3-7.9.10}$ $G_3$ भूयांश्च (for भूयश्च). $D_1$ भूयात्स मतो (for भूयश्च ततो). — [c]) $K_4$ B (except $B_5$) $D_{2-5.7-10}$ $G_4$ च (for तु).

13 [a]) $G_5$ न्यस्तानि (for न्यस्यामि). — [b]) S सहायं (for सभायाम्). — [c]) $K_{1.5}$ $D_{1.7.8.10}$ $T_1$ $G_5$ मयि (for मम). — [d]) $T_2$ $G_3$ द्रक्ष्यंतु. T $G_{1.5}$ M सह-; $G_{2.3}$ मम (for भुवि).

14 [a]) $M_{1.2}$ सहसा (for स महा-).

15 Before 15, $T_2$ ins. भीष्मः. — [a]) $K_1$m सुयोधनायं; $Ca.s$ सत्यप्रतिज्ञः (as in text). — [b]) $K_5$ $D_{7.10}$ $G_5$ विषहेन्न. Cs cites सहेत. — [c]) $K_5$ S (except $G_3$) हत्वा (for भित्त्वा). — [d]) $K_1$ $D_2$ $T_1$ $G_{1-3.5}$ पश्यतु; $K_{4.5}$ $B_2$ $Ds_1$ $D_{3.4.7.9}$ $G_4$ Cs पश्यति; $Dn_1$ पश्यतां (for पश्यत). $T_1$ $G_{3-5}$ भीमसेनः; $T_2$ $G_1$ भैमसेनं; $G_2$ M भैमसेनाः ($G_2$ °नः); Cs भीमसेनात् (as in text).

16 $K_5$ om. 16–18. — [b]) $K_4$ वेदिष्ठयं(sic); B $Dn_2$ $D_3$ $D_{2.5-8.10}$ $G_{2.4}$ चेदिध्वजे; $D_1$ यूपध्वजे; $D_{3.4.9}$ चेदिष्वयं. $Ds_2$ $D_7$ बाह्लिकेषु (for °के च). — [d]) $B_3$ अभ्युतां (for अयुतशस्). $D_{3.4.9}$ अस्य (for the second च). $M_{3-5}$ यौधान्; $Ca.d.s$ as in text.

17 $K_5$ om. 17 (cf. v.l. 16). — [a]) $D_{10}$ अचिंत्ये; $G_5$ अनिंदिते (for अनिन्द्ये). — [b]) $D_{3.4}$ तथैव (for तदस्त्रम्).

18 $K_5$ om. 18 (cf. v.l. 16). Before 18, $K_1$ Dn $D_3$ ins. वैशं° उ°. — [a]) N (except $K_1$; $K_{2.3}$ missing;

# ६२

C. 5. 2429
B. 5. 63. 1
K. 5. 63. 1

दुर्योधन उवाच ।
सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ १
सर्वे स्म समजातीयाः सर्वे मानुषयोनयः ।
पितामह विजानीषे पार्थेषु विजयं कथम् ॥ २
नाहं भवति न द्रोणे न कृपे न च बाह्लिके ।
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ॥ ३
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे ।
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः ॥ ४
ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ।
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ॥ ५
विदुर उवाच ।
शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ ६

---

K5 om.) तथा; G4 यथा (for अथ). K4 B2.4 Dn Ds D3-6.9 नृपतींद्र (for नृपतौ तु). D2 T1 च (for तु). K1 D7.8.10 तस्मिन् (for भीष्मे).

Colophon missing in K2.3. — *Sub-parvan:* K1.4.5 B Dn Ds D5-8.10 संजययान; D1 संजययानसंधि; D2 यानसंधि; M संजयप्रतियान. — *Adhy. name:* D2 कर्णप्रतिज्ञा; G5 कर्णास्त्रनिक्षेपः; M कर्णनिर्गमनं. — *Adhy. no.* (figures, words or both): K1 62; D5 61; D6 58; D7 G2.3.5 M1.4 63; T G4 M2.3.5 64; G1 65. — *S'loka no.:* Dn D8 18.

## 62

☞ This adhy. is missing in K2.3 (cf. v.l. 5. 41. 1; 32. 15).

1 $^a$) S मनुष्यैस्तु (G3 °ष्याणां). — After 1, N (K2.3 missing) ins.:

355* वयं च तेऽपि तुल्या वै वीर्येण च पराक्रमैः ।
समेन वयसा चैव प्रातिभेन श्रुतेन च ।
अस्त्रेण योधयुग्यासु शीघ्रत्वे कौशले तथा ।

[ (L. 1) K4 D1.3.4.9 च; D5.6.8 न (for ऽपि). K1 D7 वीर्ये चैव पराक्रमे (D7 °मैः). — (L. 2) Some MSS. Ca. d शमेन; D1 दमेन (for समेन). K1.5 (m as in text). D1 Ca. d वर्चसा; D8 यश° (for वय°). K4 D3.4 प्रभावेन; K5 प्रज्ञया च; D1 पांडित्येन; Ca as in text. — (L. 3) K4 D3.4.9 योधयोगेषु; B °योग्यासु (B2 °योग्या च); Dn2 D5 (m as in text).6 °युग्या वै (Dn2 च). K1.5 D2.7.8.10 अस्त्रलाघवयोग्यासु (D2 °र्ये); D1 शास्त्रलाघवबुद्ध्या च. Ca cites योग्या, Cn योधयुग्या, Cs लाघवयोग्यासु. D1.2 शीघ्रता; D5 (m as in text).6 सुशीघ्रे (for शीघ्रत्वे). K (K2.3 missing) D1.3.4.8.9.10 (*sup. lin.* as above) कौशलेन च (for कौशले तथा). ]

2 $^a$) D1.6 च; G2 सु- (for स्म). D2 सह° (for सम°). — $^b$) S सर्वे स्म समयोनयः. — $^c$) S (except T2 G4) न (for वि-). — $^d$) S (except T2) विजयः.

3 $^c$) G4.5 वा (for च). K5 पराक्रम्य (for नरेन्द्रेषु). G3 अन्येषु पार्थिवेंद्रेषु. — $^d$) K1 m पराक्रांतिं; K5 भारमेतं; D8 पराक्रमं (for °क्रम्य).

4 $^b$) D7 तथा; G5 (*sup. lin.* as in text) मम (for च मे). — $^d$) S ससोमकान् (for शितैः शरैः).

5 $^b$) D1.2 विधिवद् (for विविधैर्). — $^c$) B4 M तर्पयिष्यामः. — $^d$) B1.3 अन्यैर्; Ds अन्नैर् (for अश्वैर्). D1 S धनैरपि (D1 °स्तथा) (for धनेन च). — After 5, N (K2.3 missing) ins. a passage given in App. I (No. 3); while S ins.:

356* सुखान्यवाप्य सहिताः कृत्वा कर्म सुदुष्करम् ।
विस्रब्धाः स्वर्गमेष्यामः काले प्राप्ते गतज्वराः ।
अथाब्रवीन्महाराजो धृतराष्ट्रः सुदुर्मनाः ।
विदुरं विदुषां श्रेष्ठं सर्वपार्थिवसंनिधौ ।
मोहितो मृत्युपाशेन कालस्य वशमागतः । [5]
तात कर्णेन सहितः पुत्रो दुर्योधनो मम ।

[ (L. 2) T1 G1-4 सर्वे एष्यामः; G5 तु भविष्यामः (for स्वर्गमे°). T1 G4 °क्लमाः (for °ज्वराः). G5 प्राप्तकालहतज्वराः (for the posterior half). — (L. 3) T1 G4.5 महाराज. ]

6 K5 missing from 5. 62. 6 to 5. 67. 4. The MS. is ignored here. S transp. 6$^{ab}$ and 6$^{cd}$. — $^a$) D5 (by corr.) S (except M5) शकुनानां. D1.2 T G वधार्थाय (for इहा°). — $^b$) T2 G2-5 M (except M2) पाशान् (for °शं). T1 G1 भूमौ पाशानयोजयत्. — $^c$) B (except B2) T2 G1.2 शकुनिकः. S राजन् (for तात). — $^d$) K1 D7 नः श्रुतं; Dn1 D2.8 शुश्रुमः; Cs as in text. S पूर्वमासीदिति श्रुतिः (T1 G5 °तः).

तस्मिन्द्वौ शकुनौ बद्धौ युगपत्समपौरुषौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ ७
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स गच्छतः ॥ ८
तथा तमनुधावन्तं मृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ९
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ १०
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे ।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ११

## शाकुनिक उवाच ।

पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ १२

## विदुर उवाच ।

तौ विवादमनुप्राप्तौ शकुनौ मृत्युसंधितौ ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥ १३
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्यापरिज्ञातो जग्राह मृगयुस्तदा ॥ १४
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥ १५
संभोजनं संकथनं संप्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ १६
यस्मिन्काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ १७
येऽर्थं संततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ १८
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।

C. 5. 2468
B. 5. 64. 14
K. 5. 64. 14

---

7 [a]) $K_{4}$ B (except $B_{3}$) Dn $D_{3-6.8.9}$ तौ (for द्वौ). — [b]) $B_{4}$ D (except $D_{1.2.7}$) सहचारिणौ; $G_{2}$ युक्तपौरुषौ (for सम°). — [c]) T $G_{1.2}$ $M_{3-5}$ तौ पाशौ (for तं पाशं). — [d]) $K_{4}$ $D_{3.4.9}$ $T_{1}$ $G_{1.2.4}$ खेचरौ (for खचरौ).

8 [a]) $K_{1}$ Ca.d विहायः (for विहाय-). Cs.ap विहायसं (as in text). — [b]) $B_{3}$ $D_{8}$ $T_{2}$ शकुनिकस्. $D_{8}$ T $G_{5}$ (*sup. lin.*) तथा (for तदा). $D_{1.2}$ दृष्ट्वा श($D_{2}$ शा)कुनिबंधकः. — $G_{4}$ (hapl.) om. $8^{c}$–$10^{d}$. — [c]) $G_{5}$ सुनिर्विण्णः (for अनि°). $G_{3}$ अन्वधावत निर्विण्णः.

9 $G_{4}$ om. 9 (cf. v.l. 8). — [a]) B Dn $D_{2-4}$ अन्व° (for अनु°)! — [b]) $D_{6.8}$ मृगयं; S (except $M_{5}$) मृगघ्नं. — [d]) $D_{7.10}$ (m as in text) ददृशे (for ददर्श).

10 $G_{4}$ om. 10 (cf. v.l. 8). — [a]) $K_{1}$ $D_{7}$ $G_{5}$ $M_{1.3-5}$ शीघ्रौ (for शीघ्रं). — [b]) $D_{5}$ अन्व°; $T_{1}$ $G_{5}$ $M_{1-3}$ उप°; $G_{3}$ $M_{4.5}$ उपा° (for अनु°). — [d]) $Ds_{2}$ पप्रच्छ मुनिसत्तमः.

11 [b]) S मृगयोः ($G_{3.4}$ °वत्) (for °हन्). S (except $T_{2}$ $G_{1}$ $M_{1}$) मा (for मे). — [d]) $G_{4}$ M (except $M_{1}$) अनुधावति.

12 Dn $Ds_{2}$ $D_{1}$ शाकुनिः; $D_{9}$ $M_{3}$ शकुनिकः (for शाकु°). — [b]) $T_{2}$ transp. सहितौ and हरतो. $T_{1}$ $G_{1.5}$ हरतो मम गर्हि($G_{5}$ *sup. lin.* °र्वि)तौ. — [c]) $D_{5}$ एव; $G_{5}$ M (except $M_{1}$) तौ (for वै). $T_{2}$ $G_{3.4}$ $M_{3-5}$ वि($T_{2}$ नि)पतिष्येते (for विवदि°). — [d]) $G_{2.4}$ वै (for मे).

13 $K_{4}$ om. $13^{ab}$. — [b]) $M_{1}$ सहितौ (for शकुनौ). $K_{1}$ °खंडितौ; $B_{2}$ $D_{3}$ $M_{1}$ Ca.d °संदितौ; $D_{1}$ °संमतौ; $D_{5.6.9}$ °सन्नितौ; $T_{2}$ $G_{2.4}$ °संमितौ; $G_{1}$ °संहितौ; $G_{3.5}$ $M_{3-5}$ °संनिधौ (for °संधितौ). — [c]) $D_{1}$ विगाह्य; $M_{5}$ °हृष्य; Ca.d °गृह्य (as in text). S पाशं (for च सु-). — [d]) S संनिषी(T $G_{5}$ °षे)दतुः (for °पेततुः).

14 [a]) $T_{1}$ $G_{1}$ संप्रेक्ष्य (for संरब्धौ). — [b]) $K_{1}$ $T_{2}$ $G_{3.4}$ M (except $M_{1}$) °वेग° (for °पाश°). — [c]) $D_{7}$ अपरिश्रांतौ; S अप्रमत्तौ तौ ($G_{5}$ तु); Ca.d अपरिज्ञातः (as in text). — [d]) $K_{4}$ B D (except $D_{7.10}$) $G_{2}$ मृगहा (for °युस्).

15 [a]) $K_{1}$ $D_{7.10}$ ज्ञातिभिः सार्धं (for ज्ञातयोऽर्थेषु). — $G_{4}$ om. $15^{c}$–$17^{d}$. — [c]) $K_{1}$ $D_{1.2.7.10}$ om. ते. $G_{5}$ मृत्युपाशम् (for ऽमित्रवशम्).

16 =(var.) 5. 39. 22. — $G_{4}$ om. 16 (cf. v.l. 15). — [b]) $T_{1}$ $G_{1.5}$ प्रीतिश्चैव परस्परं. — [d]) S ($G_{4}$ om.) विवादः (for °रोधः). $D_{1}$ T $G_{1.2}$ कथं° (for कदा°).

17 $G_{4}$ om. 17 (cf. v.l. 15). — [a]) $K_{4}$ B (except $B_{3}$) D (except $D_{1.2}$) ये स्म; $T_{1}$ $G_{1.5}$ येस्मिन् (for यस्मिन्). $D_{1}$ गृहे (for काले).

18 $G_{3}$ om. $18^{ab}$. — [a]) $D_{1}$ यत्र; $G_{4}$ येन (for येऽर्थं). $K_{1}$ T $G_{5}$ M तु (for ऽर्थं). $K_{1}$ संमतिम्; $Dn_{1}$ $D_{3}$ $D_{5.7.9.10}$ सततम्; S (except $M_{5}$; $G_{3}$ om.) सन्नतिम् ($M_{1}$ *inf. lin.* °च्चिधिम्) (for संततम्).

C. 5. 2468
B. 5. 64. 14
K. 5. 64. 14

धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ १९
इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु ॥ २०
वयं किरातैः सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवार्तिकैः ॥ २१
कुञ्जभूतं गिरिं सर्वमभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् ॥ २२
तत्र पश्यामहे सर्वे मधु पीतममाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसंमितम् ॥ २३
आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत्प्राश्य पुरुषो मर्त्यो अमरत्वं निगच्छति ॥ २४
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा ।
इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः ॥ २५

ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे ॥ २६
तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति संमोहात्प्रपातं नानुपश्यति ॥ २७
दुर्योधनो योद्धुमनाः समरे सव्यसाचिना ।
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम् ॥ २८
एकेन रथमास्थाय पृथिवी येन निर्जिता ।
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव ॥ २९
द्रुपदो मत्स्यराजश्च संक्रुद्धश्च धनंजयः ।
न शेषयेयुः समरे वायुयुक्ता इवाग्नयः ॥ ३०
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ ३१

इति श्रीमहाभारते उद्योगपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

19 = 5. 36. 58. — D3 (hapl.) om. 19. — $^{a}$) Ds D10 S (except G4) धूमायंति; Ca.d.s °यंते (as in text). — $^{b}$) K1 D1 G1 संहितानि (for सहि°).

20 $^{b}$) K4 D3.4.9 transp. गिरौ and मया.

21 $^{b}$) K1 (*sup. lin.* as in text) B3 Dn2 Ds2 D7 (before corr.) °मो गिरिमुत्तमं; D1.2 °मो दिशमुत्तरां (D2 °रं); S °मोत्तर(G5 °मोत्तम)पर्वतं. — G4 om. $21^{c}$–$23^{d}$. — $^{d}$) K4 B3.4 Dn2 Cn विद्याजंभकवार्तिकैः (K4 °काः); Dn1 D3.4.7 °जृंभकवाति(Dn1 °र्ति)कैः; D2 जंभविद्याकथातिगैः; T G1–3 M1.2 °जंभकसाधकैः (T1 G1.3 °नैः); G5 वेदाध्ययनशालिभिः; M3–5 °जंभकवादिकैः. Ca.s cite विद्याजंभकवातिकाः, Cd °वाहिकाः.

22 G4 om. 22 (cf. v.l. 21). — $^{a}$) T2 G2 कुंजभीतं; Ca.d कुंजीभूतं; Cs कुंजभूतं (as in text). — $^{c}$) M4.5 °गुणं.

23 G4 om. 23 (cf. v.l. 21). — $^{a}$) K4 B D (except D1.2.7) T1 G3 Ca अपश्याम वै (for पश्यामहे). Cd cites तच्च पश्यामहे. — $^{b}$) K4 Cs पीतं समाक्षिकं; B Dn D5.6.8.9.10 m Cap पीतकमा°; T1 G1 पीनं त्वमी°; T2 G5 पीतं (G5 °नं) च मा°; M पीनममा°; Ca पीतममाक्षिकं (as in text). — $^{c}$) K1 Dn2 Ds D6.8.10 Ca.d मरुप्रपाते (Ds D10 °त-); D2.7 Cs मेरुप्रपाते; T G1–3 M1 (*inf. lin.*).3–5 मरुप्रपात-; G5 बहुप्रपात-; M1 (orig.) मरुप्रवात-. — $^{d}$) Ds विनष्टं. K1 M (except M1) कुंभसंनिभं; Ca.d as in text.

24 $^{c}$) K4 B Dn2 Ds D1.2.8 प्राप्य (for प्राश्य). — $^{d}$) K4 B D (except D7.10) [ऽ]प्यमरत्वं; T1 G1 ह्यमरत्वं; G5 अमृतत्वं (for अमरत्वं). K4 B Dn Ds D3–6.8.9 नि(Dn1 हि)यच्छति; D1.2 च ग° (for निग°).

25 G3 (hapl.) om. $25^{a}$–$27^{b}$. — $^{c}$) G5 एवं (for ते). — $^{d}$) Dn1 जृंभसाधकाः; Ds D10 (*sup. lin.*) जंभवातिकाः; M जंभपाठकाः.

26 G3 om. 26 (cf. v.l. 25). — $^{a}$) K1 Ds2 D2.6 T G (G3 om.) तं (for तद्). — $^{b}$) K4 Ds D3.4.9 °तले (for °पते). — $^{c}$) T G1.2.5 M2–5 विविशुः; G4 ददृशुः (for विनेशुः). K4 D3.4.9 सर्वे (for तस्मिन्). — D6 om. $26^{d}$–$27^{a}$. — $^{d}$) K1 D7 सुदुर्गे; T G1.2.4 ते सर्वे; G5 सर्वे ते (for ससर्पे). B2 गिरिकंदरे. — After 26, T2 G2 ins.:

357* आशाबद्धाः पतन्ति स्म सर्वे एव गतासवः ।

28 $^{a}$) T G युध्यमानः; M युद्धमनाः (for योद्धु°). — $^{c}$) M2 पश्यति (for पश्यामि). — $^{d}$) K4 D7 च; T1 हि (for वा). S (except G4) °गतं (for °विधम्).

29 $^{ab}$) S एकेन पृथिवी येन रथमास्थाय नि°. — K4 B Dn Ds D1–6.8.9 ins. after $29^{ab}$: K1 D7.10, after 29:

## ६३

धृतराष्ट्र उवाच ।
दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ १
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रमिमीषसि ।
पञ्चानामिव भूतानां महतां सुमहात्मनाम् ॥ २
युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम् ।
परां गतिमसंप्रेक्ष्य न त्वं वेत्तुमिहार्हसि ॥ ३
भीमसेनं च कौन्तेयं यस्य नास्ति समो बले ।
रणान्तकं तर्कयसे महावातमिव द्रुमः ॥ ४
सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव ।
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥ ५
धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत् ।
शत्रुमध्ये शरान्मुञ्चन्देवराडशनीमिव ॥ ६
सात्यकिश्चापि दुर्धर्षः संमतोऽन्धकवृष्णिषु ।
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ७
यः पुनः प्रतिमानेन त्रीँल्लोकानतिरिच्यते ।
तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान् ॥ ८
एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।
आत्मा च पृथिवी चेयमेकतश्च धनंजयः ॥ ९
वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः ।

C. 5. 2491
B. 5. 63. 10
K. 5. 63. 10

---

358* भीष्मद्रोणप्रभृतयः संत्रस्ताः साधुयायिनः ।
विराटनगरे भग्नाः किं तत्र तव दृश्यताम् ।

[ (L. 1) $K_1$ $D_{1-4.7.9.10}$ षड्रथाः सानु($D_7$ °थानुप)-यायिनः (for the posterior half). — (L. 2) B transp. तव and दृश्य°. $K_{1.4}$ $D_{1-4.7.9.10}$ किं नु तद्विस्मृतं तव ($D_{3.4.9}$ च तत्) (for the posterior half). ]

— $^{c}$) $D_{2-4.9}$ $T_2$ $G_{3-5}$ M धीरः ($M_1$ *inf. lin.* वीरः as in text). — $^{d}$) $G_5$ निकृतिं; $C_s$ वीक्षितं (as in text).

30 $D_6$ om. $30^{c}$–$31^{d}$; $D_9$ om. $30^{c}$–$31^{c}$. — $^{c}$) $D_s$ निः (for न). — $^{d}$) $K_1$ $B_3$ $D_{1-4.8}$ वात° (for वायु°).

31 $D_6$ om. 31; $D_9$ om. $31^{abc}$ (cf. v.l. 30). — $^{c}$) $D_1$ लोके; $D_{3.4}$ मूढ (for युद्धे). — $^{d}$) $D_{3.4.9}$ transp. भवेत् and जयः.

Colophon missing in $K_{2.3.5}$. — *Sub-parvan:* $K_{1.4}$ B Dn Ds $D_{5-8.10}$ संजययान; M संजयप्रतियान. — *Adhy. name:* M (except $M_2$) विदुरहितोपदेशः. — *Adhy. no.* (figures, words or both): $K_1$ 64; $D_5$ 63; $D_6$ 60; $D_7$ T $G_{2.4}$ $M_{2.3.5}$ 65; $G_1$ 66; $G_{3.5}$ $M_{1.4}$ 64. — *S'loka no.:* Dn $D_8$ 27.

### 63

☞ This adhy. is missing in $K_{2.3.5}$ (cf. v.l. 5. 41. 1; 32. 15; 62. 6).

1 $^{b}$) $T_1$ $G_{3.5}$ M (except $M_5$) त्वा; $T_2$ $G_2$ ते (for त्वां).

2 $^{b}$) $K_{1.4}$ $D_{1.2.5-8}$ प्रसमीक्ष्यते ($D_1$ °से); B Dn Ds $D_{10}$ प्रजिहीर्षसि; $D_{3.4.9}$ सुसमीक्ष्यसे; $T_2$ (by corr.) प्रसमीष्यसि; $G_1$ प्रमिमीक्षसि; $G_5$ प्रमदिष्यसि (*sup. lin.* प्रशमिष्यसि). — $^{c}$) $M_{3-5}$ इह (for इव). — $^{d}$) $K_4$ B D (except $D_{1-4.7.9}$) लोकधा($D_s$ °चा)रिणां (for सुमहा°).

3 $^{a}$) $D_{3.4.9}$ तु (for हि). S कौरव्य ($T_2$ $G_2$ $M_1$ °व्यं) (for कौन्तेयं). — $^{b}$) $D_8$ T $G_{1.3-5}$ M इव (for इह). $D_1$ स्थितं (for आस्थितम्). $T_2$ $G_2$ परमं धर्ममा-स्थितं. — $^{c}$) $D_1$ शक्तिम् (for गतिम्). $B_{1.2.5}$ Dn Ds $D_{7.10}$ अभिप्रेक्ष्य ($B_{1.2}$ $Dn_2$ °त्य); $B_{3.4}$ $D_{5.6.8}$ Cn असंप्रेत्य; S सुसंप्रेक्ष्य ($G_3$ °त्य) (for असंप्रेक्ष्य). — $^{d}$) $D_1$ S तत्वं (for न त्वं). $K_4$ B D जेतुम् (for वेत्तुम्). $T_2$ $G_2$ वेदितुम् (for वेत्तुमिह). $D_1$ इच्छसि (for अर्हसि).

4 $^{a}$) $T_2$ $G_{2.4}$ कौरव्यं (for कौन्तेयं). — $^{b}$) $T_1$ $G_{1.5}$ युधि (for बले). — $^{c}$) $K_1$ $D_7$ रणाय किं (for रणान्तकं). $K_1$ $B_4$ Dn $D_{2-6.8-10}$ तर्जयसे; Ds तर्कयसि; $D_7$ प्रार्थे°; Ca. d as in text. $T_2$ $G_4$ कथं तर्कयसे वीरं ($G_4$ °र).

6 $B_3$ $D_7$ $M_2$ om. (hapl.) 6–8. — $^{b}$) $G_{3.5}$ किम् (for कम्). $Ds_2$ $D_{1.6.8}$ $M_{3.4}$ शांतयेत्; T G नाशयेत् (for शातयेत्). — $^{c}$) $T_2$ $G_2$ स शत्रुषु (for शत्रुमध्ये).

7 $B_3$ $D_7$ $M_2$ om. 7 (cf. v.l. 6). — $^{c}$) $D_{3.4.9}$ तां (for ते).

8 $B_3$ $D_7$ $M_2$ om. 8 (cf. v.l. 6). — $^{a}$) $T_1$ $G_{1.5}$ यः पुमान्; $G_4$ पुरुषः (for यः पुनः). S ($M_2$ om.) प्री($M_5$ प्र)तिमानेव; Ca. d. s प्रतिमानेन (as in text). — $D_1$ om. $8^{d}$–$10^{a}$.

9 $D_1$ om. 9 (cf. v.l. 8). — $^{b}$) $T_2$ $G_2$ सह-

C. 5. 2491
B. 5. 65. 10
K. 5. 65. 10

अविषह्यं पृथिव्यापि तद्बलं यत्र केशवः ॥ १०
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम् ।
वृद्धं शांतनवं भीष्मं तितिक्षस्व पितामहम् ॥ ११
मां च ब्रुवाणं शुश्रूष कुरूणामर्थवादिनम् ।
द्रोणं कृपं विकर्णं च महाराजं च बाह्लिकम् ॥ १२
एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा ।
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ १३
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः ।
उत्सृज्य गाः सुसंत्रस्तं बलं ते समशीर्यत ॥ १४
यच्चैव तस्मिन्नगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ १५
अर्जुनस्तत्तथाकार्षीत्किं पुनः सर्व एव ते ।
सभ्रातृनभिजानीहि वृत्त्या च प्रतिपादय ॥ १६

इति श्रीमहाभारते उद्योगपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

(for च स-).

10 $D_1$ om. 10[a] (cf. v.l. 8). — [a]) $K_{1.4}$ $D_{3-8}$ $G_5$ च; $D_2$ T $G_{1-4}$ हि; $D_{10}$ सु- (for अपि). — [b]) $D_2$ धर्मात्मा; S गता° ($G_5$ शांता°) (for यता°). $Dn_2$ $D_{1.5.6}$ $G_5$ $M_5$ पांडवाः. $D_{10}$ गतात्मा पांडवान्प्रति. — [c]) $D_{2-4.9}$ S पृथिव्यां तु ($D_{2-4.9}$ हि).

11 [a]) S न त्वा ($T_1$ $G_5$ तत्त्वा; $T_2$ $G_{1.2.4}$ तत्त्वां; $G_3$ तत्त्वं) ब्रवीम्यहं युद्धे; Ca.d (in prose order) as in text. — [b]) $B_3$ अनु°; $G_3$ धर्म° (for अर्थ°). — [d]) $T_2$ $G_{2.5}$ निरीक्षस्व; Ca.d.s तिति° (as in text).

12 [a]) $D_8$ मध्ये; Ca.d.s मां च (as in text). $K_1$ $D_{5.6.8}$ $T_1$ $G_{2.4}$ $M_5$ शुश्रूषुः; $K_4$ $D_1$ $T_2$ $G_{1.3.5}$ $M_4$ (*inf. lin.*) शुश्रूषं; $M_{2-4}$ शुश्रूषः ($M_2$ °षा); Ca.d.s as in text. — [b]) $K_4$ B (except $B_5$) Dn Ds $D_{1.3.4.9.10}$ अर्थदर्शिनं ($D_1$ °नां); $D_{6-8}$ $T_1$ $G_{4.5}$ अर्थवादिनां. — [c]) $D_{1.2}$ transp. द्रोणं and कृपं. $B_3$ $D_{3.4.9}$ कर्णं (for कृपं). $D_1$ च (for वि-). — [d]) $D_{1.2}$ बाह्लिकं द्रौणिमेव च.

13 [a]) $D_{3.4.9}$ च (for एव). — [b]) $K_4$ $D_{5.6.8}$ क्षंतुम्; $D_1$ स्मर्तुम् (for मन्तुम्). — [c]) $Dn_1$ $D_{3.4.9}$ $T_2$ $G_{2.3}$ सर्व- (for सर्वे).

14 [d]) $D_{1.2}$ समदीर्यत; $T_1$ $G_1$ स व्यशी° (for समशी°).

15 =(var.) 5. 58. 26; =(var.) 5. 122. 53. — [a]) $D_{1.3.4.9}$ यथा (for यच्च). B (except $B_3$) Dn Ds transp. तस्मिन् and नगरे. $G_4$ यथैव तस्य नगरे. — [d])=5. 58. 26[d]; 122. 53[d]; 136. 8[d].

16 [a]) $D_{3.4}$ तु; $D_6$ तं (for तत्). $K_1$ $D_{3.4.7.10}$ तदा (for तथा). — [c]) $G_5$ स्व° (for स°). $D_{3.4.9}$ सभ्रातृभिर्विजानीहि. — [d]) $B_{1.5}$ भृत्यान्; S प्रीत्या; Cn वृत्या (as in text). $K_4$ $D_{5.6.8}$ तान्; $B_4$ $Dn_2$ $D_{1.10}$ तं; $D_2$ तां (for च). $B_{1.4}$ परिपालय; $G_5$ प्रतिपालय; Cn as in text. $B_{2.3}$ $Dn_1$ Ds भृत्यां(Ds भ्रातॄं)श्च परि($B_3$ प्रति)पालय.

Colophon missing in $K_{2.3.5}$. — *Sub-parvan:* $K_{1.4}$ B Dn Ds $D_{5-8.10}$ संजययान; $D_2$ यानसंधि; $G_1$ M संजय($M_3$ om. it)प्रतियान ($G_1$ cont. समाप्त). — *Adhy. name:* $D_2$ विदुरवाक्यं; M (except $M_2$) धृतराष्ट्रहितोपदेशः ($M_4$ °श). — *Adhy. no.* (figures, words or both): $D_5$ 64; $D_6$ 61; $D_7$ T $G_{2.4}$ $M_{2.3.5}$ 66; $G_1$ 67; $G_{3.5}$ $M_{1.4}$ 65. — *S'loka no.:* $Dn_1$ 17; $Dn_2$ $D_8$ 16.

## 64

☞ This adhy. is missing in $K_{2.3.5}$ (cf. v.l. 5. 41. 1; 32. 15; 62. 6). T $G_{1.5}$ read this adhy. after adhy. 57; $G_2$ om. this adhy. altogether.

1 [c]) $K_4$ $D_{5.6}$ °भाग; $D_{3.4.8.9}$ S (except $G_{3.4}$; $G_2$ om.) °भागं.

2 Before 2, $G_5$ $M_1$ ins. धृतराष्ट्रः. — [a]) $M_2$ तत् (for यत्). — $K_4$ (hapl.) om. 2[b]–3[c]. — [c]) $D_{3.4.9}$ अब्रवीत् (for उवाच). $D_{3.4.9}$ एवं; M त्वा (for त्वां).

3 For an anticipation of st. 3–11 in S cf. note at the end of adhy. 31.

4 [b]) $G_5$ सुयोधनं (for च संजय). — [c]) $T_2$ शल्यं (for कर्णं). $G_5$ द्रोणं चैव कृपं चैव.

5 [a]) $D_{7-10}$ $T_1$ $G_{1.4.5}$ सौमदत्तिं ($D_8$ °त्तं). — [d]) $T_2$ विशां पतिं (for विविं°).

## ६४

वैशंपायन उवाच ।

एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनम् ।
पुनरेव महाभागः संजयं पर्यपृच्छत ॥ १
ब्रूहि संजय यच्छेषं वासुदेवादनन्तरम् ।
यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ २

संजय उवाच ।

वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनंजयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥ ३
पितामहं शांतनवं धृतराष्ट्रं च संजय ।
द्रोणं कृपं च कर्णं च महाराजं च बाह्लिकम् ॥ ४
द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम् ।
दुःशासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ ५
विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि कौरवम् ॥ ६
सैन्धवं दुःसहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसंधं च पार्थिवम् ॥ ७
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं
　समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते
　समानीता धार्तराष्ट्रेण सूत ॥ ८
यथान्यायं कौशलं वन्दनं च
　समागता मद्वचनेन वाच्याः ।
इदं ब्रूयाः संजय राजमध्ये
　सुयोधनं पापकृतां प्रधानम् ॥ ९
अमर्षणं दुर्मतिं राजपुत्रं
　पापात्मानं धार्तराष्ट्रं सुलुब्धम् ।
सर्वं ममैतद्वचनं समग्रं
　सहामात्यं संजय श्रावयेथाः ॥ १०
एवं प्रतिष्ठाप्य धनंजयो मां
　ततोऽर्थवद्धर्मवचापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य
　पार्थो धीमाँल्लोहितान्तायताक्षः ॥ ११
यथा श्रुतं ते वदतो महात्मनो
　मधुप्रवीरस्य वचः समाहितम् ।
तथैव वाच्यं भवता हि मद्वचः
　समागतेषु क्षितिपेषु सर्वशः ॥ १२
शराग्निधूमे रथनेमिनादिते
　धनुःस्रुवेणास्त्रबलापहारिणा ।

C. 5. 2510
B. 5. 66. 13
K. 5. 59. 12

---

6 $^{b}$) $D_5$ जयसेनं (for °त्सेनं). $G_3$ पार्थिवं च महारथं. $D_1$ (hapl.) om. $6^{c}$–$7^{d}$.

7 $D_1$ om. 7 (cf. v.l. 6). — $^{a}$) $M_{3-5}$ दुष्प्रहं (for दुःसहं). — $^{d}$) $D_5$ जरासंधं; $D_{6.8}$ जारासंधिं (for जल°). S ($G_2$ om.) पौ($T_1$ $G_4$ कौ)रवं (for पार्थिवम्).

8 $^{a}$) $D_7$ एव (for अपि). $T_1$ $G_{1.4.5}$ भूमिपालाः (for पार्थिवाः). — $^{b}$) $T_1$ $G_1$ प्रियाय; $G_4$ प्रियार्थाय (for प्रियार्थम्). — $D_6$ om. $8^{d}$–$9^{a}$. — $^{d}$) B Dn Ds $D_{3.4.7.9.10}$ होतुं (for सूत).

9 $D_6$ om. $9^{a}$ (cf. v.l. 8). — $^{a}$) $D_1$ °वयः (for °न्यायं). $D_{1-4.9}$ transp. कौशलं and वंदनं. S ($G_2$ om.) कुशलं (for कौ°). $G_3$ ब्रूहि नः (for वंदनं). — $^{d}$) $B_3$ Dn Ds निधानं (for प्रधा°).

10 $^{a}$) $K_1$ दुर्मर्षणं (for अम°). — $^{b}$) $D_{3.4.9}$ सगर्वं (for सुलुब्धम्). — $^{c}$) $D_1$ सर्वं मे तद्वचनं वै समग्रं; $D_{3.4.9}$ सर्वांश्चैतान्मद्वचनं समग्रं.

11 $^{a}$) S ($G_2$ om.) परिष्वज्य (for प्रति°). — $^{b}$) T $G_{1.5}$ चारु (for चापि). — $^{c}$) $G_5$ चेदं (for इदं). $D_{1.2}$ निरी° (for समी°). $D_{3.4.9}$ प्रोवाचेदं वचनं वासुदेवं. — $^{d}$) $B_{2.4}$ $G_1$ लोहितपद्मनेत्रः; $Dn_1$ $D_{3.4.9}$ लोहिताक्षः प्रतीक्ष्य; $G_5$ लोहिततोयदाक्षः; Cn लोहितान्तायताक्षः (as in text).

12 $^{a}$) $K_1$ $D_{5.6.8}$ वो वचनं (for ते वदतो). — $^{b}$) $D_1$ S ($G_2$ om.) यदु° (for मधु°). $D_{5.6.8}$ $G_4$ समीहितं. — From here up to 5. 66. 10, the collations of $B_2$ are shown wherever possible, as the fol. is torn, and a part of it lost. — $^{c}$) $K_1$ $D_5$ (m as in text). $_{6.8}$ महता (for भवता). S (except $M_2$; $G_2$ om.) अपि (for हि). $K_1$ $D_{1.2.5.8}$ महद्वचः (for हि म°). $G_5$ संजय (for मद्वचः).

13 $^{a}$) $B_2$ missing. $K_4$ Dn Ds $D_{7.10}$ महाशराग्नौ

C. 5. 2510
B. 5. 63. 13
K. 5. 59. 12

यथा न होमः क्रियते महामृधे
तथा समेत्य प्रयतध्वमादृताः ॥ १३
न चेत्प्रयच्छध्वममित्रघातिनो
युधिष्ठिरस्यांशमभीप्सितं स्वकम् ।
नयामि वः स्वाश्वपदातिकुञ्जरा-
न्दिशं पितॄणामशिवां शितैः शरैः ॥ १४
ततोऽहमामन्त्र्य चतुर्भुजं हरिं
धनंजयं चैव नमस्य सत्वरः ।
जवेन संप्राप्त इहामरद्युते
तवान्तिकं प्रापयितुं वचो महत् ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## ६५

वैशंपायन उवाच ।
दुर्योधने धार्तराष्ट्रे तद्वचोऽप्रतिनन्दति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरेश्वराः ॥ १
उत्थितेषु महाराज पृथिव्यां सर्वराजसु ।
रहिते संजयं राजा परिप्रष्टुं प्रचक्रमे ॥ २
आशंसमानो विजयं तेषां पुत्रवशानुगः ।
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥ ३
धृतराष्ट्र उवाच ।
गावल्गणे ब्रूहि नः सारफल्गु
स्वसेनायां यावदिहास्ति किंचित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं
किमेषां ज्यायः किमु तेषां कनीयः ॥ ४

---

रथवायुनोद्धते; Cn presupposes the text reading! — $^b$) K1.4 D1.5–8 °णाश्वबलप्रसा(D1.7 °हा)रिणा (reading implied by Cn)). — $^c$) B3 कुरुते (for क्रियते). D1.7 महाध्वरे; D3.4.9 मया मृधे; D10 रणाध्वरे (for महामृधे). — $^d$) B Dn Ds समेत्य सर्वे (for तथा समेत्य). G3 M इह यतध्वम्; G4 विघटयध्वम् (for प्रयतध्वम्). T1 G1.5 आगताः (for आदृताः).

14 $^b$) T G1.5 अंशकमीप्सितं स्वकं; G3.4 M अंशमभीप्स(G3.4 °प्सि)तः स्वकं. — $^d$) B3 असितां (for अशिवां).

15 $^a$) K1 D5.6.8 महाचतुर्भुजं; B1.2.4.5 Dn Ds तदा धनंजयं; B3 D7.10 हरिं चतुर्भुजं (by transp.); D3.4.9 तदा चतुर्भुजं. K4 विभुं (for हरिं). — $^b$) B (except B3) Dn Ds चतुर्भुजं (for धनंजयं). D3.4.9 S (G2 om.) सत्वरं. — $^d$) K1 D5–8.10 transp. वचो and महत्.

Colophon missing in K2.3.5; B2 T2 G1.2 om. it. — *Sub-parvan:* K1.4 B1.3–5 Dn Ds D1.5–8.10 संजययान; D2 यानसंधि; M1 संजयप्रतियान; M3–5 संजयप्रतियान and संजययान; to these all except K4 B1.5 D2.3 add समाप्त. — *Adhy. name:* M1 अर्जुनोद्धतवचनं; M3–5 अर्जुनोद्धतवचनकथनं. — *Adhy. no.* (figures, words or both): K1 G3 M1.4 66; D5 65; D6 62; D7 G4 M2.3.5 67; T1 61; G5 60. — *S'loka no.:* Dn 15.

### 65

☞ This adhy. is missing in K2.3.5 (cf. v.l. 5. 41. 1; 32. 15; 62. 6). The MS. B2 being damaged, its variants are given wherever possible (cf. v.l. 5. 64. 12).

1 $^b$) B D (except D1–4.9) नाभि° (for ऽप्रति°). — $^d$) K1 D10 जनेश्वराः; Dn Ds D5.6.8 नरर्षभाः; T2 G2.4 नराधिपाः (for नरेश्वराः).

2 $^{cd}$) T1 प्रति° (for परि°). G5 रहिते नृपतीन्सर्वान्संजयं पर्यपृच्छत.

4 $^a$) A few T G MSS. गावद्गणे. D3.4.9 सारं च (for नः सार-). — $^b$) Dn1 D3.4.9 त्वं सेनयोर् (for स्वसेनायां). G4 सेनायां वा यदि वेहास्ति किंचित्. — $^c$) K1 S (except G4 M2) om. त्वं. Ds पांडवान् (for °वानां). G4 वेत्सि (for वेत्थ). D3.4.9 पांडवानां च निपुणं वेत्थ सर्वं. — $^d$) D10 transp. किमेषां and ज्यायः. K1 किमु चैषां; Dn1 किं नु तेषां; T1 M1.3.4 किमुतैषां. D10m G4 गरीयः (for कनीयः).

5 $^a$) K1 D7.10 त्वं सेनयोः; T1 G1.5 समेतयोः (for

त्वमेतयोः सारवित्सर्वदर्शी
धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टः संजय ब्रूहि सर्वं
युध्यमानाः कतरेऽस्मिन्न सन्ति ॥ ५

संजय उवाच ।

न त्वां ब्रूयां रहिते जातु किंचि-
दसूया हि त्वां प्रसहेत राजन् ।
आनयस्व पितरं संशितव्रतं
गांधारीं च महिषीमाजमीढ ॥ ६
तौ तेऽसूयां विनयेतां नरेन्द्र
धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां संनिधौ तद्वदेयं
कृत्स्नं मतं वासुदेवार्जुनाभ्याम् ॥ ७

वैशंपायन उवाच ।

ततस्तन्मतमाज्ञाय संजयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ८
संपृच्छते धृतराष्ट्राय संजय
आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।
सर्वं यावद्वेत्थ तस्मिन्यथाव-
द्याथातथ्यं वासुदेवेऽर्जुने च ॥ ९

C. 5. 2522.
B. 5. 67. 10
K. 5. 66. 10

इति श्रीमहाभारते उद्योगपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

त्वमे°). D1.3.4 S (except T2 G4 M2) सर्वव(D3.4 °वि)त् (for सारवित्). K4 D9 सर्वविचारदर्शी (for सारवित्सर्व°). — b) T2 G2 निपुणं. — c) M स पृष्टः सन् (for स मे पृष्टः). — d) D5 प्रयुध्य° (for युध्य°).

6 a) G1 न त्वा; G3 त्वा न; M3-5 त्वां (for न त्वां). — M2 om. from हि त्वां up to निपुणौ in 7b. — b) D1.2 अभ्यसूया हि (for असूया हि त्वां). T2 G1.2 असूयां. S (except G4.5 M5; M2 om.) त्वा (for त्वां). K4 B Dn Ds D3-10 प्रविशेत; M3-5 °सहेत्तु (for °सहेत). — c) T1 G1.5 आनायस्व (for आन°). K1 D10 शंसित°; K4 B Dn Ds D1.2.5.6.8 महा° (for संशित°).

7 M2 om. up to निपुणौ in 7b (cf. v.l. 6). — a) T1 विनयेते. — b) K1 D7.10 धर्माभिज्ञौ (for धर्मज्ञौ तौ). — c) D1 ज्ञात्वा (for तु त्वां). T1 M (except M2) त्वा (for त्वां). — d) M (except M2) मंत्रं (for मतं). K4 B Dn Ds D5.6.8.10 केशवपार्थयोर्यत् (for वासुदेवा°).

8 B (except B5) om. the ref. — After the ref., Dn D2-6.8.9 ins.:

359* इत्युक्तेन च गान्धारी व्यासश्चात्राजगाम ह ।
आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ।

— After 8ab, K1 D8 ins.:

360* त्रिकालदर्शी भगवान्धृतराष्ट्रं महामुनिः ।

— c) Dn2 Ds D5.6 महाप्रज्ञः.

9 Before 9, K1.4 B Dn Ds D3-6.8.9 ins. व्यास उ°. — b) D3.4.9 एव (for एषो). K1 D7 अभियुंक्ते; T G1.2 अनि° (corrupt); Ca अनु° (as in text). — d) T2 G (except G1) यथातथ्यं. K1 D10 यदूचतुर्वासुदेवार्जुनौ च; D1 यथातथ्यं वासुदेवार्जुनौ च.

Colophon missing in K2.3.5; D2.8 om. it. — *Sub-parvan:* K1 B Dn D5-7.10 M यानसंधि; K4 संजययान; Ds1 संजययारसंधि (sic); Ds2 संजयसंधि. — *Adhy. name:* G1 व्यासागमनं; M व्यास(M5 वासुदेव)-वाक्यं. — *Adhy. no.* (figures, words or both): K1 T G2.3 M1.4 67; D5 G5 66; D6 63; D7 G1.4 M2.3.5 68. — *S'loka no.:* Dn D8 10.

## 66

☞ This adhy. is missing in K2.3.5 (cf. v.l. 5. 41. 1; 32. 15; 62. 6). The MS. B2 being damaged, its variants are given wherever possible (cf. v.l. 5. 64. 12).

1 D2 वैशं° उ° (for संजय उ°). — d) K1m B (B2 damaged) Dn2 D1.5 (before corr.).6.7.9.10 Cn स(K1 पू)र्वभावाय; Ca.d.s as in text. B1.3.5 Dn2 D2.7.8.10 Ca संमतौ; Cd.n.s संमितौ (as in text). K4 पूर्वदेवौ सनातनौ; S पूर्वभाव(T1 G1 °ग)समन्वितौ.

2 a) K4 B1.4 Dn2 D5.6.10m Cn व्यामांतरं; B3 भावांतरं; D1-4.7.9.10 दिवोंतरं; Ca.d.s व्यामन्तरं (as in text). — b) B1.3.4 Dn2 D3-6 यथायुक्तं; G4 युक्तरूपौ (for यथायुक्तं). S (except G2) मनस्विनौ (M2 विचक्षणौ); Cs as in text. — d) D7 प्रतिवर्तेते (for वर्तेते

# ६६

C. 5. 2523
B. 5. 68. 1
K. 5. 67. 1

संजय उवाच ।
अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।
कामादन्यत्र संभूतौ सर्वाभावाय संमितौ ॥ १
द्यामन्तरं समास्थाय यथायुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ २
सापह्नवं पाण्डवेषु पाण्डवानां सुसंमतम् ।
सारासारबलं ज्ञात्वा तत्समासेन मे शृणु ॥ ३
नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान्घोरसंकाशान्क्रीडन्निव जनार्दनः ॥ ४
पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५
भूयो भूयो हि यद्राजन्पृच्छसे पाण्डवान्प्रति ।
सारासारबलं ज्ञातुं तन्मे निगदतः शृणु ॥ ६
एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ७
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ॥ ८
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ ९
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ १०
स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव ।
अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान् ॥ ११
कालचक्रं जगचक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान्परिवर्तयतेऽनिशम् ॥ १२
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।

---

विभो). $K_1$ $D_{10}$ प्रभो; $Dn_1$ $Ds_2$ $D_8$ विभोः.

3 $^a$) $K_4$ B D (except $D_{1.8}$) $G_3$ कौरवेषु (for पाण्ड°). — $^b$) S इति राजसु ($T_2$ इतरेषु च) सत्तम ($G_3$ भारत); Cs पांडवेषु च संमतं; Ca.d पांडवानां तु संमतं. — After $3^{ab}$, Ds $D_{9.10}$ read $6^{ab}$ (Ds $D_9$ *repeating* it in its proper place). — $B_{1.3.4}$ $D_{3.4}$ om. $3^{cd}$. — $^c$) $K_1$ $Ds_1$ $D_{7.10}$ $G_4$ सारासारं बलं; Cs तथात्वेन बलं. $B_5$ Dn Ds $D_{10}$ ज्ञातुं; Cs ज्ञात्वा (as in text). $D_6$ सारासारं परिज्ञातुं. — $^d$) $B_5$ Dn तेजःपुंजावभासितं.

4 $^b$) $B_2$ $D_{3.9}$ S चैव (for चैद्यं). T $G_{1-4}$ M स (for च). $B_2$ जनार्दनः; $G_5$ महासुरं (for च माधवः). — $^c$) $K_1$ $D_{7.8}$ हतवान्; $G_5$ दानवान्. $T_2$ $G_{2.3}$ °संकाशः. — $^d$) B ($B_2$ om.) Dn Ds महाबलः (for जना°). — After 4, $G_5$ reads $8^c$ and $9^d$.

5 $T_1$ (hapl.) om. 5–7; $M_4$ (hapl.) om. 5–10. — $^c$) $B_2$ विशुद्धात्मा; $T_2$ $G_1$ विसृष्टा°; Ca.d विशि° (as in text). — After 5, $G_5$ reads $8^c$–$9^d$.

6 $T_1$ $M_4$ om. 6 (cf. v.l. 5). Ds $D_{9.10}$ read $6^{ab}$ after $3^{ab}$, Ds $D_9$ *repeating* it here. — $^a$) $K_4$ $D_{5.6.8.10}$ च; $G_5$ M ($M_4$ om.) अपि (for हि). — $D_{10}$ om. $6^{cd}$. — $^c$) $K_4$ $B_2$ $Dn_1$ $Ds_1$ $D_{2-6}$ $G_4$ सारासारं बलं; Cs तथात्वेन बलं. $K_1$ Cs ज्ञात्वा (for ज्ञातुं). — $^d$) $K_4$ B ($B_2$ damaged) D (except $D_{1.2.7}$; $D_{10}$ om.) तत्समासेन मे शृणु.

7 $T_1$ $M_4$ om. 7 (cf. v.l. 5). $G_3$ (hapl.) om. $7^b$–$8^a$ (cf. the reading of $D_1$ M for $8^a$).

8 $M_4$ om. 8 (cf. v.l. 5); Dn $G_{4.5}$ om. (hapl.) $8^{ab}$; $G_3$ om. $8^a$ (cf. v.l. 7). — $^a$) $K_4$ $Ds_2$ $D_{1.8}$ $M_{1.2}$ भस्मी- (for भस्म). $K_1$ $D_{2.7.10}$ $T_2$ $G_{1.2}$ सर्वं; $D_1$ M ($M_4$ om.) कृत्स्नं (for इदं). $G_5$ reads $8^c$–$9^d$ after 5. — $^d$) $K_4$ $D_{1.5}$ M ($M_4$ om.) भस्मी-; T G किंचित् (for भस्म). T G जनार्दने.

9 $M_4$ om. 9 (cf. v.l. 5). For $G_5$ cf. v.l. 8. — $^b$) $D_{10}$ (m as in text) धीर् (for ह्रीर्).

10 $G_5$ $M_4$ om. 10 (cf. v.l. 5). — $^c$) Ds विवेष्ट°; Ca विचेष्ट° (as in text). $D_8$ $T_1$ $G_{1.3}$ भूतानि; Ca.d भूतात्मा (as in text). — After 10, $D_8$ ins.:

361* भस्मीकुर्याज्जगत्सर्वं निमेषेणेति मे मतिः ।;

while T $G_{1.5}$ ins.:

362* यत्र भावेऽपि यद्राजन्पृच्छसे पाण्डवान्प्रति ।

11 $^a$) S पांडवं ($G_4$ °वे) (for °वान्). $D_1$ पूर्वं; $D_4$ सत्रे; $D_8$ सर्वं; $G_4$ कृत्स्नं; Ca.d.s सत्रं (as in text). — $^b$) $D_1$ लोकशंकाभयादिव.

12 $^d$) $K_4$ $G_5$ M (except $M_8$) भृशं (for ऽनिशम्).

13 $^a$) $D_7$ M transp. च and हि. $K_1$ $D_8$ एव; $T_1$ $G_{1.5}$ अपि (for च). $K_4$ $D_{1.2}$ एव (for हि). — $^c$)

ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ १३
ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ १४
तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## ६७

धृतराष्ट्र उवाच ।
कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व संजय ॥ १
संजय उवाच ।
विद्या राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥ २
विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ३
धृतराष्ट्र उवाच ।
गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ४
संजय उवाच ।
मायां न सेवे भद्रं ते न वृथाधर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ ५
धृतराष्ट्र उवाच ।
दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।

C. 5. 2543
B. 5. 69. 6
K. 5. 68. 6

---

$G_{1.5}$ ईष्टे हि; Ca ईशानः (for ईशते).

14 [a]) $G_4$ ईशिता; Cd ईशन् (as in text). $G_{1.5}$ °बाहुः (for °योगी). — [c]) M (except $M_2$) कर्म हि (for कर्माणि). — [d]) $K_1$m $D_7$ $G_5$ अनीशः; Ca.d.s कीनाशः (as in text). $K_4$ $B_4$ $Dn_2$ $D_{5.6.8}$ Cn वर्धनः; Ca.d.s दुर्बलः (as in text).

15 [c]) $Dn_2$ $D_{3.4}$ $G_{3.4}$ $M_4$ (*inf. lin.* as in text) एतम्; $D_2$ एनम्; $T_2$ $G_2$ एवम् (for ये तम्). $T_1$ $G_{1.5}$ एकं; $T_2$ एते (for एव). — [d]) $D_{1.2}$m.$_{3-6.8.9}$ $M_2$ transp. न and ते.

Colophon missing in $K_{2.3.5}$. — *Sub-parvan:* $K_{1.4}$ B D (except $D_2$) $G_1$ M यानसंधि ($D_8$ संजययानसंधि). — *Adhy. name:* $D_2$ वासुदेवमाहात्म्यं; $T_1$ $G_1$ भगवन्माहात्म्यं; M जनार्दनस्तुतिः. — *Adhy. no.* (figures, words or both): $K_1$ T $G_{2.3}$ $M_{1.4}$ 68; $D_5$ $G_5$ 67; $D_6$ 64; $D_7$ $G_{1.4}$ $M_{2.3.5}$ 69. — *S'loka no.:* Dn 15; $D_8$ 25.

**67**

☞ This adhy. is missing in $K_{2.3}$ (cf. v.l. 5. 41. 1; 32. 15). $K_5$ resumes from stanza 5 (cf. v.l. 5. 62. 6).

1 $D_6$ om. 1–5. Stanzas 1–4 are missing in $K_5$ (see above). — [c]) $D_{3.4.9}$ $M_2$ एतं (for एनं). — [d]) $K_4$ त्वम् (for मम).

2 $D_6$ om. 2 (cf. v.l. 1). — [a]) $K_1$ $D_{2.7.10}$ Ca.d विद्यां; B Dn $D_3$ $D_{1.3-5.8.9.10}$m शृणु; $G_4$ विद्धि (for the first विद्या). $K_1$ $D_{1.2.7.10}$(m as in text) वेत्थ ($D_2$ °द) त्वं (for ते विद्या). — [b]) $G_3$ $M_{1.3.4}$ मयि (for मम). $G_5$ राजन् (for विद्या). $K_{1.4}$ $D_{3.4.9}$ महीय($K_4$ $D_9$ °प)ते (for न हीयते). — $D_7$ om. $2^{cd}$. — [c]) B (except $B_4$) $Dn_2$ तपो° (for तमो°). — [d]) T G नाभि($G_5$ न स)जानासि.

3 $D_6$ om. 3 (cf. v.l. 1). — $3^b = 4^d$. — [d]) $B_{1.3.4}$ $D_3$ $D_{2-4.7.9.10}$(m as in text) T Cap प्रभवाव्ययं; Ca प्रभवाप्ययं (as in text).

4 $D_6$ om. 4 (cf. v.l. 1); $G_2$ om. 4–5. — [a]) A few S MSS. गावद्गणे. S ($G_2$ om.) ते (for ऽत्र). $K_1$ कथं; B (except $B_4$) [ऽ]धिका (for ऽत्र का). $D_3$ $D_{10}$ शक्तिर्; T $G_{3.5}$ विद्या (for भक्तिर्). — [b]) $D_3$ transp. ते and नित्या. $K_1$ नित्यं; $M_{2.5}$ नित्ये (for नित्या). — [c]) $D_3$ $G_5$ यथा (for यया). — $4^d = 3^b$.

5 $D_6$ $G_2$ om. 5 (cf. v.l. 1, 4). $K_5$ resumes! — [a]) $D_3$ सेवेत (for न सेवे). — [b]) $D_2$ मृषा-; Ca.d.s वृथा (as in text). $K_{1.5}$ $D_{7.10}$ वृथा($D_{7.10}$ मृषा)धर्म

C. 5. 2543
B. 5. 69. 6
K. 5. 68. 6

आप्तो नः संजयस्तात शरणं गच्छ केशवम् ॥ ६
दुर्योधन उवाच ।
भगवान्देवकीपुत्रो लोकं चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ७
धृतराष्ट्र उवाच ।
अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्ष्युर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ८
गान्धार्युवाच ।
ऐश्वर्यकाम दुष्टात्मन्वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ ९
वर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ १०
व्यास उवाच ।
दयितोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते संजयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥ ११
जानात्येष हृषीकेशं पुराणं यच्च वै नवम् ।
शुश्रूषमाणमेकाग्रं मोक्ष्यते महतो भयात् ॥ १२
वैचित्रवीर्य पुरुषाः क्रोधहर्षतमोवृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥ १३
यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः ॥ १४
एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जते ॥ १५
धृतराष्ट्र उवाच ।
अङ्ग संजय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां शान्तिमुत्तमाम् ॥ १६
संजय उवाच ।
नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।

---

न चाचरे. — [c]) $K_5$ $D_{7.10}$ (*sup. lin.* as in text) शुद्धभावस्ततो; B (except $B_4$) $Dn_2$ Ds $D_{1.3.4.9}$ शुद्धभाव($D_{3.4.9}$ °वा)गतो; Ca. d. n as in text.

7 [a]) $G_4$ पुंडरीकाक्षो (for देवकी°). — [b]) $K_4$ B D (except $D_{1.7.10}$) लोकान् (for लोकं). $K_1$ स्वं; $Dn_1$ M च; Ca. d. s चेत् (as in text). $K_1$ $M_{3-5}$ न हनिष्यति; $K_5$ (corrupt) नितर्प्येति (for निह°).

8 [a]) $K_4$ अद्य; $K_5$ $D_{2.10}$m $G_3$ अयं; $B_3$ $Dn_1$ Ds $D_{3-8}$ Ca. s अर्वाक्; $D_1$ सर्वान्; $D_9$ सर्वे; $T_2$ आवां; Cd. n अवाक् (as in text). — [b]) $K_5$ स (for सु-). $K_1$ $D_6$ न गच्छत्येषं दुर्मतिः. — $K_4$ (hapl.) om. 8[c]–9[b]. — [c]) $K_{1.5}$ B $D_{1-6.9}$ $G_4$ ईर्षुर्; $G_{2.3}$ ईर्ष्यांद् (for ईर्ष्युर्). $M_{2-5}$ ईर्ष्युं($M_{2.5}$ °र्षुं)र्दुरात्मवाञ्चीचः. — [d]) S शासना° (for वचना°).

9 $K_4$ om. 9[ab] (cf. v.l. 8). — [a]) $G_5$ ऐश्वर्यकामाद्दुष्टात्मा. — [b]) $G_4$ श्रेयसां. $K_5$ $B_3$ Dn $D_8$ $G_3$ शासनातिगः; $D_1$ वचनातिग. — [c]) $K_{1.5}$ $D_{7.8}$ ऐश्वर्यं जीवितं; $G_4$ ऐश्वर्यजीवितं; $G_5$ ऐश्वर्ये जीविते. — [d]) $T_1$ $G_{1.3.5}$ बालिशः.

10 [a]) $K_5$ शांतिं; $D_1$ हर्षं (for प्रीतिं). — [b]) S शोकाय (for शोकेन). $K_4$ योज°; $D_{7.10}$ पीड°; $T_1$ $M_4$ रंध°; $T_2$ $G_{2.3.5}$ रुंध°; $G_{1.4}$ $M_{1-3.5}$ रंध्र°; Cd अर्द°; Ca वर्ध° (as in text). B मां च शोकानले दहन्.

11 $D_1$ $G_5$ श्रीव्यासः. — [a]) Hypermetric! $K_4$ B Dn Ds $D_{1-6.8-10}$ प्रियो° (for दयितो°). $K_{1.5}$ $D_7$ कृष्णस्य दयितो राजन्. — [c]) $D_{3.4.9}$ यश्च (for यस्य).

12 [b]) $K_1$ $D_{1.2}$ यः; Ca. s यत् (as in text). $K_4$ $Dn_1$ $D_{3-6.9.10}$ $T_1$ नरं; B $Dn_2$ Ds Ca परं; $G_1$ (*inf. lin.*) भवं; Cd. s नवं (as in text). — [c]) $B_{1-3}$ $D_{5.8}$ एकाग्र्यं; $B_4$ Dn $D_6$ $M_{2.5}$ ऐकाग्र्यं (for एकाग्रं). — [d]) $K_{1.5}$ $D_{10}$ त्रास्यते; B $D_{1.2}$ मोक्षये; S त्राय° (for मोक्ष्य°). $K_{1.5}$ B $D_{1.2.7.10}$ त्वां महाभयात् (for महतो भ°).

13 [b]) $K_4$ °तमोहताः; $B_{2.4.5}$ Dn Ds $D_{2-6.9}$ °समावृताः; $D_1$ $M_4$ क्रोधामर्षतमोवृ($M_4$ °हृ)ताः; $G_5$ क्रोधमोहतमोवृताः; $M_1$ (*inf. lin.* as in text).$_{2.3.4}$ (*inf. lin.*).$_5$ °तमो($M_{2.5}$ °समा)हृताः. Cs cites तमोद्धताः. — [c]) $T_2$ $G_{2.5}$ श्रिताः; $G_1$ वीताः; $G_3$ स्थिताः; Ca. d. s सिताः (as in text).

14 [b]) S काममन्युवशानुगाः (T $G_{1.2}$ °वशंगताः). — [c]) $D_{3.4.9}$ अनु°; Ca. d. s अंध° (as in text). $G_5$ अंधैरंधा नीयमानाः. — [d]) $G_5$ तद्वते वै (for नीय°).

15 [a]) $G_4$ एकतरः; Cs एकायनं; Ca. d as in text. — [c]) $K_4$ $Dn_1$ $D_{1.5.6.8.9.10}$ (m as in text) Cnp अभ्येति; Cn अत्येति (as in text). — [d]) $K_1$ $D_8$ मुह्यन्; Ca. d. s महान् (as in text). $K_1$ $D_{7.8}$ नि($D_7$ न)मज्जति; $K_5$ न गर्हति; $B_{3.4}$ Dn Ds $D_{1-6.9.10}$ न सज्जति.

16 $D_6$ om. from 16 up to 14[ab] of the next adhy. — [a]) $K_4$ $D_{5.8}$ अथ; $T_1$ $G_{1.5}$ त्वं हि (for अङ्ग). — [d])

आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ १७
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ १८
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च मा ते च्यवतु नियच्छैतां यतस्ततः ॥ १९
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥ २०
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगतो योगाद्वशी तत्त्वे प्रसीदति ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## ६८

धृतराष्ट्र उवाच ।
भूयो मे पुण्डरीकाक्षं संजयाचक्ष्व पृच्छते ।
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ १

संजय उवाच ।
श्रुतं मे तस्य देवस्य नामनिर्वचनं शुभम् ।
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ २

C. 5. 2560
B. 5. 70. 2
K. 5. 69. 2

---

K4 B D (except D7.10; D6 om.) सिद्धिम् (for शान्तिम्).

17 D6 om. 17 (cf. v.l. 16). — [b]) K5 Dn1 Ds2 D10 विंद्यात्. — [c]) K4 आत्मात्मनो; Cs आत्मनस्तु (as in text). K1 कुतोपायो; D2–4 क्रियोपायं; S प्रियोपायो;° Cs as in text.

18 D6 om. 18 (cf. v.l. 16). — [c]) S भैमसेन (M °ना) (for ऽविहिंसा च). — [d]) T G (except G3) असंशयः; M2 न संशयं.

19 D6 om. 19 (cf. v.l. 16). — [a]) D1 G5 Ca.d.s शमे (for यमे). G4 युक्तो (for यत्तो). — D7 om. 19[c]–20[b]. — [c]) B3 तु (for च). B3 T2 G2 transp. मा and ते. K1 Cd च्यवतां; B3 व्यचरन्; T G1–3.5 M1.3–5 व्यथतु (for च्यवतु). G4 M2 बुद्धिस्ते मा व्यथां यातु (G4 व्यथयतु). — [d]) G1 नियच्छेस्; Ca.d.s as in text. K4 B Dn D1–5.9 G3 Cs एनां; Ds D10 इमां; G1 तां; Ca.d एतान् (for एतां). K5 ततस्; B3 इतस् (for यतस्).

20 D6 om. 20 (cf. v.l. 16); D7 om. 20[ab] (cf. v.l. 19). — [a]) K1 ध्यानं (for ज्ञानं). K5 G5 प्राज्ञा (for विप्रा).

21 D6 om. 21 (cf. v.l. 16). — [b]) Ds G2 इंद्रियैरकृ(G2 °जि)तात्मभिः. — [c]) K1 (*sup. lin.* as in text) आरामाधिगतो; K4 B1.2.5 Dn D3–5.8 आगमाधिगमाद्; B3.4 Ds D7.10 Ca.s °धिगताद्; S °मिग(G4 M5 °भिह)तो. T G (except G3) योगी; Ca.d.s योगात् (as in text). — [d]) K1 Cd.s वशे; Ca वशी (as in text).

Colophon missing in K2.3; D6 om. it. — *Sub-parvan:* K1.4 B D (except D1; D6 om.) यानसंधि (Ds2 संज्ञानसंधि; K5 संजययानसंधि. — *Adhy. name:* M दुर्योधनानुशासनं. — *Adhy. no.* (figures, words or both): K1 T G2.3 M1.4 69; D5 68; D7 71; G1.4 M2.3.5 70; G5 66 (*inf. lin.* 68). — *S'loka no.:* Dn 21; D8 20.

### 68

☞ This adhy. is missing in K2.3 (cf. v.l. 5. 41. 1; 32. 15).

1 D6 om. 1 (cf. v.l. 5. 67. 16). — [b]) K4.5 B D (except Dn1 D10; D6 om.) पृच्छतः; T2 G2 तत्वतः (for पृच्छते). — [d]) G1.5 M2.3.5 प्राप्नुयात्; Cs प्राप्नुयां (as in text).

2 D6 om. 2 (cf. v.l. 1). — [a]) M1 (*inf. lin.*) शृणु (for श्रुतं). K4 B1–3.5 Ds D3–5.8.9 देव-; B4 Dn वासु- (for तस्य). K5 यथा श्रुतं मे देवस्य. — [b]) K5 श्रुतं (for शुभम्). — [c]) G3 विजाने; Cs अभिजाने (as in text).

3 D6 om. 3 (cf. v.l. 1). — [a]) T1 G1 वासनात्; Ca.d.s वसनात् (as in text). — [b]) G5 M3–5 वासत्वात्; Ca.d.s वसुत्वात् (as in text). T2 (*inf. lin.* as in text) G2 सर्वे°; Ca.d.s देव° (as in text). — [c]) K1.5 D7.10 वाच्यो; S ज्ञेयो; Ca वेद्यो (as in text). — [d]) K4 B (except B4) Dn2 D3–5.9 Cn बृहत्वाद्;

C. 5. 2561
B. 5. 70. 3
K. 5. 69. 3

वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो वेद्यो वृषत्वाद्वृष्णिरुच्यते ॥ ३
मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वतत्त्वलयाच्चैव मधुहा मधुसूदनः ॥ ४
कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
कृष्णस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥ ५
पुण्डरीकं परं धाम नित्यमक्षयमक्षरम् ।
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ६
यतः सत्त्वं न च्यवते यच्च सत्त्वान्न हीयते ।
सत्त्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः ॥ ७
न जायते जनित्र्यां यदजस्तस्मादनीकजित् ।
देवानां स्वप्रकाशत्वाद्दमाद्दामोदरं विदुः ॥ ८
हर्षात्सौख्यात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ॥ ९
अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
नराणामयनाच्चापि तेन नारायणः स्मृतः ।
पूरणात्सदनाच्चैव ततोऽसौ पुरुषोत्तमः ॥ १०
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।

---

Ca.s वृषत्वात् (as in text). K4 B1.2.5 Dn D2–5.8.9 T2 G2 Cs विष्णुः; Ca वृष्णिः (as in text).

4 D6 om. 4 (cf. v.l. 1). — a) D1.3.4 मानात्; Ca.d.s मौनात् (as in text). D1 दानात्; Ca.d.s ध्यानात् (as in text). — c) K4 B Dn Ds D3–5.9.10 °मयत्वाच्च; K5 D1.2 S °न(K5 D2 °म)याच्चैव; Ca as in text. Cd.s cite सर्वतत्त्वलयात् (as in text). — After 4, K5 reads $10^{ab}$.

5 D6 om. 5 (cf. v.l. 1). — b) B3 Dn1 D2–4.7 G3 M1.2 Ca.s नः; B4 Ds1 यत्; Cn णः (as in text). — c) Dn विष्णुः; Ca.s कृष्णः (as in text). D5.8 तु; T2 G2 त्वा; Ca.s तत् (as in text). — d) K1(m as in text).4.5 B D (D6 om.) Ca.s सात्वतः (for शाश्वतः).

6 D6 om. 6 (cf. v.l. 1). — a) T1 G1.4 पुरं (for परं). — b) K5 क्षरम् (for नित्यम्). K5 D1 M1.2 अक्षरम्; B1.2.5 G3.4 अव्ययम्; Ca.s अक्षयम् (as in text). K4.5 B3.4 D (except D7; D6 om.) T2 G2 M1.2 Ca.s अव्ययं (for अक्षरम्). — d) K1 S (except G4) दस्युत्राणात्; D1.3.4.9 दस्युनाशात्. G5 च केशवः; Ca.s जनार्दनः (as in text).

7 D6 om. 7 (cf. v.l. 1). — a) T G1.2.4 यस्मात्; Ca यतः (as in text). K1.4.5 B4 Dn D3.4.7.9 G4 M Cs सत्वात्; Ca सत्यं (for सत्त्वं). T2 G2 च्यवति; Ca.s as in text. — b) D1.7 T2 G1.2.5 यः; Ca यत् (as in text). K1 M तत्वात्; Ca सत्यात्; Cs सत्त्वात् (as in text). — c) T1 G1.3.5 transp. सत्त्वतः and सात्वतः. K1.5 D7 G4 M सात्वतः; T2 G2 सर्व°; Ca सत्त्व° (as in text). K1.5 G4 M तत्वतः; D7 सर्व°; Ca.s सात्व° (as in text). — d) B3 च शुभेक्षणः; D1 M (except M3) Ca.s ऋषभेक्षणः (for वृषभे°). T G एष गो(G4 मो)वृषभेक्षणः.

8 D6 om. 8 (cf. v.l. 1). — a) K4 Dn Ds D2–5.7.9 G4 जनिन्र्या; B1.2.5 Ca जनित्रा; D1 जनन्या; Cs जनिता (for जनित्र्यां). K4 Dn Ds D2.5 अयं; Ca यत् (as in text). — b) D1 अनेकजित्; T1 G4 Ca अजीजनत्; Cs अनीकजित् (as in text). — c) K1.5 D1.7 सुप्रशंसत्वात्; D2–4.9 अ(D2 सु)प्रकाशत्वात्; S सुखशंसि(T2 G1.2 °संगि-; G3.4 °संश्रि)त्वात्; Ca.s स्वप्रकाशत्वात् (as in text). — d) D1 T1 G4 Cnp दामात्; T2 G2 दाम्ना; G3 धर्मात्; Ca.s दमात् (as in text). K4 B Dn Ds D5.8 Ca.s दामोदरः. K4 Dn Ds D5.8 Ca विभुः (for विदुः).

9 D6 om. 9 (cf. v.l. 1). — a) K4 B D (except D1.7.10; D6 om.) Ca.s सुखात् (for सौख्यात्). K4 D5.8 तथैश्वर्यात्; D10 सुरै°; Ca.s as in text. — b) K1 D1.2 उच्यते; Ca अश्नुते (as in text). G4 हृषीकेश इति श्रुतिः.

10 D6 om. 10 (cf. v.l. 1). K5 (which om. $10^{cd}$) reads $10^{ab}$ after 4. — c) D9 नाराणां; Cd.s नराणां (as in text). D1.2 T1 G1.5 एव (for अपि). — d) B D (except D1.3.10; D6 om.) ततो (for तेन). — After $10^{cd}$, G5 ins.:

363* पुराणसदनाच्चैव पुरातन इति स्मृतः ।

— G3 om. $10^{e}$–$12^{d}$. — e) K5 पुराणां; T G2.4 पुराणात्; G1 पुराणं; Cs पूरणं; Ca पूरणात् (as in text). T1 G4 सादनात्; Ca as in text. K4 B Dn Ds D3.5–8 T2 G2 Ca अपि; K5 एवं (for एव). — f) K4 B3 D5.8 Ca वै; B4 Ds D1 S (G3 om.) अपि (for असौ).

11 D6 G3 om. 11 (cf. v.l. 1, 10). — b) K1 B3 D8 प्रभवाव्ययात्; D1 T2 G2.4 °वाव्ययः; T1 °वामयः; G1 °वोव्ययः; G5 प्रभुरव्ययः; M °वाप्ययः; Ca.s as in text. — After $11^{ab}$, G5 ins.:

तव पुत्रः सहामात्यः क्षणेन न भविष्यति ॥ २१
पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः ।
नोत्सहेऽनर्थसंयुक्तां वाचं श्रोतुं कथंचन ॥ २२

वैशंपायन उवाच ।
इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् ।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## ८७

वैशंपायन उवाच ।
प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ १
तं प्रयान्तं महाबाहुमनुज्ञाप्य ततो नृप ।
पर्यवर्तन्त ते सर्वे वृकस्थलनिवासिनः ॥ २
धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुः स्वलंकृताः ।
दुर्योधनमृते सर्वे भीष्मद्रोणकृपादयः ॥ ३
पौराश्च बहुला राजन्हृषीकेशं दिदृक्षवः ।
यानैर्बहुविधैरन्ये पद्भिरेव तथापरे ॥ ४
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ५
कृष्णसंमाननार्थं च नगरं समलंकृतम् ।

C. 5. 3106
B. 5. 89. 6
K. 5. 89. 7

22 K5 om. 22. — b) K2 तव पुत्रस्य दुर्मतेः. — c) K1.2.4 B D (except D3.4.9) °संयुक्ताः. — d) K1.2 D7.10 वाचः (for वाचं). K4 B Dn Ds D1.2.5.6.8 श्रोतुं वाचः (for वाचं श्रोतुं).

23 K5 B D (except D3.4.7.9.10) T1 G4 om. the ref. — a) K2 स नर° (for भरत°). — b) T2 G2 वृद्धः परमदुर्मनाः.

Colophon missing in K3. — *Sub-parvan:* K (K3 missing) B Dn Ds D1.2.5–8.10 T1 G1 M भगवद्यान. — *Adhy. name:* T1 G1 दुर्योधनासत्प्रलापे भीष्मव्युत्थानं; M दुर्योधनासत्प्रलापः. — *Adhy. no.* (figures, words or both): D5 85; D6 81; D7 T G2.5 M1–3.5 89; G1.4 90; G3 M4 88. — *S'loka no.:* K5 29; Dn 23; D3 24.

**87**

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15).

1 a) T2 G2 च (for तु). — b) T G3–5 पूर्वम्; M पौर्वम् (for सर्वम्). D1 रथमारुह्य वेगवान्. — c) T1 G1.5 अपि (for अभि-).

2 a) K1 Ds2 D6–8 प्रयातं; K5 आयांतं. — b) K4 B Dn Ds D2.5.6.8 महाबलं; D3.4.9 परंतप (for ततो नृप). — c) D3.4.9 प्रत्यवर्तंत; T2 G2 पर्यावर्तंत. — d) K1.2 D1 बृहत्स्थल°; T G कुश° (for वृक°). — After 2, T G ins.:

394* प्रययौ पुण्डरीकाक्षः कुरूणां सदनं प्रति ।
आचक्रमुश्च पन्थानं ग्रसमाना इवाम्बरम् ।
दारुकेण प्रचोदिता हयास्तस्य महात्मनः ।
अन्नानि शय्या वासांसि तथा रत्नानि सर्वशः ।
दुर्योधनेन कृष्णार्थं पथि संविहितं बहु । [5]
ताः सभाः पुण्डरीकाक्षो रत्नानि च महायशाः ।
नाभ्यनन्दन्महाबाहुरुपायात्कुरुसंसदम् ।

[ Lines 1–3 =(var.) 5. 81. 29cd, 59. — (L. 2) T1 आचेमुरिव पंथानं; G3.4 पंथानमाचेमु(G3 °रु)रिव (for the prior half). — (L. 3) G2 प्रमथिता; G3 प्रमुदिता (sic); G5 प्रणुन्नास्ते (for प्रचोदिता). — (L. 4) T2 G2 रथा (for तथा). — Lines 6–7 =(var.) 5. 83. 18. ]

3 a) Dn1 Ds2 D3.4.9 T2 G2.4 M2 समायांतं (for तमा°). — b) K5 प्रतिजग्मुः; D3.4.9 प्रत्याजग्मुः. K2 ततस्ततः; T1 G4.5 अतस्ततः (for स्वलं°). — c) K4 B D (except D1.3.4.7.9.10) T1 G1.5 दुर्योधनाद् (for °धनम्).

4 b) K2 B1.5 D1.7.10 T G1.2.5 M2.4.5 हृषीकेश-दिदृक्षवः (D1.7 M2 °या). — K5 om. 4c–6b. — c) K1.2 रम्यैः; Ds2 D1.3.4.8.9 T2 G2.3.5 M3–5 अन्यैः; D2 राजन्; G4 द्रव्यैः (for अन्ये). — d) M1.2 अन्ये (for एव). D8 पदातयः; M यथार्हतः (for तथापरे).

5 K5 om. 5 (cf. v.l. 4). — a) D1.7 G5 सर्वैः (for स वै). K1.2 समासाद्य. — b) D7 भीष्मेणापि जनार्दनः.

6 K5 om. 6ab (cf. v.l. 4). — a) D3.4.9 °नार्थाय; T2 G2.4 °नार्थं हि. — cd) Dn D7 °समन्विताः (for

C. 5. 3105
B. 5. 89. 6
K. 5. 89. 7

बभूव राजमार्गश्च बहुरत्नसमाचिताः ॥ ६
न स्म कश्चिद्गृहे राजंस्तदासीद्भरतर्षभ ।
न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ॥ ७
राजमार्गे नरा न स्म संभवन्त्यवनिं गताः ।
तथा हि सुमहद्राजन्हृषीकेशप्रवेशने ॥ ८
आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि ।
प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले ॥ ९
तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः ।
प्रनष्टगतयोऽभूवन्राजमार्गे नरैर्वृते ॥ १०
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ११
तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः ।
वैचित्रवीर्यं राजानमभ्यगच्छदरिंदमः ॥ १२
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ १३
कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ १४
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ।
स भीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥ १५
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ।
यथावयः समीयाय राजभिस्तत्र माधवः ॥ १६
अथ द्रोणं सपुत्रं स बाह्लीकं च यशस्विनम् ।
कृपं च सोमदत्तं च समीयाय जनार्दनः ॥ १७
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ।

°समाचिताः). $K_{4.5}$ B Ds $D_{1-6}$ बभूव °मार्गश्च °समाचितः.

7 $^{a}$) $K_{4.5}$ B D (except $D_1$) च (for स्म). — $^{c}$) $D_1$ वृद्धो न च (for न वृद्धो न).

8 $^{a}$) $K_2$ नार्यः; $K_4$ B Dn Ds $D_{2.5-8.10}$ $G_{3.4}$ तस्मिन् (for न स्म). $D_1$ राजमार्गेण रामाः स्युः; $D_{3.4.9}$ °मार्गगताः सर्वे; $T_2$ $G_2$ °मार्गगता न स्म. — $^{b}$) $K_{2.4}$ B Dn Ds $D_{2.5-8.10}$ संस्तुवंति (for संभ°). $K_{1.2.5}$ $D_7$ अवनी-; $B_3$ $D_{2.5.6.8.10}$ $T_1$ $G_{1.2}$ अवनीं. $D_{3.4.9}$ ततोर्ध्वभवनं गताः. — $G_4$ om. $8^{cd}$. — $^{c}$) $K_5$ $D_1$ $T_2$ $G_2$ तदा (for तथा). $T_2$ $G_{2.5}$ [अ]स्मिन्; $G_3$ $M_{1.3-5}$ स्म; $M_{2.4}$ (*inf. lin.*) एव (for हि). $T_1$ $G_1$ समभवद्. $M_{1.2.4}$ (*inf. lin.*) हि संभ्रमो (for हि सुमहद्). $K_4$ B Dn Ds $D_{2}$ m. $_{5-8.10}$ तस्मिन्काले महाराज. — $^{d}$) $B_4$ °निवेशने; $D_1$ °प्रवेशनं.

9 $^{a}$) $K_{1.2.5}$ $D_{7.10}$ आचितानि; $M_{3-5}$ आरूढानि ($M_4$ *inf. lin.* as in text). $Ds_2$ $D_1$ गृहस्त्रीभिः; $D_{3.4.9}$ ततः स्त्रीभिः. — $9^{cd}$ =(var.) 5. 92. $25^{cd}$. — $^{c}$) $G_{3.4}$ प्रचरंति. $D_1$ एव; $G_4$ इह; $G_5$ च (for इव). — $^{d}$) T G $M_{3-5}$ तत्र तत्र; $M_{1.2}$ राजंस्तत्र (for दृश्यन्ते स्म). T $G_{1.2.5}$ विशां पते; $G_{3.4}$ महीपते.

10 $^{a}$) $K_5$ $D_{10}$ आशु- (for च). — $^{c}$) A few MSS. प्रणष्ट°. $T_2$ $G_2$ राजन्; $G_5$ भूप (for ऽभूवन्). — $^{d}$) $K_1$ $D_{3.4.7.9.10}$ T $G_{1.2.5}$ जनैर्वृते; $B_{2.4}$ जनावृते (for नरै°).

11 $^{b}$) $D_{2.5.8}$ om. प्र-. A few MSS. °कर्षणः. $T_2$ $G_2$ प्रविवेश चतुर्भुजः; $M_{1.2.4}$ (*inf. lin.* as in text) प्राविशत्पूर्वमच्युतः. — $^{c}$) S पांडरं.

12 $^{a}$) N ($K_3$ missing) कक्षा. — $^{b}$) $K_1$ $G_4$ °वेश्मनि.

13 =(var.) 5. 92. 35. — $^{a}$) $D_1$ अभिगच्छति; $D_{3.4.9}$ अभ्यागते तु. — $^{b}$) $K_1$ जनेश्वरः; $K_4$ B D (except $D_{1.7.10}$) नराधिपः (for नरे°). — $^{c}$) $D_{3.4.9}$ S (except $G_4$) भीष्मद्रोणाभ्यां (by transp.). — $^{d}$) $D_8$ मुदायुतः; $T_1$ $G_{1.5}$ जनेश्वरः (for महा°).

14 $^{a}$) $T_1$ $G_{1.5}$ शल्यः (for कृपः). — $14^{cd}$=5. 92. $34^{cd}$.

15 $^{a}$) $D_9$ $G_4$ ततो राजन्समासाद्य. — $^{b}$) $B_{1.3}$ $D_1$ $T_2$ $G_2$ जनाधिपं; $D_{3.4.9}$ जनेश्वरं; $D_7$ $G_3$ मनस्विनं (for यश°). — $^{c}$) $T_1$ $G_{1.3}$ भीष्मं संपूजयामास; $G_4$ स वार्ष्णेयः सुवाग्भिस्तं; $G_5$ भीष्मं द्रोणं कृपं चैव. — $^{d}$) $G_4$ राजानं संप्रपूजनं. — After 15, S ins.:

395* ते स्वधर्मानकुर्वन्त संपूज्य मधुसूदनम् ।
[ $G_4$ तेस्य कर्माणि (for ते स्वधर्मान्). ]

16 $G_3$ om. $16^{a}$–$18^{b}$. — $^{a}$) $D_1$ तेषां; $G_5$ तेन (for तेषु). $Dn_1$ $D_{2.7.8}$ $G_4$ °पूर्वां; $G_5$ °पूर्वं (for °पूर्वीं). — $^{b}$) $K_1$ $G_4$ प्रपूज्य; $D_1$ $G_5$ संपूज्य (for प्रयुज्य). — $^{c}$) $K_{1.2.5}$ $T_2$ $G_{1.2.5}$ $M_{1-4}$ Ca. d समेयाय (Cap समी° as in text). — $^{d}$) $T_2$ प्रांजलिस् (for राजभिस्). $K_{4.5}$ B D (except $D_{1-4.7.9.10}$) सह (for तत्र).

17 $G_3$ om. 17 (cf. v.l. 16). — $^{ab}$) $K_4$ $B_{2.4}$ Dn Ds $D_{5.6}$ सबाह्लीकं सपुत्रं (for सपुत्रं स बाह्लीकं). $B_{1.3}$ $D_{1-4.7-10}$ $T_2$ $G_2$ $M_2$ च; $T_1$ $G_{1.5}$ तं (for स). $K_{1.2.5}$ $D_{1.3.4.7.9.10}$ $T_2$ $G_{1.2}$ बाह्लिकं (for बाह्लीकं). — $^{d}$) $K_{1.2.5}$ $D_{1.9}$ S ($G_3$ om.) समेयाय; $K_4$ B (except $B_3$) Ds $D_{2.5}$ समियाय; cf. v.l. 16.

शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ १८
अथ गां मधुपर्कं चाप्युदकं च जनार्दने ।
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ १९
कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून् ।
आस्ते संबन्धकं कुर्वन्कुरुभिः परिवारितः ॥ २०
सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निराक्रामदरिंदमः ॥ २१
तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि ।
विदुरावसथं रम्यमुपातिष्ठत माधवः ॥ २२
विदुरः सर्वकल्याणैरभिगम्य जनार्दनम् ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ २३
कृतातिथ्यं तु गोविन्दं विदुरः सर्वधर्मवित् ।
कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् ॥ २४
प्रीयमाणस्य सुहृदो विदुषो बुद्धिसत्तमः ।
धर्मनित्यस्य च तदा गतदोषस्य धीमतः ॥ २५
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम् ।
क्षत्तुराचष्ट दाशार्हः सर्वप्रत्यक्षदर्शिवान् ॥ २६

C. 5. 3127
B. 5. 89. 27
K. 5. 89. 27

इति श्रीमहाभारते उद्योगपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

18 G3 om. 18[ab] (cf. v.l. 16). — [a]) B3 T1 G1.5 तस्य (for तत्र). D2 असौ (for आसीद्). K1.2 D7.10 सजितं; D1.2 (before corr.) पूजितं; S (G3 om.) श्राजितं; Ca ऊर्जितं (as in text). K3 D2 (by corr.).5.6.8 सृष्टं; D1 श्रेष्ठं; Ca सृष्टं (as in text). — [c]) K1 (marg. *sec. m.*) आज्ञया (for शासनाद्). — [d]) T G1.2.5 तद् (for तत्र).

19 [ab]) K2 Dn1 D3.4.9 T1 om. अपि. K5 सु- (for अपि). K4 D3.4.9 जनार्दनं; T2 G4 महात्मने. — [c]) K1.2.5 D7.10 उपा(K2.5 °प)निन्युर्; B1.2.5 Ds D1.3.4 T G1.2.5 M3.5 उपाजह्रुर्.

20 [a]) T1 G3.5 स (for तु). — [b]) D1 परिसरन्; D10 °चरन्; T1 G1.5 व्यवहरन्; T2 नृपवरान्; G2 उपहरन्; G3 उपचरन्; M1.2 अभिवदन्; M3-5 अपहसन्; Cs परिहसन् (as in text). — [c]) K (K3 missing) B4 Dn D1.3.4.7.9.10 Ca सांबंधिकं; Cd सांबंधकं; Cs as in text.

21 K5 om. 21[cd]. — [d]) K1.4 B Dn2 D5-8.10 निरक्रामद्; D1 परिक्रामद्.

22 [b]) K5 कुरुसंसदि माधवः; M वंदितुं तां पितृष्वसां (M1 *sup. lin.* as in text).

23 K2 om. 23[c]-24[d]. — [d]) D3.4.9 अव° (for उप°). — After 23, B4 Dn ins. 417* (cf. v.l. 5. 90. 28); while D1 ins.:

396* या प्रीतिः पुण्डरीकाक्ष तवागमनकारणात् ।

24 K2 om. 24 (cf. v.l. 23). — [b]) D3.4.9 °कर्म° (for °धर्म°). — [d]) S (except G1.2) पप्रच्छ (for अपृच्छत्).

25 [a]) T2 (by corr.) प्रीयमाणस्तु. D2 transp. 25[b] and 25[d]. — [b]) K4.5 B (except B2) D3-6.8 T G M2 विदुरो (for °षो). B2 Dn Ds D7.8.10 वृष्णिसत्तमः; D1 बुद्धिमत्तरः; M बुद्धिमत्तमः. — K5 om. 25[c]-26[d]. — [c]) T1 G1.5 तु (for च). K2 D3.4.9.10 सदा; D2 ततः (for तदा). K4 B Dn Ds D1.5.6.8 धर्मार्थनित्यस्य सतः. — [d]) K4 B D (except D1.3.4.7.9.10) गतरोषस्य.

26 K5 om. 26 (cf. v.l. 25). — [a]) D1.2 तस्मै; Ca तस्य (as in text). B2 D1 सुविस्तारं. — [c]) Ds सुहुः; Ca क्षत्तुः (as in text). D7 क्षत्तुर्दाशार्हमाचष्ट. — [d]) B3.4 Dn2 D3.4.6-8.10 सर्वं; S यथा- (for सर्व-).

Colophon missing in K3; D1 om. it. — *Sub-parvan:* K (K3 missing) B Dn Ds D2.5-8.10 T1 G1 M भगवद्यान. — *Adhy. name:* T1 G1 M हस्तिन(M3-5 om. it)पुरप्रवेशः (G1 °वेशनं). — *Adhy. no.* (figures, words or both): D5 86; D6 82; D7 T G2.5 M1-3.5 90; G1.4 91; G3 M4 89. — *S'loka no.:* Dn 27; D8 26.

## 88

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15).

1 [a]) Ds उपागम्य. — K4 om. 1[c]-3[b]. — [c]) K1.2.5 B Dn Ds D1.2.5-8.10 स पृथां (for गोविन्दः). D3.4.9 पितृष्वसुरगाराणि. — [d]) Ds अभ्यागच्छत्; S सोभ्यगच्छत्. D3.4.9 गोविंदः सोभ्यगच्छत.

## ८८

C. 5. 3123
B. 5. 90. 1
K. 5. 90 1

वैशंपायन उवाच ।

अथोपगम्य विदुरमपराह्णे जनार्दनः ।
पितृष्वसारं गोविन्दः सोऽभ्यगच्छदरिंदमः ॥ १
सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम् ।
कण्ठे गृहीत्वा प्राक्रोशत्पृथा पार्थाननुस्मरन् ॥ २
तेषां सत्त्ववतां मध्ये गोविन्दं सहचारिणम् ।
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ॥ ३
साब्रवीत्कृष्णमासीनं कृतातिथ्यं युधां पतिम् ।
बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ४
ये ते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः ।
परस्परस्य सुहृदः संमताः समचेतसः ॥ ५
निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः ।
विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ॥ ६
त्यक्त्वा प्रियसुखे पार्था रुदन्तीमपहाय माम् ।
अहार्षुश्च वनं यान्तः समूलं हृदयं मम ॥ ७
अतदर्हा महात्मानः कथं केशव पाण्डवाः ।
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ॥ ८
बाला विहीनाः पित्रा ते मया सततलालिताः ।
अपश्यन्तः स्वपितरौ कथमूषुर्महावने ॥ ९
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वैणवैरपि ।
पाण्डवाः समबोध्यन्त बाल्यात्प्रभृति केशव ॥ १०
ये स्म वारणशब्देन हयानां हेषितेन च ।
रथनेमिनिनादैश्च व्यबोध्यन्त सदा गृहे ॥ ११
शङ्खभेरीनिनादेन वेणुवीणानुनादिना ।
पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ॥ १२
वस्त्रै रत्नैरलंकारैः पूजयन्तो द्विजन्मनः ।
गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ॥ १३
अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः ।

---

2 $K_4$ om. 2 (cf. v.l. 1). — $^{d}$) $K_{1.2.5}$ $D_{10}$ पृथक् (for पृथा). $D_3$ $G_5$ पार्थं; $D_1$ $G_2$ पुत्रान् (for पार्थान्). B Dn $D_{2.5-8}$ स्मरंती तनयान्पृथा ($D_2$ °यांस्तदा).

3 $K_4$ om. $3^{ab}$ (cf. v.l. 1). — $^{a}$) $K_2$ $D_1$ सत्य° (for सत्त्व°). — $^{b}$) $D_7$ पुरुषोत्तमं (for सह°). — $^{c}$) $D_1$ गोविंदं (for वार्ष्णेयं). — $^{d}$) $K_5$ पार्थं (for बाष्पं). $K_2$ $D_1$ आहरयत्; $K_5$ आकारयत्. $K_4$ तथा; $D_{3.4.9}$ तदा (for पृथा).

4 $^{b}$) $K_{2.5}$ $D_7$ विशां पते (for युधां पतिम्). — $^{c}$) $D_{3.4.9}$ °पूर्णेंदु- (for °पूर्णेन).

5 $^{a}$) $D_{3.4.9}$ ये तु; $T_1$ G $M_3$ एते (for ये ते). $K_5$ $D_{10}$ एवं. — $^{c}$) $Dn_1$ $D_{3.4.9}$ परस्परेण. — $^{d}$) $K_2$ $Dn_1$ $D_{3.4.9}$ समेताः. $D_1$ $G_5$ समतेजसः.

6 $K_5$ om. $6^{ab}$. — $^{a}$) $D_{3.4.9}$ ध्वंसिनो; $D_{7.10}$ वंचिता (for भ्रंशिता). — $^{b}$) $Dn_1$ $D_{3.4.9}$ राज्यार्हा (for जना°). T $G_{1.5}$ विजनं (for निर्जनं). — $^{c}$) $K_{1.2}$ विगत°; $K_5$ संत्यक्त°; $T_1$ $G_{1.5}$ विजित°. — After 6, $D_{1.3.4.9}$ read $10^{cd}$.

7 $^{a}$) $K_4$ $D_{5.6}$ मुक्त्वा (for त्यक्त्वा). $D_{3.4.9}$ सुखप्रिये (for प्रियसुखे). $K_{1.2.5}$ $D_{7.8.10}$ त्यक्तप्रियसुखाः पार्थाः. — $^{b}$) K ($K_3$ missing) $Dn_2$ $D_{1.2.5-7.10}$ $G_{3.5}$ रुदतीं.

8 $^{c}$) $K_5$ ते वासिता वने तात. — $^{d}$) K ($K_3$ missing) $D_{1.3.4.7.9.10}$ व्याघ्रसिंहगजा($K_4$ $D_1$ °समा)कुले; $T_1$ $G_{1.4.5}$ सिंहव्याघ्रसमा°.

9 $^{a}$) $D_7$ $T_1$ $G_1$ $M_5$ पुत्राः (for पित्रा). $D_1$ च; $M_5$ मे (for ते). $K_5$ ते बलविहीनाः पुत्राः. — $^{b}$) $M_2$ °पालिताः. — $^{c}$) $K_{1.5}$ $D_{7.8}$ Ca अंब-; $K_2$ तु; $K_4$ B Dn Ds $D_{5.6.10}$ च (for स्व-).

10 $G_4$ om. $10^{a}$–$11^{d}$. — $^{b}$) $K_{1.2.5}$ $D_{3.4.7.9.10}$ $M_5$ पणवैरपि; $K_4$ B Dn Ds $D_{1.2.5.6.8}$ वेणुनिःस्वनैः. — $D_{1.3.4.9}$ read $10^{cd}$ after 6. — $^{c}$) $D_{3.4.9}$ °बाध्यंत; $T_1$ $G_{1.5}$ °बुध्यंत.

11 $G_4$ om. 11 (cf. v.l. 10). — $^{d}$) $D_1$ विबुध्यंत; $D_{3.4.9}$ विबो°. $K_4$ $B_4$ D (except $Dn_1$ $D_{1.2.7.10}$) तदा; $B_{1-3.5}$ पुरा (for सदा).

12 $^{b}$) $K_{1.5}$ $D_{7.10}$ वीणावेणुनिनादिना; $K_2$ $D_9$ $G_3$ वेणुवीणानिनादिना; $G_5$ °वीणादिनैपुणैः. — $^{c}$) $T_1$ $G_{1.5}$ °मिश्रैश्च.

13 $K_5$ om. $13^{a}$–$16^{d}$. — $^{a}$) $D_1$ रत्नवस्त्रैरलं°. — $^{b}$) $D_1$ द्विजास्तथा; $D_2$ द्विजातयः; S द्विजोत्तमान् (for द्विज°). — $^{c}$) $D_8$ गीतैर्; $D_9$ वाग्भिर्. $K_{1.2}$ $D_{3.4.7.9}$ मंगलरूपाभिः.

14 $K_5$ om. 14 (cf. v.l. 13). — $^{a}$) $K_2$ $D_{7.10}$

प्रासादाग्रेष्वबोध्यन्त राङ्कवाजिनशायिनः ॥ १४
ते नूनं निनदं श्रुत्वा श्वापदानां महावने ।
न सोपयान्ति निद्रां वै अतदर्हा जनार्दन ॥ १५
भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः ।
स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन ॥ १६
बन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् ।
महावने व्यबोध्यन्त श्वापदानां रुतेन ते ॥ १७
ह्रीमान्सत्यधृतिर्दान्तो भूतानामनुकम्पिता ।
कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्तते ॥ १८
अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च ।
भरतस्य दिलीपस्य शिबेरौशीनरस्य च ॥ १९
राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम् ।
शीलवृत्तोपसंपन्नो धर्मज्ञः सत्यसंगरः ॥ २०
राजा सर्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत् ।
अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः ॥ २१
श्रेष्ठः कुरुषु सर्वेषु धर्मतः श्रुतवृत्ततः ।
प्रियदर्शनो दीर्घभुजः कथं कृष्ण युधिष्ठिरः ॥ २२
यः स नागायुतप्राणो वातरंहा वृकोदरः ।
अमर्षी पाण्डवो नित्यं प्रियो भ्रातुः प्रियंकरः ॥ २३
कीचकस्य च सज्ञातेर्यो हन्ता मधुसूदन ।
शूरः क्रोधवशानां च हिडिम्बस्य बकस्य च ॥ २४
पराक्रमे शक्रसमो वायुवेगसमो जवे ।
महेश्वरसमः क्रोधे भीमः प्रहरतां वरः ॥ २५
क्रोधं बलममर्षं च यो निधाय परंतपः ।

C. 5. 3153
B. 5. 90. 25
K. 5. 90. 25

---

अर्चनैर् (for अर्चितैर्). — b) T G (except G3) विद्वद्भिर्. D3.4.9 अपि बंदिभिः; D3 अविलंबिताः. — c) D3.4.9 T2 G2 अबुध्यंत.

15 K5 om. 15 (cf. v.l. 13). — a) K4 transp. ते and नूनं. B D (except D1.3.4.7.9.10) क्रूरं च (D10 m ते क्रूरं) (for ते नूनं). D1 निःस्वनं (for निनदं). — b) Dn1 D3.4.9 वने वने (for महा°). — c) K4 B Dn Ds D2.5.6.8 ते (for वै). D3.4.9 न स्वपंति हि रात्रौ च. — d) N (except K2; K3 missing; K5 om.) G1 न तदर्हा (for अत°).

16 K5 om. 16 (cf. v.l. 13). — a) D3.4.9 °शंख-निनादैश्च; S °मृदंगपणवैः (T1 G1.5 °टह-). — b) K1.2 D7.10 शंखवेणुविमिश्रितैः; B3 °निनदनिःस्वनैः; D3.4.9 वैणवैर्निःस्वनैस्तथा; G4.5 शंखवेणुवि(G5 °णोश्च)निःस्वनैः; M3-5 °दुंदुभिनिःस्वनैः. — c) D3.4.9 °निनादेन. — M2 om. (hapl.) $16^{d}$–$17^{a}$.

17 M2 om. $17^{a}$ (cf. v.l. 16). — a) A few S MSS. वंदि°. — b) D3.4.9 स्तुवद्भिर्यै विबोधिताः; M2 °रभिबोधिताः. — K5 om. $17^{cd}$. — c) B Dn Ds D1.2.5-8.10 T2 महावनेष्वबो(T2 °बु)ध्यंत; D3.4.9 °वने विबोध्यंते; T1 G1.5 °वने ह्यबोध्यंत. — d) T1 G1.5 रवैस्तु; T2 G2-4 M रुतैस्तु (for रुतेन). K2 वा; K4 B (except B2) Dn D3.4.9 च (for ते).

18 a) D2 धी°; G4 श्री° (for ह्री°). Ds सम° (for सत्य°). — c) K4 G4 कामक्रोधौ; T G5 रागद्वेषौ. T2 G2 समौ (for वशे). — d) K5 B3 D2-4.9 सतां धर्मं(K4 B3 D2 °र्मां)नुवर्तते.

19 G3 om. $19^{b}$–$21^{a}$. — b) A few MSS. नाहुष°. — G2 om. $19^{cd}$.

20 G3 om. 20 (cf. v.l. 19). — a) D3.4.9 सपुण्यानां (for पुरा°). — b) K1.2.5 D1.10 Ca.d.s वष्टि (for धत्ते). K1.2.5 D5.6.8 दुरुत्सहां; K4 कुरूद्वहः (for दुरुद्वहां). D2-4.9 धुरं वहति दुर्वहां; S (G3 om.) धुरं धुर्य इवोद्वहन्.

21 G3 om. $21^{a}$ (cf. v.l. 19). — a) B2 सत्य° (for सर्व°). — $21^{ab}$ = (var.) 5. 34. $81^{ab}$.

22 K5 om. 22. — a) D7 transp. कुरु° and सर्वे°. — b) D3.4 सर्वेषु; D7 T1.2 (*inf. lin.*) M धर्मज्ञः (M4 *inf. lin.* सर्वज्ञः) (for धर्मतः). D2-4.7.9 T1 G1.5 श्रुत(D3.4.9 °ति)वित्तमः. — c) Hypermetric! D10 °बाहुः (for °भुजः). K1.2 B2 D2 m प्रियदर्शी दीर्घबाहुः; K4 B1.3-5 Dn D1.5-8 प्रियदर्शी (D1 °र्शी) दीर्घभुजः; S सुदर्शनो दीर्घबाहुः (G3.4 M2.5 °भुजः).

23 a) Ds2 T1 G4.5 यस्य (for यः स). K2 T2 °बलो (for °प्राणो). — b) K4 B D (except D7.10) महाबलः (for वृको°). — K5 om. $23^{c}$–$24^{b}$. — c) K4 B2.4.5 Dn Ds D5.6.8 सामर्षः (for अमर्षी). — d) D3 पांडवानां प्रियंकरः.

24 K5 om. $24^{ab}$ (cf. v.l. 23). — a) K2 B D (except Dn1 D7.10) G4 तु (for च). K4 कीचकस्यातिबलिनः. Ca.d cite सज्ञातेः (as in text). — b) T G1.2.5 निहंता (for यो हन्ता). — c) D1.3 तु; D3.4.9 यः; D7 हि (for च). Some MSS. हिडंबस्य.

25 b) K4 B Dn Ds D5.6.8 मातरिश्वसमः; D1.2

C. 5. 3153
B. 5. 90. 25
K. 5. 90. 25

जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने ॥ २६
तेजोराशिं महात्मानं बलौघममितौजसम् ।
भीमं प्रदर्शनेनापि भीमसेनं जनार्दन ।
तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः ॥ २७
आस्ते परिघबाहुः स मध्यमः पाण्डवोऽच्युत ।
अर्जुनेनार्जुनो यः स कृष्ण बाहुसहस्रिणा ।
द्विबाहुः स्पर्धते नित्यमतीतेनापि केशव ॥ २८
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
इष्वस्त्रे सदृशो राज्ञः कार्तवीर्यस्य पाण्डवः ॥ २९
तेजसादित्यसदृशो महर्षिप्रतिमो दमे ।
क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः ॥ ३०
आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन ।
आहृतं येन वीर्येण कुरूणां सर्वराजसु ॥ ३१
यस्य बाहुबलं घोरं कौरवाः पर्युपासते ।
स सर्वरथिनां श्रेष्ठः पाण्डवः सत्यविक्रमः ॥ ३२
योऽपाश्रयः पाण्डवानां देवानामिव वासवः ।
स ते भ्राता सखा चैव कथमद्य धनंजयः ॥ ३३
दयावान्सर्वभूतेषु ह्रीनिषेधो महास्त्रवित् ।
मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे ॥ ३४
सहदेवो महेष्वासः शूरः समितिशोभनः ।
भ्रातॄणां कृष्ण शुश्रूषुर्धर्मार्थकुशलो युवा ॥ ३५
सदैव सहदेवस्य भ्रातरो मधुसूदन ।
वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः ॥ ३६
ज्येष्ठापचायिनं वीरं सहदेवं युधां पतिम् ।
शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ॥ ३७
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।

---

मरुत्पतिसमः; T2 युवा वायुसमः. Ca.d cite मरुत्पतिः. K4 B D (except D2-4.7.9.10) T2 G2 बले (for जवे). — $^{c}$) D2 M3-5 कोपे (for क्रोधे).

26 K5 om. $26^{a}$–$27^{b}$. — $^{b}$) M1.2 विनीय (for निधाय). D3.4.9 M4 परंतप.

27 K5 om. $27^{ab}$ (cf. v.l. 26). — $^{a}$) D8 जितात्मानं (for महा°). — $^{b}$) K4 B Dn D3 D5-8 वरिष्ठम् (for बलौघम्). T2 (before corr.) अतितेजसं (for अमितौ°). D1 बलघ्नसमतेजसं. — $^{e}$) Ds2 S प्रदर्शने च; Ca °नेन (as in text). — K5 om. $27^{e}$–$28^{b}$.

28 K5 om. $28^{ab}$ (cf. v.l. 27). — $^{b}$) B4 Dn बली (for ऽच्युत). — $^{c}$) K4 Dn1 D3.4.9 तुल्यः; S (except M4) योसौ (for यः स). Ca cites अवरः (? for अर्जुनः). — $^{f}$) D5 अभीतेन; Ca अतीतेन (as in text).

29 $^{b}$) Ds2 D3.4.9 G4 च (for यः). — $^{c}$) D1.3.4.9 इष्वस्त्रेण समो राज्ञः. — $^{d}$) D2 माधव; G4 चार्जुनः (for पाण्डवः).

30 $^{a}$) D3.4.9 T G (except G1) °संकाशः (for °सदृशः). — $^{b}$) K4 B D (except D2-4.7.9.10) महर्षिसदृशः; T G1.2.5 ब्रह्मर्षिप्रतिमः.

31 K5 om. $31^{a}$–$32^{b}$. — $^{a}$) K1.2 (by corr.) Ds2 D5 (by corr.) G3 अधिराज्यं; Ca.d as in text. K4 G1.3 महादीप्तं; G4 प्रशास्ति हि. — $^{b}$) K2 पांडवे; S पार्थिवं (for प्रथितं). — $^{e}$) S (except M2) विक्रम्य (for वीर्येण). — After 31, S read $34^{ab}$ (G1.5, the whole of 34).

32 K5 om. $32^{ab}$ (cf. v.l. 31). — $^{ab}$) K4 B D (except D3.4.7.9.10) सर्वं (for घोरं), and पांडवाः (for कौरवाः). — G3 om. $32^{c}$–$33^{d}$. — $^{c}$) T G (G3 om.) यः (for स). K5 सर्वेषां रथिनां श्रेष्ठः. — After 32, M reads $34^{cd}$; while N (except K1; K3 missing) ins.:

397* यं गत्वाभिमुखः संख्ये न जीवन्कश्चिदाव्रजेत् ।
यो जेता सर्वभूतानामजेयो जिष्णुरच्युत ।

[ (L. 2) K2 B3 Ds2 D6 अच्युतः; K5 D1-4.9 उच्यते. ]

33 G3 om. 33 (cf. v.l. 32); K5 om. 33–34; K1 om. $33^{ab}$. — $^{a}$) K2 उपाश्रयः; K4 आश्रयः; Dn1 D3.4.9 चाश्रयः; M3.4 वाश्रयः (for अपाश्रयः). — $^{c}$) D1.2 अपि (for एव).

34 K5 om. 34 (cf. v.l. 33). For sequence of S cf. v.l. 31, 32. — $^{b}$) K4 B D (except D1.7) G4 ह्रीनिषेवः. D2 महाद्युतिः. — $^{e}$) D3.4.9 महास्त्रः (for मृदुश्च). — After 34, T G1-3.5 read 38–41, followed by a *repetition* of 34.

35 K5 om. $35^{e}$–$37^{b}$. — $^{d}$) T2 G2 धर्मात्मा कुशलः; G4 धर्मार्थसहितः. D1.2 बली (for युवा).

37 K5 om. $37^{ab}$ (cf. v.l. 35). — $^{a}$) K4 ज्येष्ठानुयायिनं; B2-4 Dn D3-5.8 T1 G1.3.4 Cn ज्येष्ठोपचायिनं (Dn1 D3.4 °रिणं); D9 श्रेष्ठो°; Ca as in text. Cd cites अपचायी. K1.2.4 B3 D3.4.7.9.10 शूरं; D2 नित्यं; G3.4 M घोरं (for वीरं). — $^{b}$) T1 G1.5 महामतिं (for युधां पतिम्). — $^{e}$) M (except M1) शुश्रूषुः. — $^{d}$) K2 च शंस (for प्रचक्ष्व).

भ्रातृणां कृष्ण सर्वेषां प्रियः प्राणो बहिश्चरः ॥ ३८
चित्रयोधी च नकुलो महेष्वासो महाबलः ।
कच्चित्स कुशली कृष्ण वत्सो मम सुखैधितः ॥ ३९
सुखोचितमदुःखार्हं सुकुमारं महारथम् ।
अपि जातु महाबाहो पश्येयं नकुलं पुनः ॥ ४०
पक्ष्मसंपातजे काले नकुलेन विनाकृता ।
न लभामि सुखं वीर साद्य जीवामि पश्य माम् ॥ ४१
सर्वैः पुत्रैः प्रियतमा द्रौपदी मे जनार्दन ।
कुलीना शीलसंपन्ना सर्वैः समुदिता गुणैः ॥ ४२
पुत्रलोकात्पतिलोकान्वृण्वाना सत्यवादिनी ।
प्रियान्पुत्रान्परित्यज्य पाण्डवानन्वपद्यत ॥ ४३
महाभिजनसंपन्ना सर्वकामैः सुपूजिता ।
ईश्वरी सर्वकल्याणी द्रौपदी कथमच्युत ॥ ४४
पतिभिः पञ्चभिः शूरैरग्निकल्पैः प्रहारिभिः ।
उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी ॥ ४५
चतुर्दशमिमं वर्षं यन्नापश्यमरिंदम ।
पुत्राधिभिः परिद्यूनां द्रौपदीं सत्यवादिनीम् ॥ ४६
न नूनं कर्मभिः पुण्यैरश्नुते पुरुषः सुखम् ।
द्रौपदी चेत्तथावृत्ता नाश्नुते सुखमव्ययम् ॥ ४७
न प्रियो मम कृष्णाया बीभत्सुर्न युधिष्ठिरः ।
भीमसेनो यमौ वापि यदपश्यं सभागताम् ॥ ४८
न मे दुःखतरं किंचिद्भूतपूर्वं ततोऽधिकम् ।
यद्द्रौपदीं निवातस्थां श्वशुराणां समीपगाम् ॥ ४९
आनायितामनार्येण क्रोधलोभानुवर्तिना ।

C. 5. 3179
B. 5. 90. 51
K. 5. 90. 51

38 $K_{5}$ om. 38. For sequence in T $G_{1-3.5}$, cf. v.l. 34. — $^{b}$) B (except $B_{3}$) D (except $D_{7.10}$) चैव (for कृष्ण).

39 For sequence in T $G_{1-3.5}$ cf. v.l. 34. — $^{b}$) $K_{1.2.5}$ $D_{3.4.7.9}$ °रथः (for °बलः). — $^{c}$) $K_{1.2.5}$ $D_{7}$ तु; $D_{1}$ न; $G_{2}$ च (for स). — $^{d}$) $B_{2.4}$ transp. वत्सः and मम. $D_{3.4.9}$ बालो; $D_{7}$ पुत्रो (for वत्सो). K ($K_{3}$ missing) $B_{1.5}$ $D_{2-4.7.9.10}$ सुखोचितः (for सुखै°).

40 $K_{5}$ om. $40^{a}$–$41^{b}$. For sequence in T $G_{1-3.5}$ cf. v.l. 34. — $^{c}$) $T_{1}$ $G_{1.4.5}$ महाबाहुं. — $^{d}$) $T_{1}$ $G_{1}$ प्रियं (for पुनः).

41 $K_{5}$ om. $41^{ab}$ (cf. v.l. 40). For sequence in T $G_{1-3.5}$ cf. v.l. 34. — $^{a}$) Ds $D_{1.2}$ Ca °संघातजे काले; S °संघातजं कालं. Cd.s cite पक्ष्मसंघातजं, Cap °संपातजं. — $^{c}$) $M_{3-5}$ transp. न and लभामि. $K_{4}$ B D (except $Dn_{1}$ $D_{3.4.7.9.10}$) धृतिं (for सुखं). — $^{d}$) Ds पश्यतां (for पश्य माम्).

42 $^{a}$) N (except $K_{1.2.4}$ $D_{3.4.9}$; $K_{3}$ missing) प्रियतरा. — $^{c}$) $K_{4.5}$ B (except $B_{3}$) D (except $D_{1.2.7.10}$) $T_{2}$ $G_{3.4}$ रूप° (for शील°). — $K_{2}$ om. (hapl.) $42^{d}$–$44^{a}$. — After 42, T $G_{1.2.5}$ ins.:

398* पुत्री द्रुपदराजस्य विख्याता सत्यवादिनी ।

43 $K_{2}$ om. 43 (cf. v.l. 42). — $^{a}$) $K_{1.5}$ $D_{7.10}$ पितृलोकात्; $K_{4}$ $D_{3-5.9}$ S (except $M_{1.2}$) पुत्रलोकान्; Cs पुत्रलोकात् (as in text). $K_{1}$ $D_{1}$ भर्तृलोकं; $K_{5}$ $B_{4}$ $D_{2.7.10}$ Cn.s पतिलोकं; $G_{4}$ भर्तृलोकान्. — $^{c}$) Ds प्रियान्परित्यज्य सुतान्. — $^{d}$) $K_{1.5}$ $B_{2}$ Ds $D_{1.7.10}$ Cd अन्वरुध्यत; Dn $D_{2.5.6.8}$ Cap अनुरुध्यते; $D_{3.4.9}$ उपपद्यते; $T_{1}$ $G_{1.5}$ अन्ववर्तत; $G_{3}$ अभ्यपद्यत; Ca अनुपद्यते.

44 $K_{5}$ om. $44^{ab}$; $K_{2}$ om. $44^{a}$ (cf. v.l. 42). — $^{b}$) $K_{1}$ तु पूजिता; $K_{2}$ समेधिता; $D_{1.2}$ (before corr.) T $G_{1-3}$ M (except $M_{1}$) सुखैधिता; $D_{3.4.9}$ $G_{4.5}$ सुखोचिता. — $^{c}$) S ईश्वरा. $D_{1}$ सा हि (for सर्व-).

45 $^{b}$) $K_{1.2}$ $D_{7}$ प्रतापिभिः (for प्रहा°). — $K_{4}$ om. $45^{c}$–$46^{d}$; $K_{5}$ om. $45^{c}$–$49^{b}$. — $^{d}$) $K_{2}$ $D_{1}$ सुखभागिनी; $D_{3.4.9}$ वसुधासमा (for दुःख°).

46 $K_{4.5}$ om. 46 (cf. v.l. 45). — $^{a}$) S त्रयोदशं; Cs चतुर्दशं (as in text). B D (except $D_{1-4.7.9.10}$) इदं (for इमं). — $^{b}$) $K_{1.2}$ $Dn_{1}$ $D_{1.2}$(m as in text)$_{.3.4.7.9}$ अपश्यं (for नापश्यं). S यां न पश्याम्यरिंदम. — $^{c}$) $K_{1}$ $D_{1.2.8.9}$ S (except $G_{4}$ $M_{1}$) पुत्रादिभिः. $G_{4}$ परिद्यूना; $M_{1.3.4}$ परिन्यूनां. — $^{d}$) $G_{4}$ द्रौपदी °वादिनी.

47 $K_{5}$ om. 47 (cf. v.l. 45). — $^{a}$) $D_{3.4.9}$ नूनं स्वकर्मभिः. S शुक्लैर् (for पुण्यैर्). — $^{b}$) S अश्नुवंति स्त्रियः सुखं. — $^{d}$) $G_{5}$ om. न. $T_{2}$ $G_{2}$ दुःखम् (for सुखम्). $K_{2}$ अश्नुते दुःखमुत्तमं.

48 $K_{5}$ om. 48 (cf. v.l. 45). — $^{a}$) $B_{3.4}$ $Dn_{1}$ कृष्णाथो; Ca.d as in text. $K_{2}$ नाप्रियाण्याहतुः कृष्णां; S न मे प्रिया द्रौपदेयाः ($G_{4}$ न च मे द्रौपदेयाश्च). — $K_{4}$ om. $48^{b}$–$49^{c}$. — $^{b}$) S न बीभत्सुयुधिष्ठिरौ. — $^{c}$) $B_{3}$ $D_{1.2.7.9}$ च (for वा). S न भीमसेनो न यमौ ($G_{4}$ भीमसेनो न च यमौ). — $^{d}$) $K_{1.2}$ $D_{1-5.7-10}$ तां; $Dn_{2}$ तदा; Ds यां; T $G_{2.3.5}$ $M_{3-5}$ यदा; $G_{4}$ न च (for यद्). Ds अपश्यत्; M अपश्यन्. $K_{1}$ $D_{3.4.8-10}$ $M_{1}$ सभां गतां.

C. 5. 3179
B. 5. 90. 51
K. 5. 90. 51

सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम् ॥ ५०
तत्रैव धृतराष्ट्रश्च महाराजश्च बाह्लिकः ।
कृपश्च सोमदत्तश्च निर्विण्णाः कुरवस्तथा ॥ ५१
तस्यां संसदि सर्वस्यां क्षत्तारं पूजयाम्यहम् ।
वृत्तेन हि भवत्यार्यो न धनेन न विद्यया ॥ ५२
तस्य कृष्ण महाबुद्धेर्गम्भीरस्य महात्मनः ।
क्षत्तुः शीलमलंकारो लोकान्विष्टभ्य तिष्ठति ॥ ५३
सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम् ।
नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत् ॥ ५४
पूर्वैराचरितं यत्तत्कुराजभिररिंदम ।
अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहम् ॥ ५५
तन्मां दहति यत्कृष्णा सभायां कुरुसंनिधौ ।
धार्तराष्ट्रैः परिक्लिष्टा यथा नकुशलं तथा ॥ ५६
निर्वासनं च नगरात्प्रव्रज्या च परंतप ।
नानाविधानां दुःखानामावासोऽस्मि जनार्दन ।
अज्ञातचर्या बालानामवरोधश्च केशव ॥ ५७
न स्म क्लेशतमं मे स्यात्पुत्रैः सह परंतप ।
दुर्योधनेन निकृता वर्षमद्य चतुर्दशम् ॥ ५८
दुःखादपि सुखं न स्याद्यदि पुण्यफलक्षयः ।
न मे विशेषो जात्वासीद्धार्तराष्ट्रेषु पाण्डवैः ॥ ५९

---

49 $K_{1}$ om. 49; $K_{4}$ om. $49^{abc}$; $K_{5}$ om. $49^{ab}$ (cf. v.l. 48, 45). — $^{a}$) S अद्भुततरं ($T_{1}$ $G_{1.3-5}$ °मं) (for दुःखतरं). — $^{b}$) $D_{5.6}$ गत° (for भूत°). $D_{1}$ तथाविधं (for ततोऽधिकम्). $B_{3}$ कृतपूर्वमरिंदम. — $^{c}$) $K_{2}$ विवासस्थां; Cs नियत°; Cd.ap निवा° (as in text). B Dn Ds $D_{2}$ m. $_{5.6.8}$ Ca स्त्रीधर्मिणीं द्रौपदीं यत्; $D_{2}$ यद्द्रौपदीं सभासंस्थां; $D_{3.4.9}$ यां द्रौपदीं चिंतयंत्याः.

50 $^{a}$) $K_{4}$ $Dn_{2}$ Ds $D_{7.8}$ अनायितां; $D_{1.3.4.9}$ आनीतां तां. — $^{c}$) $K_{5}$ Dn Ds $D_{1.3.4.7-10}$ T $G_{2.5}$ प्रेक्षंत. $K_{2}$ प्रैक्षंत कुरवः सर्वे.

51 $K_{5}$ om. $51^{a}$–$61^{b}$. — $^{a}$) $Ds_{2}$ $D_{7}$ तथा; $G_{3}$ अत्र (for तत्र). $K_{1}$ एष; $B_{3}$ वै; S मे (for एव). — $^{c}$) $T_{1}$ $G_{1.4}$ सौमदत्ति°. — $^{d}$) Ds निविष्टाः (for निर्विण्णाः). $K_{1}$ $D_{1.2.7.10}$ $G_{2}$ तदा (for तथा).

52 $K_{5}$ om. 52 (cf. v.l. 51). — $^{a}$) $K_{4}$ B D (except $D_{1.7}$) सर्वेषां (for सर्वस्यां).

53 $K_{5}$ om. 53 (cf. v.l. 51). — $^{d}$) $K_{1.2}$ $D_{7}$ लोकं (for लोकान्). $T_{2}$ $G_{2}$ आवृत्य (for विष्टभ्य). — After 53, T $G_{1.2.5}$ read 56 followed by 55.

54 $K_{5}$ om. 54 (cf. v.l. 51). Before 54, N ($K_{3}$ missing; $K_{5}$ om.) $G_{1.3.5}$ ins. वैशं° उ° (resp. वैशं°). — $^{a}$) $T_{2}$ $G_{2}$ संहृष्टा (for च हृष्टा). — $T_{1}$ $G_{1.5}$ *repeat* $54^{cd}$ after 88. — After 54, $T_{2}$ $G_{2}$ ins.:

399* जन्मप्रभृति संप्राप्तं दुःखं नानाविधं बहु ।
अश्रुपूर्णमुखी खिन्ना सर्वं चैवान्वचिन्तयत् ।

55 $K_{5}$ om. 55 (cf. v.l. 51). T $G_{1.2.5}$ transp. 55 and 56, and read them after 53. — $^{a}$) $D_{2}$ (m as in text) तु; $D_{6}$ हि; $D_{7}$ च (for तत्). — $^{b}$) $K_{1.2}$ $D_{1.2}$ (m as in text) T $G_{1.2.5}$ $M_{3}$ सुराजभिर्; $D_{3.4.6.9}$ $G_{4}$ कुरुराजैर् (for कुराजभिर्). — $^{d}$) $D_{2}$ कथं; Cs कच्चित् (as in text). Ds $D_{2}$ Ca तेषां (for एषां). — After 55, $D_{7.10}$ ins.:

400* तन्नः क्लेशतमं मे स्यात्पुत्रैः सह परंतप ।

56 $K_{5}$ om. 56 (cf. v.l. 51). T $G_{1.2.5}$ transp. 55 and 56, and read them after 53. — $^{a}$) M मा (for मां). S (except $T_{2}$ $G_{2}$) transp. यत् and कृष्णा. — $^{b}$) $K_{2}$ $D_{3}$ $G_{4}$ कुरुसंसदि. — $^{c}$) $K_{2}$ परिक्षिप्ता; $G_{4}$ परिद्यूना. — $^{d}$) $K_{1}$ ह्यकुशलं; $D_{2.5.6.8}$ न कुलजं; T G (except $G_{3}$) न कुलजा (for न कुशलं).

57 $K_{5}$ om. 57 (cf. v.l. 51). $T_{1}$ $G_{1.5}$ transp. $57^{ab}$ and $57^{cd}$. — $^{b}$) $K_{1}$ $D_{7.10}$ अपि; $K_{2}$ तु; Cs च (as in text). — $D_{5}$ om. $57^{cd}$; $D_{6}$ om. (hapl.) $57^{c}$–$58^{b}$. — $D_{1}$ reads $57^{cd}$ after 58. — $^{d}$) $K_{4}$ B D (except $D_{1.2.7.8.10}$) अभिज्ञास्मि; $T_{2}$ $G_{2}$ आवासास्मि. — $^{f}$) B Dn Ds माधव (for केशव).

58 $K_{5}$ om. 58; $D_{6.7}$ om. $58^{ab}$ (cf. v.l. 51, 57). — $^{a}$) $K_{1.2}$ $D_{1.2}$ अस्मात्; $K_{4}$ B Dn Ds $D_{5.8.10}$ मे (for स्म). $K_{1}$ क्लेशं मतं; $K_{4}$ $T_{2}$ $G_{2.3}$ क्लेशकरं; $D_{2}$ क्लेशोदयः; $D_{10}$ क्लेशो मतः (for क्लेशतमं). $K_{4}$ B Dn Ds $D_{5.8}$ तत् (for मे). $G_{3}$ अभूत् (for स्यात्). $D_{3.4.9}$ तस्मात्कथं शमो मे स्यात्. — $^{b}$) $D_{1}$ सुतैः सममरिंदम; $D_{2}$ पुत्रैः सार्धमरिंदम. — $^{d}$) $T_{2}$ $G_{1.2.5}$ अत्र (for अद्य). $K_{4}$ $B_{4}$ $Dn_{2}$ चतुर्दश; S त्रयोदशं. — After 58, $D_{1}$ reads $57^{cd}$.

59 $K_{5}$ om. 59 (cf. v.l. 51). — $^{a}$) T $G_{1.2.4}$ सुदुःखं; $G_{5}$ सुखस्य; Cs सुखं न (as in text). $K_{4}$ $B_{3.4}$ $Dn_{2}$ $D_{1.7.10}$ Cn नः (for न). $G_{5}$ अद्य; Cs स्यात् (as in text). — $^{b}$) $T_{1}$ $G_{4}$ इति; $G_{5}$ दिवि; Cs यदि (as in text). — $^{c}$) Ds ज्ञात्वासीत्; $D_{3.4.9}$ यस्त्वासीत्.

60 $K_{5}$ om. 60 (cf. v.l. 51). — $^{a}$) $K_{1}$ कृत्वाहं (for कृष्ण त्वां). $D_{1}$ M त्वा (for त्वां). — $^{b}$) $B_{2}$

तेन सत्येन कृष्ण त्वां हतामित्रं श्रिया वृतम् ।
अस्माद्विमुक्तं संग्रामात्पश्येयं पाण्डवैः सह ।
नैव शक्याः पराजेतुं सत्त्वं ह्येषां तथागतम् ॥ ६०
पितरं त्वेव गर्हेयं नात्मानं न सुयोधनम् ।
येनाहं कुन्तिभोजाय धनं धूर्तैरिवार्पिता ॥ ६१
बालां मामार्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तकाम् ।
अददात्कुन्तिभोजाय सखा सख्ये महात्मने ॥ ६२
साहं पित्रा च निकृता श्वशुरैश्च परंतप ।
अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ॥ ६३
यन्मा वागब्रवीन्नक्तं सूतके सव्यसाचिनः ।
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ॥ ६४
हत्वा कुरून्ग्रामजन्ये राज्यं प्राप्य धनंजयः ।
भ्रातृभिः सह कौन्तेयस्त्रीन्मेधानाहरिष्यति ॥ ६५
नाहं तामभ्यसूयामि नमो धर्माय वेधसे ।
कृष्णाय महते नित्यं धर्मो धारयति प्रजाः ॥ ६६
धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ।
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ॥ ६७
न मां माधव वैधव्यं नार्थनाशो न वैरिता ।
तथा शोकाय भवति यथा पुत्रैर्विनाभवः ॥ ६८
याहं गाण्डीवधन्वानं सर्वशस्त्रभृतां वरम् ।
धनंजयं न पश्यामि का शान्तिर्हृदयस्य मे ॥ ६९
इदं चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् ।
धनंजयं च गोविन्द यमौ तं च वृकोदरम् ॥ ७०
जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः ।

C. 5. 3201
B. 5. 90. 71
K. 5. 90. 71

---

श्रियायुतं; $D_1$ श्रियान्वितं. — $^{c}$) $B_3$ $D_5$ S तस्मात् (for अस्मात्). $D_8$ हि मुक्तं; S प्रमुक्तं (for विमुक्तं). — $^{e}$) $B_{1.3.5}$ शक्यं; $B_4$ T $G_{1.2.5}$ $M_{3.4}$ शक्ताः (for शक्याः). $D_1$ परं जेतुं; S (except $G_{3-5}$ $M_3$) परे जेतुं (for परा°). — $^{f}$) $K_4$ $B_{2.4}$ Dn $D_5$ $D_{5.6.8}$ सर्वं; $D_{3.4.9}$ सत्यं (for सत्त्वं). S तेषां (for ह्येषां). $K_4$ B D (except $D_{1.3.4.7.9.10}$) $M_4$ (*inf. lin.*) °विधं (for °गतम्).

61 $K_5$ om. $61^{ab}$ (cf. v.l. 51). — $^{a}$) $T_1$ $G_{4.5}$ च (for तु). S $C_s$ गर्हामि (for गर्हेयं). — $^{b}$) $K_2$ $D_{1.2}$ न त्वां नापि सुयोधनं. — $K_5$ om. (hapl.) $61^{d}$–$62^{c}$. — $^{d}$) $B_4$ $Dn_2$ $D_{5.8}$ Cn वृत्तैः; $D_6$ दृष्टैः; $Cnp.s$ धूर्तैः (as in text). $D_{3.4.9.10}$ धनं धूर्तेष्विवार्पितं. ❀ Nil.: धूर्तैरिवेत्यपपाठः । ❀

62 $K_5$ om. $62^{abc}$ (cf. v.l. 61). — $^{a}$) $T_1$ $G_1$ पिता (for बालां). $T_2$ $G_2$ आढ्यकः; Ca आर्यकः (as in text). — $^{b}$) $D_7$ क्रोशंतीं (for क्रीडन्तीं). Some MSS. °हस्तिकां. — $62^{cd}$ = (var.) 1. 104. $3^{cd}$. — $^{c}$) $K_{2.4}$ $B_{1.3.5}$ $D_5$ $D_{2-4.7.9.10}$ अददत्; $B_{2.4}$ $Dn_1$ $D_6$ अदात्तु; $Dn_2$ आदात्तु; $D_1$ आददात्. — $^{d}$) M सख्युः (for सख्ये).

63 $^{a}$) $K_2$ $T_2$ $G_2$ अपि; $D_{1.3.4}$ Ca वि- (for च). — $^{b}$) $G_{1.5}$ श्वशुराणां परंतप. — $^{c}$) $D_{2.5.6.8}$ अत्यंतं (for अत्यन्त-). — $K_5$ om. (hapl.) $63^{d}$–$67^{c}$.

64 $K_5$ om. 64 (cf. v.l. 63). — $^{a}$) N (except $Ds_2$ $D_1$; $K_3$ missing; $K_5$ om.) $G_4$ मां (for मा). $K_2$ स्वस्था; $Dn_1$ $D_{3.4.9}$ तर्हिकं; $D_2$ (before corr.) S पूर्वं (for नक्तं). — $64^{cd}$ = 5. 135. $4^{ab}$. — $^{c}$) $K_{1.2}$ $D_{3.9}$ पृथिवी-. — $^{d}$) $K_{1.2}$ $D_{10}$ यशसा च (for °श्चास्य). $D_{3.4.9}$ दिशः (for दिवं). S दिवि (M °व) स्पृक्चास्य वै यशः.

65 = (var.) 5. 135. $4^{cd}$, $5^{cd}$. — $K_5$ om. 65 (cf. v.l. 63). — $^{a}$) $D_1$ जित्वा (for हत्वा). $D_{3.4.9}$ $G_4$ शत्रून् (for कुरून्). $K_1$ $D_8$ $G_4$ राजमध्ये; $K_4$ B Dn $D_{3-7.10}$ Ca महाजन्ये; $D_5$ महायज्ञैः; $T_{1.2}$ (*inf. lin.*) $G_{1.3}$ स संग्रामे; $T_2$ $G_2$ राजमेधे (for ग्राम°). $K_2$ $D_2$ हत्वा कुरूंश्च संग्रामे.

66 = (var.) 5. 135. 8. — $K_5$ om. 66 (cf. v.l. 63). — $^{a}$) $D_5$ ताः; Ca तां (as in text). $D_5$ नाभ्यसूयामि; $M_{3-5}$ अभ्यसूयानि; Ca. s as in text. — $^{b}$) $D_{3.4.9}$ नैव (for नमो). — $^{c}$) $T_2$ $G_2$ तुभ्यं (for नित्यं). $T_1$ कृष्णाय धर्मप्रभवे. — $^{d}$) $D_5$ $T_1$ धारयते.

67 = 5. 135. 7. — $K_5$ om. $67^{abc}$ (cf. v.l. 63). — $^{b}$) $K_4$ B D (except $D_{7.10}$) यथा वागभ्यभाषत.

68 $K_5$ om. $68^{a}$–$69^{b}$. — $^{a}$) $D_5$ मे; $D_1$ $G_5$ मा (for मां). — $^{b}$) $K_{1.4}$ B Dn $D_5$ $D_{3.4.7}$ $G_{2.4}$ Ca वैरता. $D_{5.6.8}$ राज्यनाशे न वैरता. — $^{c}$) $K_2$ दधते; $K_4$ $B_{1.3.4}$ Dn T G दहति; $B_{2.5}$ $D_5$ $D_{2.5.6}$ दधति; $D_{3.4.9}$ बाधंते (for भवति). — $^{d}$) $K_1$ $D_{6.10}$ $T_2$ $G_{1.2}$ M विनाभवं; $K_2$ विनाकृता.

69 $K_5$ om. $69^{ab}$ (cf. v.l. 68). — $^{a}$) $B_{1.3}$ S सा (for या). — $K_5$ transp. $69^{cd}$ and $70^{ab}$.

70 $^{a}$) $K_{2.4}$ B D (except $D_{1.7.10}$) $C_s$ इतः; $G_4$ इमं (for इदं). S त्रयोदशं (for चतुर्दशं). — $^{b}$) $D_{3.4.9}$ या न पश्ये युधिष्ठिरं. — $K_2$ om. $70^{cd}$. — $^{d}$) $M_{3-5}$ त्वां (for तं).

71 $^{a}$) $K_2$ जीवतां संप्रनष्टानां; $K_4$ $D_{2.5.6.8}$ जीव-

C. 5. 3201
B. 5. 90. 72
K. 5. 90. 72

अर्थतस्ते मम मृतास्तेषां चाहं जनार्दन ॥ ७१
ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ७२
पराश्रया वासुदेव या जीवामि धिगस्तु माम् ।
वृत्तेः कृपणलब्धाया अप्रतिष्ठैव ज्यायसी ॥ ७३
अथो धनंजयं ब्रूया नित्योद्युक्तं वृकोदरम् ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ७४
अस्मिंश्चेदागते काले कालो वोऽतिक्रमिष्यति ।
लोकसंभाविताः सन्तः सुनृशंसं करिष्यथ ॥ ७५
नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः ।
काले हि समनुप्राप्ते त्यक्तव्यमपि जीवितम् ॥ ७६
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ सदा ।
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ॥ ७७
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ७८
गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पाण्डवं वीरं द्रौपद्याः पदवीं चर ॥ ७९
विदितौ हि तवात्यन्तं क्रुद्धाविव यथान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥ ८०
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभां गता ।
दुःशासनश्च कर्णश्च परुषाण्यभ्यभाषताम् ॥ ८१
दुर्योधनो भीमसेनमभ्यगच्छन्मनस्विनम् ।
पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत्फलम् ॥ ८२
न हि वैरं समासाद्य प्रशाम्यति वृकोदरः ।

---

नाशात्प्रन°; Ds2 D1 जीवनाशे प्रन°; D7 M जीवनाशप्रन°. A few MSS. प्रणष्टानां. — d) D1 अहं तेषां जनार्दन.

72 K5 om. $72^{a}$–$74^{b}$. — c) K1 गीयते; G4 नियतः (for हीयते). — d) B3 मा च पुत्रक तत्कृथाः; T1 G1. 2. 5 मा मा (T1 G1 स्म) पुत्र वृथा कृथाः.

73 K5 om. 73 (cf. v.l. 72). — a) T1 G1 परश्रिया; M पराश्रयात्. — b) G2 यावज्जीवं; G5 याहं जीवे (for या जीवामि). K4 B D (except D7. 10) या जीवति धिगस्तु तां. — c) T1 G4. 5 वृत्तैः. K4 B D (except D7) कार्पण्य(D1 कृपालो)लब्धायाः.

74 =(var.) 5. 135. $9^{abcd}$. — K5 om. $74^{ab}$ (cf. v.l. 72). — a) K2 T G (except G3) M5 अतो (for अथो). — b) K1 D1. 10 उक्तो हि; B2. 4 Ds D2 (before corr.). 3. 4. 7. 9 Ca उद्युक्तः. K1 B4 Ds D1. 7. 10 वृकोदरः. $74^{cd}$ = 5. 157. $7^{a}$, $5^{d}$.

75 a) K1. 5 D7. 9 अस्मिश्चित्; S तस्मिंश्चेत्. — b) Dn Ca मिथ्या; T G (except G3) M1 (*inf. lin.* as in text). 2 कार्यं; M3–5 कालं (for कालो). K5 D6. 10 T1 वा; Dn Ca च; G5 यः (for वो). K2 विक्रमिष्यति; M1 (*inf. lin.* as in text). 3–5 अतिक्रमिष्यते; Ca. d. s as in text. D1 कालो व्यतिक्रमिष्यति. — K5 om. $75^{c}$–$89^{d}$. — d) B3 Ds D7 मा नृशंसं; Cd स्वनृशंसं; Cs अनृशंसं; Ca सुनृशंसं (as in text). G5 सदृशं संकरिष्यथ.

76 K5 om. 76 (cf. v.l. 75). — a) T1 G1. 3 M तु (for च). K1 D1 (m as in text). 7. 10 समायुक्तान्; K2 समायुक्ताः; D6 च वो शक्ताः; T2 G2. 5 तु ये युक्ताः; G3 च वो युक्ताः; G4 समायुक्तं (for च यो युक्तान्). — c) K1 D1. 7. 10 समतिक्रांते (for समनु°). — d) B3 Dn जीवनं (for जीवितं).

77 =(var.) 5. 135. 13. — K5 om. 77 (cf. v.l. 75). — b) S क्षत्रधर्मे सदा रतौ (T2 G2 व्यवस्थितौ). — c) K1 S (except M5) जितान् (for अर्जितान्). S (except G4 M2) लोकान् (for भोगान्). — d) K1. 2. 4 D1–4. 9 वृणीध्वं; B3 वृणुध्वं; G3 M (except M2) वृणीतां; G5 वृणीथाः.

78 =5. 135. 14. — K5 om. 78 (cf. v.l. 75). — a) G3. 4 अभि° (for अधि°). G4 om. हि.

79 =(var.) 5. 135. 19. — K5 om. 79 (cf. v.l. 75). — c) T1 G5 वीर.

80 =(var.) 5. 135. 20. — K5 om. 80 (cf. v.l. 75). — a) K1. 2 B2. 4 D3. 4. 7. 9. 10 तवात्यर्थं. — b) K4 B1. 3. 5 Dn2 क्रुद्धौ तौ तु; B2. 4 Dn1 Ds D1. 2. 5. 6. 8 संक्रुद्धौ तौ (for क्रुद्धाविव). K2 D10 M1 (*inf. lin.* as in text) यमांतकौ. — d) G3 M तथा लोकान् (for देवानपि). T G (except G4) पराभवं (for परां गतिम्).

81 =(var.) 5. 135. $21^{abcd}$. — K5 om. 81 (cf. v.l. 75). — a) S तयोश्चैव तदा(M °द)ज्ञातं. — b) D1. 2 S (except T2 G2) सभागता. K1. 2 Ds D7 यत्तां (K2 °त्र) कृष्णां सभा(K2 °भां)गतां.

82 K5 om. 82 (cf. v.l. 75). — b) K1 D3. 10 T1 G1 M1 अभ्यगर्जत्; K4 D2 (by corr.). 5–7 °गर्हत्; Cs अत्यगच्छत्; Ca. d as in text. K2 यशस्विनं; S सभागतं (for मन°).

83 K5 om. 83 (cf. v.l. 75). — a) = 5. 135. $9^{c}$.

सुचिरादपि भीमस्य न हि वैरं प्रशाम्यति ।
यावदन्तं न नयति शात्रवाञ्शत्रुकर्शनः ॥ ८३
न दुःखं राज्यहरणं न च द्यूते पराजयः ।
प्रव्राजनं च पुत्राणां न मे तद्दुःखकारणम् ॥ ८४
यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता ।
अशृणोत्परुषा वाचस्ततो दुःखतरं नु किम् ॥ ८५
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाभ्यगच्छत्तथा नाथं कृष्णा नाथवती सती ॥ ८६
यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन ।
रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः ॥ ८७
साहमेवंविधं दुःखं सहेऽद्य पुरुषोत्तम ।
भीमे जीवति दुर्धर्षे विजये चापलायिनि ॥ ८८

तत आश्वासयामास पुत्राधिभिरभिप्लुताम् ।
पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथाम् ॥ ८९
का नु सीमन्तिनी त्वादृग्लोकेष्वस्ति पितृष्वसः ।
शूरस्य राज्ञो दुहिता आजमीढकुलं गता ॥ ९०
महाकुलीना भवती ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ९१
वीरसूर्वीरपत्नी च सर्वैः समुदिता गुणैः ।
सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ॥ ९२
निद्रातन्द्री क्रोधहर्षौ क्षुत्पिपासे हिमातपौ ।
एतानि पार्था निर्जित्य नित्यं वीराः सुखे रताः ॥ ९३
त्यक्तग्राम्यसुखाः पार्था नित्यं वीरसुखप्रियाः ।
न ते स्वल्पेन तुष्येयुर्महोत्साहा महाबलाः ॥ ९४

C. 5. 3225
B. 5. 90. 95
K. 5. 90. 95

---

G3 M (except M5) समासज्य. — $^{f}$) B4 D1.2.8 शत्रुकर्षणः. — After 83, M3–5 ins.:

401* तावदेव महाबाहुर्निशासु न सुखं लभेत् ।

84 =(var.) 5. 135. 16. — K5 om. 84 (cf. v.l. 75). — $^{b}$) D5 M1.2 तु (for च). K1.2 T G1.2.5 M3–5 द्यूत- (for द्यूते). — $^{c}$) K4 B4 Dn D2.10 तु (for च). — $^{d}$) D2.5.8 दुःखकारकं. K2 T2 G2.4 न मे दुःखस्य कारकं. — After 84, T1 G4 ins.:

402* पश्यतां कुरुपुत्राणां न मे तद्दुःखकारणम् ।
[ Posterior half = 84$^{d}$. ]

85 =(var.) 5. 135. 17. — K5 om. 85 (cf. v.l. 75). — $^{a}$) K1 D3.4.7.9 G3 यत्र; K2 यत्तत्; D1.2 यत्स (for यत्तु). — $^{b}$) Dn1 T G1–4 M1.2 सभा- (for सभां). — $^{d}$) K4 B D (except D1–4.7.9.10) किं नु दुःखतरं ततः.

86 =5. 135. 18. — K5 om. 86 (cf. v.l. 75). — $^{c}$) K4 B (except B3) D (except D1) T G1.2.5 अभ्य° (for अध्य°). — After 86, G5 ins.:

403* स त्वस्या देवपुत्रायास्त्वं नाथो मधुसूदन ।,
which is followed by a *repetition* of 54$^{cd}$ (see below).

87 K5 om. 87 (cf. v.l. 75); G5 om. 87–88. — $^{d}$) K2 G2 महाबलः.

88 K5 G5 om. 88 (cf. v.l. 75, 87). — $^{b}$) K1 D7.10 T2 (by corr.) सहामि; K4 B Dn D3 D3–6.9 सहेयं; T1 G1 सहे हि (for सहेऽद्य). — $^{d}$) G4 विजये चापराजिते. — 54$^{cd}$ is *repeated* in T1 G1 after 88; in G5 (which om. 87–88) after 403*. T1 G1.5 ins. an addl. colophon (*adhy. no.*: 91) after the *repetition* of 54$^{cd}$; D1 T2 G2, after 88.

89 K5 om. 89$^{ab}$ (cf. v.l. 75). Before 89, all MSS. ins. वैशं° उ° (resp. वैशं°). — $^{a}$) T1 G1.5 तां तत्राश्वासयामास. — $^{b}$) T G1.2 M3 पुत्रादिभिर्. Dn1 D7 परि° (for अभि°). D2 पुत्रक्लेशपरिप्लुतां; T2m °दर्शन-लोलुपां. — $^{cd}$) K1.2.5 D1.2 पृथां पार्थसखा शौरिः शोचंतीं स्वां पितृष्वसां. S पृथां पार्थसखो हरिः (for $^{d}$).

90 Before 90, K1 G2 ins. भगवानु° (G2 om. उ°); K2 श्रीकृष्ण उ°; K4 B D T1 G1.5 M वासुदेव उ° (the S MSS. om. उ°); T2 G4 श्रीभगवान्. — $^{a}$) K2.4 B Dn D2–4.6 T2 G1.2 तु (for नु). G4 लोके (for त्वादृग्). — $^{b}$) G4 त्वादृशा (for लोकेषु). G5 M अपि (for अस्ति). K1.5 D7 लोकेष्वपि हि विद्यते. — $^{d}$) A few MSS. अज°.

91 =(var.) 5. 132. 14. — $^{a}$) K5 B4 Dn D6.9 G5 भवति (for °ती). — $^{c}$) T1 G3.5 M ईश्वरा; T2 (*inf. lin.* as in text) G2 सेश्वरी. — $^{d}$) S (except G5) समभि° (for परम°).

92 $^{a}$) K4 B3.5 D (except D1–4.7.9) त्वं (for च). — $^{c}$) K2.4 B1.2.5 Dn2 D5 D7 महाप्रज्ञे.

93 $^{a}$) K2 B4 Dn D3.4.9 T1 निद्रातंद्रे; G (except G1) निद्रां तंद्रीं. — $^{d}$) K1 D7.10 transp. नित्यं and वीराः. K2 D3.4.9 धीराः; M1(*inf. lin.*).2 प्राज्ञाः; M1(orig.).3–5 पार्थाः (for वीराः). D5 T2 (before corr.) G2 C3 सुखैधिताः; G4 सुखोचिताः (for सुखे रताः). K5 B4 Dn D52 नित्यं वीरसुखे रताः.

94 K5 om. 94–97. — $^{a}$) D3.4.9 वीरा (for पार्था).

C. 5. 3226
B. 5. 90. 96
K. 5. 90. 96

अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः ।
उत्तमांश्च परिक्लेशान्भोगांश्चातीव मानुषान् ॥ ९५
अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखामाहुर्दुःखमन्तरमन्तयोः ॥ ९६
अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया ।
आत्मानं च कुशलिनं निवेद्याहुरनामयम् ॥ ९७
अरोगान्सर्वसिद्धार्थान्क्षिप्रं द्रक्ष्यसि पाण्डवान् ।
ईश्वरान्सर्वलोकस्य हतामित्राञ्श्रिया वृतान् ॥ ९८
एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम् ।
पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः ॥ ९९
यद्यत्तेषां महाबाहो पथ्यं स्यान्मधुसूदन ।
यथा यथा त्वं मन्येथाः कुर्याः कृष्ण तथा तथा ॥ १००
अविलोपेन धर्मस्य अनिकृत्या परंतप ।
प्रभावज्ञास्मि ते कृष्ण सत्यस्याभिजनस्य च ॥ १०१
व्यवस्थायां च मित्रेषु बुद्धिविक्रमयोस्तथा ।
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं तपो महत् ॥ १०२
त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम् ।
यथैवात्थ तथैवैतत्त्वयि सत्यं भविष्यति ॥ १०३
तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणम् ।
प्रातिष्ठत महाबाहुर्दुर्योधनगृहान्प्रति ॥ १०४

इति श्रीमहाभारते उद्योगपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

— $^{b}$) $K_{1.4}$ $D_{10}$ वीर($K_4$ °राः)सुखे रताः; $K_2$ वीराः सुखोचिताः; $G_1$ वीराः सुखप्रियाः; $G_4$ वीरा महाबलाः; $M_1$(*inf. lin.*).$_2$ धीरसुखप्रियाः. — $D_6$ om. (hapl.) $94^{c}$–$95^{b}$. — $^{c}$) $Dn_2$ न तु; $D_1$ ते न (by transp.). $K_2$ तुष्यंति; $T_2$ $G_2$ जीवेयुः. — $^{d}$) $G_4$ सुतास्तव; $M_{1.2}$ महारथाः (for महाबलाः).

95 $K_5$ om. 95; $D_6$ om. $95^{ab}$ (cf. v.l. 94). — $^{a}$) $K_2$ B (except $B_4$) $D_2$ वीराः; Ca. d. s धीराः (as in text). — $^{c}$) $D_7$ $M_{3.4}$ उत्तमाः; Ca as in text. — $^{d}$) S भोगांश्चैवाति(M °श्चातीत)मानुषान्.

96 $K_5$ om. 96 (cf. v.l. 94). $K_{1.2}$ $D_{1-4.7.9.10}$ transp. $96^{ab}$ and $96^{cd}$. — $^{a}$) $K_{1.2}$ $B_2$ $D_{2.7.10}$ $G_4$ वीरा (for धीरा). — $^{b}$) $D_{3.4.9}$ एव; $D_7$ च (for ते). — $^{c}$) $K_1$ $D_7$ $T_2$ $G_2$ अंतः प्राप्तिं; $D_2$ अंतं प्राप्य; Cd अन्त° (as in text). $D_2$ S सुखं प्रा($G_{3.5}$ M चा)हुर् (for सुखामाहुर्). — $^{d}$) $K_{1.2.4}$ $B_4$ Dn $D_{2-4.6.8-10}$ $G_1$ $M_{3.4}$(*inf. lin.*).$_5$ एतयोः (for अन्तयोः). $D_1$ दुःखमंतरमध्ययोः.

97 $K_5$ om. 97 (cf. v.l. 94); $T_2$ om. $97^{a}$–$98^{b}$. — $^{a}$) Hypermetric! S ($T_2$ om.) अभिवादयंते. — $^{c}$) $K_2$ वै; $D_{1.2}$ $T_1$ G ते; M चेत् (for च). $K_1$ $D_{7.8.10}$ आत्मनश्चैव कुशलं.

98 $T_2$ om. $98^{ab}$ (cf. v.l. 97). — $^{cd}$) $K_5$ ईशानः (for ईश्वरान्), and श्रियान्वितान् (for श्रिया वृतान्).

99 Before 99, $K_{1.4}$ $D_{3.4.8.9}$ S ins. वैशं° उ° (S om. उ°). — $K_5$ om. $99^{c}$–$102^{d}$. — $^{c}$) Ds $D_{1.8}$ T G (except $G_5$) पुत्रादिभिः. $D_{3.4.9}$ अतिध्वस्ताः; $T_2$ $G_{1.2}$ परिध्वस्ताः.

100 $K_5$ om. 100 (cf. v.l. 99). Before 100, all MSS. ins. कुंत्युवाच (resp. कुन्ती). — $^{b}$) $K_{1.2}$ $D_{1-4.7.9.10}$ पुरुषोत्तम (for मधु°).

101 $K_5$ om. 101 (cf. v.l. 99). — $^{b}$) $K_{1.2}$ सुनिकृत्या (for अनि°). — $^{c}$) $K_{1.2}$ हि (for अस्मि). — $^{d}$) $B_2$ S (except $G_1$) सत्व°; $D_{3.4.9}$ सम° (for सत्य°).

102 $K_5$ om. 102 (cf. v.l. 99). — $^{a}$) $B_2$ D (except Dn $D_{10}$) व्यवस्थायाः; $G_{3-5}$ व्यवसायं; Ca. d as in text. Cs cites व्यवस्था. $K_2$ $D_9$ स्वमित्रेषु; $D_{3.4}$ त्वमित्रेषु (for च मित्रेषु). Ca. d cite मित्रेषु. T $G_{1.2}$ M व्यवसायस्य मित्रेषु. — $^{d}$) $K_1$ त्वं च सत्यं; $G_4$ सत्यं तत्वं (for त्वं सत्यं त्वं).

103 $^{a}$) $K_5$ भ्राता; $D_1$ S धाता; $D_{3.4.9}$ धाम (for त्राता). $K_1$ महद्धर्मः; $G_4$ परं ब्रह्म. — $^{b}$) $D_1$ सत्यं; $D_{3.4.9}$ धर्मः (for सर्वं). $D_{3.4.9}$ प्रतिष्ठितः. — $M_{3-5}$ (which om. $103^{cd}$) ins. 404* after $103^{ab}$. — $^{c}$) $Ds_2$ $T_1$ $G_1$ एवं तत्; $D_{3.4}$ चैतत् (for एवैतत्). $K_5$ यथैव गच्छेत्तत्रैव; $D_{7.10}$ यथैवात्थ तत्तथैव. — $^{d}$) $K_{1.2.5}$ नित्यं (for सत्यं). S ($M_{3-5}$ om.) सर्वमेव भविष्यति. — S ins. after 103 ($M_{3-5}$, after $103^{ab}$):

404* कुरूणां पाण्डवानां च लोकानां चापराजित ।
सर्वस्यैतस्य वार्ष्णेय गतिस्त्वमसि माधव ।
प्रभावं बुद्धिवीर्यं च तादृशं तव केशव ।

104 =(var.) 5. 89. 1. — Before 104, most MSS. ins. वैशं° उ° (resp. वैशं°). — $G_1$ om. 104.

## ८९

वैशंपायन उवाच ।

पृथामामन्त्र्य गोविन्दः कृत्वा चापि प्रदक्षिणम् ।
दुर्योधनगृहं शौरिरभ्यगच्छदरिंदमः ॥ १

लक्ष्म्या परमया युक्तं पुरंदरगृहोपमम् ।
तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वाःस्थैरवारितः ॥ २

ततोऽभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम् ।
श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः ॥ ३

तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतम् ।
धार्तराष्ट्रं महाबाहुं ददर्शासीनमासने ॥ ४

दुःशासनं च कर्णं च शकुनिं चापि सौबलम् ।
दुर्योधनसमीपे तानासनस्थान्ददर्श सः ॥ ५

अभ्यागच्छति दाशार्हे धार्तराष्ट्रो महायशाः ।
उदतिष्ठत्सहामात्यः पूजयन्मधुसूदनम् ॥ ६

समेत्य धार्तराष्ट्रेण सहामात्येन केशवः ।
राजभिस्तत्र वार्ष्णेयः समागच्छद्यथावयः ॥ ७

तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम् ।
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ॥ ८

तस्मिन्गां मधुपर्कं च उपहृत्य जनार्दने ।
निवेदयामास तदा गृहान्राज्यं च कौरवः ॥ ९

तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम् ।
उपासांचक्रिरे सर्वे कुरवो राजभिः सह ॥ १०

ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम् ।

C. 5. 3246
B. 5. 91. 11
K. 5. 91. 12

---

— $^{a}$) $D_{3.4.9}$ स (for च). $B_{1.3.5}$ $D_{1.2}$ T $G_{2-5}$ $M_{1.2.5}$ हृषीकेशः (for च गोविन्दः). $K_{1.5}$ $B_{2}$ $D_{7}$ $M_{3.4}$ पृथामामंत्र्य गोविंदः. — $^{b}$) $K_{1.2}$ $D_{3-5.8.9}$ T $G_{2-5}$ $M_{1.2}$ चापि (for चाभि-). — $^{c}$) $K_{5}$ S ($G_{1}$ om.) दुर्योधनगृहं शौरिः. — $^{d}$) $K_{1}$ $D_{1.3.4.7.9.10}$ °गृहं (for °गृहान्). $K_{5}$ $T_{2}$ $G_{2}$ अभ्यगच्छदरिंदमः; $T_{1}$ $G_{3.4}$ M प्रातिष्ठत महाद्युतिः.

Colophon missing in $K_{3}$; $K_{5}$ $D_{2.5.6}$ om. it. — *Sub-parvan:* $K_{1.2.4}$ B Dn Ds $D_{1.7.10}$ $T_{1}$ $G_{1}$ M भगवद्यान. — *Adhy. name:* $D_{1}$ कुंत्याश्वासनं; $T_{1}$ कुंतीवासुदेवसंवादः; $G_{1}$ वासुदेवकुंतीसंवादः; $G_{5}$ कृष्णकुंतीसंवादः; M कुंतीवाक्यं. — *Adhy. no.* (figures, words or both): $D_{7}$ 81; T $G_{2.4.5}$ 92; $G_{1}$ 93; $G_{3}$ $M_{4}$ 90; $M_{1-3.5}$ 91. — *S'loka no.:* Dn 104; $D_{3}$ 107.

### 89

☞ This adhy. is missing in $K_{3}$ (cf. v.l. 5. 32. 15).

1 $K_{5}$ $D_{7.10}$ om. 1. $D_{2.5.6}$ $G_{2}$ om. the ref. — $^{a}$) $T_{2}$ $G_{2}$ तामामंत्र्य हृषीकेशः. — $^{b}$) B Dn Ds $D_{1.5.6}$ $M_{3-5}$ चाभि- (for चापि). — $^{d}$) $T_{2}$ $G_{2}$ प्रातिष्ठत महाद्युतिः. — Cf. v.l. 5. 88. 103.

2 After $2^{ab}$, N ($K_{3}$ missing) ins.:

405* विचित्रैरासनैर्युक्तं प्रविवेश जनार्दनः ।

— $^{c}$) $K_{5}$ तिस्रः; $D_{1}$ तत्र (for तस्य). $K_{1.2}$ D (except $D_{1.3.4.6}$) कक्षा (for कक्ष्या). S कक्ष्यास्तिस्रो व्यतिक्रामत्. — $^{d}$) T $G_{1-3.5}$ M अथ (for तिस्रो). $G_{3.5}$ निवेदितः (for अवारितः). $K_{5}$ $G_{4}$ द्वारस्थैरभि($G_{4}$ °नि)वारितः.

3 $^{b}$) $Dn_{1}$ $D_{4.8}$ उत्थितं (for उच्छ्रितम्). — $^{d}$) $K_{1.2}$ °मनाः (for °यशाः).

4 $^{b}$) Ds $D_{3.4.9}$ T $G_{1.2}$ $M_{1.2}$ चापि संवृ($T_{1}$ $G_{1}$ °श्रि)तं; $D_{2}$ संवृतं गृहे; $G_{4}$ परिवारितं (for चाभि°). — $^{c}$) B (except $B_{3}$) धृतराष्ट्रं. $T_{2}$ $G_{2.3.5}$ $M_{1.2}$ महाबाहुः.

5 $K_{5}$ $T_{2}$ om. $5^{a}$–$6^{b}$. — $^{b}$) $K_{2}$ शकुनिं च महाबलं.

6 $K_{5}$ $T_{2}$ om. $6^{ab}$ (cf. v.l. 5). — $^{b}$) $K_{2}$ S (except $G_{3.5}$; $T_{2}$ om.) °मनाः (for °यशाः).

7 $K_{5}$ om. 7–9. — $^{b}$) $K_{2.4}$ माधवः (for केशवः). S सामात्येन परंतपः. — $^{c}$) $K_{1.2}$ Ds $D_{7.10}$ सह (for तत्र).

8 $K_{5}$ om. 8 (cf. v.l. 7). — $^{a}$) $K_{2}$ तस्य-; $G_{3.5}$ ततः (for तत्र). $D_{3.4.9}$ जांबूनदमये. — $^{b}$) $D_{8}$ सुमनोहरं; $D_{10}$ समुपस्कृतं (for सुपरि°). $D_{3.4.9}$ पर्यंके सुपरिष्कृते. — $^{c}$) $D_{3.4.9}$ °स्तीर्णे. — $^{d}$) $Dn_{1}$ समुपाविशद्; $D_{3.4.9}$ ह्यभ्युपा°. S आविवेश गदाग्रजः.

9 $K_{5}$ om. 9 (cf. v.l. 7). — $^{ab}$) $K_{1.2}$ $D_{8}$ S (except $M_{1.2}$) तस्मै (for तस्मिन्). $K_{1.4}$ B Dn Ds $D_{5-8.10}$ अप्युदकं च; $D_{2}$ उदकं च; $D_{3.4.9}$ उपाहृत्य. $K_{2}$ $D_{2}$ महात्मने (for जना°). $T_{2}$ $G_{2}$ उपहृत्याथ चक्रिणे. — $^{d}$) $K_{1.2}$ $Dn_{1}$ $D_{2-4.7-10}$ $T_{1}$ $G_{1.4}$ गृहं (for गृहान्). $D_{5.8}$ स (for च). — After 9, $K_{4}$ $D_{2.5.8}$ S ins.:

406* आसनं सर्वतोभद्रं सर्वरत्नविभूषितम् ।
कृष्णार्थमेव संसिद्धं धार्तराष्ट्रस्य शासनात् ।
[ (L. 2) $K_{4}$ $D_{8}$ M धृत° (for धार्त°). ]

C. 5. 3247
B. 5. 91. 12
K. 5. 91. 13

न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ॥ ११

ततो दुर्योधनः कृष्णमब्रवीद्राजसंसदि ।
मृदुपूर्वं शठोदर्कं कर्णमाभाष्य कौरवः ॥ १२

कस्मादन्नानि पानानि वासांसि शयनानि च ।
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन ॥ १३

उभयोश्चाददः साह्यमुभयोश्च हिते रतः ।
संबन्धी दयितश्चासि धृतराष्ट्रस्य माधव ॥ १४

त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वशः ।
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर ॥ १५

स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ।
ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् ॥ १६

अनम्बूकृतमग्रस्तमनिरस्तमसंकुलम् ।
राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमम् ॥ १७

कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव हि ।
कृतार्थं मां सहामात्यस्त्वमर्चिष्यसि भारत ॥ १८

एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम् ।
न युक्तं भवतास्मासु प्रतिपत्तुमसांप्रतम् ॥ १९

कृतार्थं चाकृतार्थं च त्वां वयं मधुसूदन ।
यतामहे पूजयितुं गोविन्द न च शक्नुमः ॥ २०

न च तत्कारणं विद्मो यस्मिन्नो मधुसूदन ।
पूजां कृतां प्रीयमाणैर्नामंस्थाः पुरुषोत्तम ॥ २१

वैरं नो नास्ति भवता गोविन्द न च विग्रहः ।

---

11 After $11^c$, $T_2$ $G_2$ ins.:

407* नाभ्यनन्दज्जनार्दनः ।
पुनः पुनः कौरवेयो भोजनेन न्यमन्त्रयत् ।
असकृत्प्रार्थ्यमानोऽपि.

— $^d$) $Dn_1$ $D_{1.4.7.9.10}$ नाभ्यनंदत केशवः.

12 $^a$) $K_5$ अथ दुर्योधनो राजा. — $^b$) N कुरु° (for राज°). — $^d$) $K_{1.2.4}$ $D_{3.4}$ केवलं (for कौरवः).

13 $^b$) $K_{1.5}$ रौक्माणि (for वासांसि). $T_1$ $G_1$ विविधानि (for शय°). $D_{3.4.9}$ शयनानि मृदूनि च. — $^c$) $D_{3.4.9}$ न भुंक्षेस्त्वं महाबाहो. — $^d$) $K_1$ नाभुक्ताः (sic); $K_5$ नाभुंक्षः; $T_1$ $G_1$ $M_{1.2}$ नाभुंक्थाः; $T_2$ $G_2$ नाभुंजः; $G_{3.5}$ $M_{3-5}$ न भुंक्षेः; $G_4$ नार्हथाः (for नाग्रहीः). $K_2$ नालीढानि जना°; $B_2$ नाग्रहीर्मधुसूदन; $D_{3.4.9}$ अस्माकं तु जना°.

14 $^a$) $K_4$ B Dn Ds $D_{1-4.9}$ $T_1$ $G_{1.3}$ ददत्; $K_5$ अददत्; $D_5$ $G_{4.5}$ अददाः; $T_2$ $G_2$ M वदन्. Ds $D_{5.6.8}$ सह्यं; Ca.d as in text.

15 $^a$) Ds $D_7$ माधव; $T_2$ $G_2$ तत्वेन (for गोविन्द). $T_2$ $G_2$ गोविंद (for धर्मार्थौ). — $^b$) $D_{3.4.9}$ तत्वं च (for तत्त्वेन). $T_2$ $G_2$ धर्मार्थौ वेत्थ केशव. — $^d$) $K_5$ श्रोतुं तव जनार्दन.

16 Before 16, $K_1$ $B_2$ Dn $D_{3.4.8.9}$ S (except $T_2$) ins. वैशं° उ° (resp. वैशं°). — $^a$) $K_{1.5}$ श्रुत्वैतत्तस्य गोविंदः. — $^b$) $K_2$ जनाधिपं (for महा°). — $^c$) N (except $B_{1.2.5}$; $K_3$ missing) उद्यन्मे($D_1$ वर्षामे)घस्वनः ($B_3$ °रः) काले. Ca.d.s cite ओघः.

17 $^a$) $K_4$ B (except $B_5$) Dn $D_{6.8.10}$ अलघू°; Ds $D_{2.7}$ T $G_{2.4}$ M अनर्म°; $D_5$ Cnp अनन्य°; $G_1$ अर्थवत्°; Ca.d.s.np अनम्बू° (as in text). $B_3$ Ds अध्वस्तं; $D_{3.4.7.9}$ अव्यग्रं; S (except $G_4$) अत्रस्तं; Ca.d.s as in text. — $^b$) Ds अनंकुशं; Ca.d असंकुलं (as in text). — $^d$) $K_2$ S अब्रवीत्; $D_7$ ईदृशं; Ca उत्तमं (as in text).

18 $K_4$ om. $18^a$–$19^b$; $G_4$ om. $18^{ab}$. Before 18, $K_1$ $D_{2-6.8.9}$ ins. भगवानुवाच ($D_8$ with prefixed श्री). — $^{ab}$) $M_{1.2}$ read गृह्णते (for भुञ्जते), भुंजंति (for गृह्णन्ति); and transp. दूताः and पूजां. $K_5$ $B_{2.4}$ $Dn_1$.$n_2$ (by corr.) Ds $D_{5.6.8}$ $M_{3-5}$ ह (for हि). — $K_5$ om. $18^c$–$21^b$. — $^c$) $K_2$ $B_{4.5}$ Dn $D_{3.4.9}$ $G_3$ सहामात्यं; $D_2$ सभामध्ये. — $^d$) $B_{4.5}$ Dn $D_{3.4}$ समर्चिष्यसि; $D_9$ अर्चयि°; $G_3$ पूजयि° (for त्वमर्चि°). $K_2$ $D_3$ मानद (for भारत).

19 $K_5$ om. 19; $K_4$ om. $19^{ab}$ (cf. v.l. 18). Before 19, $K_1$ $D_{3.4.8.9}$ ins. वैशं° उ°. — $^d$) S °वक्तुम् (for °पत्तुम्).

20 $K_5$ om. 20 (cf. v.l. 18). — $^a$) $D_{3.8.9}$ वा (for the first च), and $K_2$ $D_{3.10}$ वा (for the second च). — $^b$) $D_{3.4.9}$ transp. त्वां and वयं. — $^d$) $K_4$ B D (except $D_{1.2}$) दाशार्ह (for गोविन्द). $G_{3-5}$ M तु (for च).

21 $K_5$ om. $21^{ab}$ (cf. v.l. 18). — $^a$) $D_1$ $T_2$ $G_{1.2.5}$ एतत् (for तत्). $K_2$ S (except $G_3$ $M_{1.2}$) विद्म (for विद्मो). — $^b$) $K_2$ S यस्मात्; $D_7$ कस्मात् (for यस्मिन्). — $^c$) $K_{1.2.5}$ $T_1$ $G_1$ प्रीयमाणः (for °माणैर्). — $^d$) $K_1$ नाभुंक्थाः; $K_2$ न भोक्ता; $K_5$ नाभुंक्ष्व; $D_1$ नाभुंक्ष्वाः (sic); $D_2$ (before corr.) नाभुंक्षे; $D_8$ न भुंक्ष्व (for नामंस्थाः). S न भुंजीथाः परंतप.

22 $^b$) $B_3$ नास्ति (for न च). $K_2$ न च गोविंद

स भवान्प्रसमीक्ष्यैतन्नेदृशं वक्तुमर्हति ॥ २२
एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः ।
अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव ॥ २३
नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथंचन ॥ २४
संप्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च संप्रीयसे राजन्न चाप्यापद्गता वयम् ॥ २५
अकस्माद्द्विषसे राजञ्जन्मप्रभृति पाण्डवान् ।
प्रियानुवर्तिनो भ्रातॄन्सर्वैः समुदितान्गुणैः ॥ २६
अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ।
धर्मे स्थिताः पाण्डवेयाः कस्तान्किं वक्तुमर्हति ॥ २७
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥ २८
कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सते ।
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम् ॥ २९
यः कल्याणगुणाञ्ज्ञातीन्मोहाल्लोभाद्दिदृक्षते ।
सोऽजितात्माजितक्रोधो न चिरं तिष्ठति श्रियम् ॥ ३०
अथ यो गुणसंपन्नान्हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ३१
सर्वमेतदभोक्तव्यमन्नं दुष्टाभिसंहितम् ।
क्षत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः ॥ ३२
एवमुक्त्वा महाबाहुर्दुर्योधनममर्षणम् ।
निश्चक्राम ततः शुभ्राद्धार्तराष्ट्रनिवेशनात् ॥ ३३
निर्याय च महाबाहुर्वासुदेवो महामनाः ।

C. 5. 3270
B. 5. 91. 34
K. 5. 91. 30

---

विग्रहः. — $K_{5}$ om. $22^{c}$–$23^{b}$. — $^{d}$) $K_{1.4}$ $B_{1.3.4}$ $D_{1-4.8.9}$ $T_{1}$ $G_{1.3}$ अर्हसि.

23 $B_{4}$ om. 23–25; $K_{5}$ om. $23^{ab}$ (cf. v.l. 22). Before 23, $K_{1}$ $Dn_{2}$ $D_{3.4.9}$ ins. वैशं° उ°.

24 =(var.) 5. 49. 15. Cf. 5. 81. 34; 178. 11. — $B_{4}$ om. 24 (cf. v.l. 23). Before 24, $K_{1.2}$ $D_{3.4.9}$ $G_{3.5}$ ins. भगवानुवाच ($K_{2}$ $G_{3.5}$ [om. उ°] with prefixed श्री). — $^{a}$) S नाहंकारान्न (for नाहं कामान्न). $C_{a.d.s}$ cite कामात्. — $^{b}$) S क्रोधात्; $C_{a}$ द्वेषात् (as in text). — $^{c}$) $D_{2}$ बुद्धिमोहात्; $C_{a}$ हेतु° (as in text). $C_{a}$ लाभात्; $C_{s.ap}$ as in text. — After 23, $K_{5}$ $D_{10}$ ins.:

408* पूजां कृतां प्रीयमाणो को विद्वांस्त्यक्तुमर्हति ।

25 $B_{4}$ om. 25 (cf. v.l. 23). — $^{a}$) $K_{5}$ $D_{2-4.9}$ प्रीतिभोज्या($D_{9}$ °तोष्या)नि चान्नानि; $M_{4}$ संप्रीय भोज्यान्यन्नानि. — $^{b}$) $D_{s}$ $D_{1}$ $T_{1}$ $G_{1}$ ह्यापद्भो°; $G_{4}$ चापद्भो°. — $^{c}$) $K_{2}$ नः प्रीयसे; $D_{5.6.8}$ त्वं प्रीयसे (for संप्री°). $K_{5}$ नास्माभिः प्रीयसे राजन्. — $^{d}$) $K_{4.5}$ न वा; $G_{4}$ नैव (for न च). $K_{1}$ B D (except $D_{3.4}$) एव; $T_{1}$ हि (for अपि). — After 25, $K_{5}$ (om. line 1) $G_{3.5}$ ins. 409*.

26 $D_{3.4.6}$ om. 26. — $^{a}$) $K_{1.4.5}$ $B_{1.3.4}$ Dn $D_{s}$ $D_{2.5.7-10}$ द्वेष्टि वै; $K_{2}$ $B_{2.5}$ $D_{1}$ $C_{a}$ द्वेक्षि वै (for द्विषसे). — $^{d}$)=5. 88. $92^{b}$.

27 $^{c}$) S (except $G_{2}$) स्थितान् °वेयान्. — $^{d}$) $K_{1.2}$ त($K_{2}$ क)स्मात्किं वक्तुमर्हसि; $T_{1}$ $G_{1}$ कस्माद्विद्वेष्टुमर्हति; $T_{2}$ $G_{2}$ न कस्माद्द्वेष्टुमर्हसि; $G_{3.5}$ कस्मात्त्वं द्वेष्टुमिच्छसि.

28 $^{ab}$)=(var.) 3. 13. $38^{cd}$. — $^{c}$) $D_{2}$ एकत्तां; $G_{1}$ ऐकार्थ्यं (for ऐकात्म्यं). $K_{5}$ एकात्मानं; $D_{4.9}$ एकात्मतां; $T_{2}$ (after corr.) एकार्थतां (for ऐकात्म्यं मां). $K_{1.2}$ $D_{1.2}$ $G_{1.2}$ आगतं (for मां गतं). $T_{2}$ (before corr.) ऐकात्म्यमागतं विद्धि.

29 $^{b}$) $K_{4.5}$ B (except $B_{3}$) Dn $D_{s}$ $D_{3-10}$ $C_{a.d}$ वि($D_{5.8}$ हि)रुल्लसति; $T_{2}$ $G_{2.4.5}$ विचिकित्सते. $D_{2}$ यो मोहाद्वर्तते भृशं.

30 $^{a}$) $K_{5}$ ज्ञात्वा; $T_{2}$ $G_{2}$ हित्वा; $G_{3-5}$ M जानन् (for ज्ञातीन्). $T_{1}$ $G_{1}$ यः कल्याणमजानन्वै. — $^{b}$) $K_{1.2.5}$ द्वेषात्; $D_{3.4.9}$ S दोषान् (for मोहात्). $K_{1}$ $B_{2}$ $D_{s}$ $D_{1.10}$ नोत; $K_{2}$ तात; $K_{5}$ नाति; $D_{2}$ नैतत्; $D_{3.4.9}$ नैव; S एव (for लोभाद्). — $^{c}$) S om. (the initial) सः. — $^{d}$) =(var.) 4. 4. $32^{d}$. $K_{2}$ $D_{1}$ श्रिये; $K_{4}$ $D_{5}$ $T_{1}$ $G_{2.3.5}$ M श्रिया; B $D_{s}$ $D_{8.9}$ $G_{1}$ श्रियां; $D_{2}$ $G_{4}$ श्रियः (for श्रियम्).

31 $K_{5}$ om. 31. — $^{b}$) $K_{2}$ $D_{s}$ $T_{2}$ $G_{4.5}$ प्रियान् (for अप्रियान्). — $K_{4}$ $D_{2.6.8}$ T $G_{1.2.4}$ ins. after 31: $K_{5}$ (om. line 1) $G_{3.5}$, after 25: $Dn_{1}$, after 32: $D_{8}$, after $32^{ab}$:

409* द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् ।
पाण्डवान्द्विषसे राजन्मम प्राणा हि पाण्डवाः ।

32 $^{a}$) B D (except $D_{1-4.7.9}$) $G_{4}$ न भोक्तव्यं (for अभो°). — $^{b}$) $K_{1}$ $D_{2}$ °भिसंधितं. — $D_{8}$ ins. 409* after $32^{ab}$. — $^{d}$) $D_{7.10}$ निश्चिता (for धीयते). $G_{3.5}$ M (except $M_{1}$) मनः (for मतिः). — $Dn_{1}$ ins. 409* after 32.

33 $G_{3}$ om. 33–34; $D_{s}$ om. $33^{ab}$. Before 33, $K_{4}$ $T_{2}$ $G_{2.4.5}$ ins. वैशं° उ° (resp. वैशं°). — $^{c}$) $T_{2}$

G. 5. 3270
B. 5. 91. 34
K. 5. 91. 56

निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ३४
तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः ।
कुरवश्च महाबाहुं विदुरस्य गृहे स्थितम् ॥ ३५
तेऽभिगम्याब्रुवंस्तत्र कुरवो मधुसूदनम् ।
निवेदयामो वार्ष्णेय सरत्नांस्ते गृहान्वयम् ॥ ३६
तानुवाच महातेजाः कौरवान्मधुसूदनः ।
सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ॥ ३७
यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम् ।
अभ्यर्चयामास तदा सर्वकामैः प्रयत्नवान् ॥ ३८
ततः क्षत्तान्नपानानि शुचीनि गुणवन्ति च ।
उपाहरदनेकानि केशवाय महात्मने ॥ ३९
तैस्तर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः ।
वेदविद्भ्यो ददौ कृष्णः परमद्रविणान्यपि ॥ ४०
ततोऽनुयायिभिः सार्धं मरुद्भिरिव वासवः ।
विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ ४१

इति श्रीमहाभारते उद्योगपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

(*inf. lin.* as in text) $G_{2}$ क्रुद्धो (for शुभ्राद्).

34 $G_{3}$ om. 34 (cf. v.l. 33); $G_{4}$ om. $34^{ab}$. — $^{a}$) $Dn_{1}$ $D_{3.9}$ निर्ययौ. — $^{c}$) T $G_{1.2.5}$ $M_{3-5}$ निवासाय; $C^{a.d}$ निवे° (as in text).

35 $D_{1}$ om. $35^{a}$–$37^{b}$. — $^{ab}$) $D_{3.4.9}$ T $G_{1.2.5}$ अन्व° (for अभ्य°). $K_{2}$ transp. द्रोणः and भीष्मः. $K_{2}$ $B_{2}$ $T_{2}$ $G_{5}$ च (for अथ). — $^{d}$) $K_{1.5}$ $G_{3.5}$ M गृहेतिथिं; T $G_{1}$ गृहातिथिं; $G_{4}$ अतिथिं प्रियं (for गृहे स्थितम्).

36 $D_{1}$ om. 36 (cf. v.l. 35). — $^{a}$) S (except $G_{1}$) अनु° (for अभि°). $D_{10}$ सर्वे (for तत्र). B Dn Ds $D_{6.8}$ त ऊचुर्माधवं वीरं. — $K_{5}$ om. $36^{c}$–$37^{b}$. — $^{c}$) $K_{1.2}$ $B_{3.4}$ $Dn_{1}$ Ds $D_{2.5.6.8}$ निवेदयाम. — $^{d}$) $K_{1}$ $D_{5.6.8}$ स्व-; Ds च; $D_{7}$ वै (for ते). $K_{2}$ transp. गृहान् and वयं. $D_{3.4.9}$ सरत्नं च गृहं वयं.

37 $K_{5}$ $D_{1}$ om. $37^{ab}$ (cf. v.l. 35, 36). — $^{a}$) S °बाहुः (for °तेजाः). — $^{b}$) $G_{3.5}$ पार्थिवान् (for कौर°). — $^{d}$) $K_{5}$ स्वानि वेश्मानि भूमिपाः. — After 37, $T_{2}$ $G_{2}$ ins.:

410* न नीतिरस्मत्पूजा वो भवतां कुरुसत्तमाः ।
दुर्योधनश्च युष्मासु न च प्रीतिं करिष्यति ।
त एवमुक्ताः कृष्णेन एवमस्त्विति निर्ययुः ।

38 $K_{5}$ om. 38. — $^{a}$) $D_{1.2}$ गते° (for याते°). $T_{1}$ $G_{1}$ यातेषु तेषु क्षत्ता तु. — $^{d}$) T G $M_{1}$ (*inf. lin.*) उपस्थितैः ($G_{3.5}$ °तं; $M_{1}$ °तः) (for प्रयत्नवान्).

39 $^{a}$) $T_{1}$ $G_{1}$ तत्र; $T_{2}$ $G_{2.3.5}$ M (except $M_{1}$) अथ (for ततः). — $^{b}$) = $41^{d}$. $K_{5}$ गुणवंति च केशवं. — $^{c}$) S अमेयानि (for अनेकानि).

40 $^{c}$) $G_{3.4}$ M अददात् (for ददौ). — $^{d}$) $K_{5}$ $Dn_{3}$ प्रथमं (for परम-). — After 40, $K_{4}$ S ($G_{3}$ om. hapl. from the posterior half of line 1 up to $41^{a}$) ins.:

411* भुक्तवत्सु द्विजेन्द्रेषु निषण्णस्य वरासने ।
शुचिः सुप्रयतो भूत्वा विदुरोऽन्नमुपाहरत् ।
श्रद्धया परया युक्त इदं वचनमब्रवीत् ।
संभ्रमैस्तुष्य गोविन्द एतन्नः परमं धनम् ।
अन्यथा वा विशेषेण कस्त्वामर्चितुमर्हति ।

[ (L. 1) $T_{1}$ G (except $G_{2}$) द्विजाग्र्येषु (for द्विजे°). T $G_{1.2.4}$ निषण्णेषु. $T_{2}$ $G_{2}$ आसनेषु च (for वरा°). — (L. 3) $T_{1}$ $G_{1}$ विदुरः श्रद्धया युक्तः (for the prior half). ]

— $T_{2}$ (*marg. sec. m.*) cont.:

412* उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं नारी निःस्पृहस्य तृणं जगत् ।

41 $G_{3}$ om. $41^{a}$ (cf. v.l. 40). — $^{b}$) S निषण्णः परमासने. — $^{d}$) = $39^{b}$. — After 40, $K_{4}$ S ins.:

413* तं भुक्तवन्तं विविधाः सुशब्दाः सूतमागधाः ।
अभितुष्टुवुरासीनं दाशार्हमपराजितम् ।
[ (L. 1) $T_{1}$ $G_{1}$ गोविंदं (for विविधाः). ]

Colophon missing in $K_{3}$. — *Sub-parvan*: $K_{1.2.4.5}$ B Dn Ds $D_{1.2.5-8.10}$ $T_{1}$ $G_{1}$ M भगवद्यान. — *Adhy. name*: $T_{1}$ विदुरगृहे कृष्णभोजनं; $G_{1}$ विदुरगृहप्रवेशनं; $G_{5}$ विदुरगृहभोजनं; $M_{1.4}$ विदुरमाहात्म्यप्रतिपादनं; $M_{5}$ विदुरमाहात्म्यं. — *Adhy. no.* (figures, words or both): $D_{5}$ 89; $D_{6}$ 87; $D_{7}$ $M_{1-3.5}$ 92; T $G_{2.4.5}$ 93; $G_{1}$ 94; $G_{3}$ $M_{4}$ 91. — *S'loka no.*: $K_{5}$ 72; Dn 43; $D_{3}$ 44.

## ९०

वैशंपायन उवाच ।

तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत् ।
नेदं सम्यग्व्यवसितं केशवागमनं तव ॥ १
अर्थधर्मातिगो मूढः संरम्भी च जनार्दन ।
मानघ्नो मानकामश्च वृद्धानां शासनातिगः ॥ २
धर्मशास्त्रातिगो मन्दो दुरात्मा प्रग्रहं गतः ।
अनेयः श्रेयसां पापो धार्तराष्ट्रो जनार्दन ॥ ३
कामात्मा प्राज्ञमानी च मित्रध्रुक्सर्वशङ्कितः ।
अकर्ता चाकृतज्ञश्च त्यक्तधर्मः प्रियानृतः ॥ ४
एतैश्चान्यैश्च बहुभिर्दोषैरेष समन्वितः ।
त्वयोच्यमानः श्रेयोऽपि संरम्भान्न ग्रहीष्यति ॥ ५
सेनासमुदयं दृष्ट्वा पार्थिवं मधुसूदन ।
कृतार्थं मन्यते बाल आत्मानमविचक्षणः ॥ ६
एकः कर्णः पराञ्जेतुं समर्थ इति निश्चितम् ।
धार्तराष्ट्रस्य दुर्बुद्धेः स शमं नोपयास्यति ॥ ७
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे ।
भूयसीं वर्तते वृत्तिं न शमे कुरुते मनः ॥ ८
निश्चितं धार्तराष्ट्राणां सकर्णानां जनार्दन ।

C. 5 3265
B. 5. 92. 8
K. 5. 92. 8

## 90

☞ This adhy. is missing in K8 (cf. v.l. 5. 32. 15).

1 a) T1 आश्वास्य; M3-5 आसीनं (for आश्वस्तं). — b) D3.4.9 निशीथे (for °शायां). — After $1^{ab}$, K5 ins. a passage given in App. I (No. 4), and om. from $1^{c}$ to the end of stanza 21 of the *next* adhy. — c) S transp. सम्यक् and व्यवसितं. — d) D7.10 यदत्र (for केशव).

2 K5 om. 2 (cf. v.l. 1). — a) K2 B Dn Ds1 D10 मंदः (for मूढः). Ds2 D7 अथ धर्मातिगो मंदः; D5.6.8 अनुधर्मातिगोविंदः (D8 °गो मूढः); G4 अर्थातिगश्च मूढश्च; Ca.d.s as in text. — T2 reads $2^{c}$–$3^{d}$ after 7.

3 K5 om. 3 (cf. v.l. 1). — For T2, cf. v.l. 2. — a) D2 सर्वं° (for धर्मं°). K1 मर्त्यः; K2.4 B D G4 मूढः (B5 मत्तः); T1 G1 मूर्खः (for मन्दः). — b) B3 प्रकृतिं; D1 दुर्ग्रहं; Ca.d.s प्रग्रहं (as in text). — c) K1 D1 G5 अनयः; Ca.d as in text. B3 Dn1 Ds श्रेयसा; Ca.d as in text. K4 B D (except D1-4.9) मंदो (for पापो).

4 K5 om. 4 (cf. v.l. 1). — b) K4 B2.4 Dn2 Ds1 D5.6.10 Cn °शंकिता; G4 °वंचकः (for °शङ्कितः). — c) Ds2 अकृतात्माकृतज्ञश्च. — d) K2.4 B Dn Ds D2-7.9.10 G4 त्यक्तधर्मा (Ds2 अन्यधर्मः) (for त्यक्त°). B3 [अ]नृतप्रियः. — After 4, N (K8 missing; K5 om.) ins.:

414* मूढश्चाकृतबुद्धिश्च इन्द्रियाणामनीश्वरः ।
कामानुसारी कृत्येषु सर्वेष्वकृतनिश्चयः ।

[(L. 1) K1.2 D1.2 मूढश्च प्राज्ञमानी च; Dn1 मृदुश्च पापमानी च; D7 मूढः प्रज्ञावमानी च (for the prior half). Ds क्षत्रियाणाम् (for इन्द्रियाणाम्). — (L. 2) D1 कामानुचारी कृत्ये च (for the prior half). D1 तत्वेषु (for सर्वेषु). K1 Ds1 D2 कृतनिश्रमः; D1.5.8 कृतनिश्चयः; Ca अकृतविश्रमः (for अकृत°). Cd cites निःश्रमः.]

5 K5 om. 5 (cf. v.l. 1). — b) K1 transp. दोषैः and एष. B3.4 Dn2 D1.3.4.6-9 M2 एव; G4 एवं (for एष). — c) S °मानं (for °मानः). — d) S करि° (for ग्रही°).

6 K5 om. 6 (cf. v.l. 1); D1 om. 6–7. Dn2 Ds D5.8.10 read 6–7 after 9. — a) D2-4.9 सेनासमुच्चयं; Ca as in text. K4 Dn कृत्वा (for दृष्ट्वा). — d) K2 चाविचक्षणः; D3.4.9 च विचक्षणः; G3 अपराजितं (for अविचक्षणः).

7 K5 D1 om. 7 (cf. v.l. 1, 6). For transp. in Dn2 Ds D5.8.10 cf. v.l. 6. — ab) K1.2 Ds D1.5.8 पराजेतुं (for पराञ्जेतुं). S (except G4 M2) निश्चयः (for निश्चितम्). D3.4.9 उच्यमानोपि पापात्मा न करिष्यति निश्चितं. — c) K2 D3.4.9 धार्तराष्ट्रस्तु (K2 °ष्ट्रः सु°) दुर्बुद्धिः. — d) D3.4.9 M3.4 प्रशमं; D3 शमनं; G3.5 संशमं (for स शमं). T1 G3-5 M1.3-5 उपलप्स्यते (G3.5 °से). G2 °लभ्यते; M2 °लक्ष्यते (for °यास्यति). T2 शमं नैवोपलप्स्यते. — After 7, T2 reads $2^{c}$–$3^{d}$.

8 K5 om. 8 (cf. v.l. 1); D6 om. $8^{a}$–$9^{b}$. — a) Ds1 S (except G3) भूयसी; Cs भूयसीं (as in text). T2 G1.2.4 वर्धं° (for वर्तं°). Ds1 T G1.2.4 बुद्धिः; M वृत्तिः; Cs वृत्तिं (as in text). — d) D3.4.9 मतिं (for मनः).

C. 5.3265
B. 5.92.8
K. 5.92.8

भीष्मद्रोणकृपान्पार्था न शक्ताः प्रतिवीक्षितुम् ॥ ९
संविच्च धार्तराष्ट्राणां सर्वेषामेव केशव ।
शमे प्रयतमानस्य तव सौभ्रात्रकाङ्क्षिणः ॥ १०
न पाण्डवानामस्माभिः प्रतिदेयं यथोचितम् ।
इति व्यवसितास्तेषु वचनं स्यान्निरर्थकम् ॥ ११
यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ १२
अविजानत्सु मूढेषु निर्मर्यादेषु माधव ।
न त्वं वाक्यं ब्रुवन्युक्तश्चाण्डालेषु द्विजो यथा ॥ १३
सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः ।
तस्मिन्निरर्थकं वाक्यमुक्तं संपत्स्यते तव ॥ १४

तेषां समुपविष्टानां सर्वेषां पापचेतसाम् ।
तव मध्यावतरणं मम कृष्ण न रोचते ॥ १५
दुर्बुद्धीनामशिष्टानां बहूनां पापचेतसाम् ।
प्रतीपं वचनं मध्ये तव कृष्ण न रोचते ॥ १६
अनुपासितवृद्धत्वाच्छ्रिया मोहाच्च दर्पितः ।
वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति ॥ १७
बलं बलवदप्यस्य यदि वक्ष्यसि माधव ।
त्वय्यस्य महती शङ्का न करिष्यति ते वचः ॥ १८
नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः ।
इति व्यवसिताः सर्वे धार्तराष्ट्रा जनार्दन ॥ १९
तेष्वेवमुपपन्नेषु कामक्रोधानुवर्तिषु ।

---

9 K5 om. 9 (cf. v.l. 1); D6 om. $9^{ab}$ (cf. v.l. 8). — $^{b}$) T1 G1 च केशव (for जना°). — $^{c}$) K4 B Dn Ds D5.6.8 T1 G1 °सुखान् (for °कृपान्). — $^{d}$) T1 G1.3.4 M3-5 transp. न and शक्ताः. — After 9, Dn2 Ds D5.8.10 read 6–7.

10 K5 om. 10 (cf. v.l. 1). — $^{a}$) D2 संधिश्च; D3.4.9 मूढानां; D5.6.8 संधिं च; S निश्चितं (for संविच्च). Ca.d.s cite संवित्. — $^{b}$) D2 इति केशव; D3.4.9 मधुसूदन (for एव केशव). — $10^{cd}$ = (var.) 5. 93. $15^{ed}$. — $^{d}$) D8 बलसौभ्रात्र°; S तव शासनकांक्षिणां (T1 G1.3.5 °लंघनं).

11 K5 om. 11 (cf. v.l. 1). — $^{a}$) M3-5 यदि (for इति). D1 व्यवसितस्; D2 S °सितं; Cs as in text.

12 K5 om. 12 (cf. v.l. 1); K4 om. $12^{a}$–$14^{b}$. — $^{c}$) S वा (for च). — $^{d}$) K2 Dn1 T2 G2 गायनं; D7 (*sup. lin.* as in text) T1 G3.5 M (except M1) गायकः (for °नः).

13 K4.5 om. 13 (cf. v.l. 12, 1). — $^{a}$) K2 अविज्ञातेषु; B3 D2 °ज्ञानेषु; G4 M3.5 अपि जानत्सु; Cs as in text. — $^{b}$) S केशव (for माधव). — $^{c}$) K2 न ते; S (except G1.2) तत्वं (T2m तव) (for न त्वं). K1 D8 ब्रुवन्सूक्तं; K2 ध्रुवं युक्तं; D3.4.9 क्षमो वक्तुं; S (except T1 G1.2 M2) ब्रुवन्युक्तं. — $^{d}$) K1 B4 D1.6 S चंडालेषु.

14 K4 om. $14^{ab}$; K5 om. 14 (cf. v.l. 12, 1). — K4 reads $14^{cd}$ after 415*. — $^{c}$) D8 तस्मात् (for तस्मिन्). — $^{d}$) S संपद्यते (for °त्स्यते). D8 D9 ततः (for तव).

15 K5 om. 15 (cf. v.l. 1); D2 om. (hapl.) $15^{c}$–$16^{b}$. — $^{c}$) D1 तव मध्येवतरणं.

16 K5 G3 (hapl.) om. 16 (cf. v.l. 1); D2 om. $16^{ab}$ (cf. v.l. 15). — $^{a}$) T G1.2.4 अबुद्धीनाम् (for दुर्बु°). — $^{b}$) K4 B D (except D1.7.10; D2 om.) दुष्टचेतसाम्; G5 °कारिणां (for पाप°). — $^{c}$) D8 D5.6.8 S (G3 om.) प्रतीप-; Ca.d प्रतीपं (as in text). G4 कृष्ण; M1.2 (*inf. lin.* as in text) तात (for मध्ये). — $^{d}$) G4 तन्मे मध्ये (for तव कृष्ण). B Ds D1.5–7.10 M1 (*inf. lin.*) रोचये (for °ते).

17 K5 om. 17 (cf. v.l. 1). — $^{b}$) K2 B4 D2.7.10 श्रियः (for श्रिया). K4 B D (except D3.4.7.9) दर्पाच्च (D1 °न्व-) मोहितः; S मोहेन दर्पितः (T1 G1 गर्वितः) (for मोहाच्च द°). — $^{c}$) T G (except G3) वचो- (for वयो-). T2 G2 -गर्वात् (for -दर्पात्). K2 अमर्षाच्च; D3.4.9 अधर्माच्च. — $^{d}$) K2 तात (for न ते). G3.4 भविष्यति; G5 M ग्रहीष्यते.

18 K5 om. 18 (cf. v.l. 1). — $^{a}$) K2 D2.5m हितं; S वचः; Ca.d.s बलं (as in text). — After 18, K4 ins.:

415* मानी मौर्ख्येण पार्थानां न पश्यत्यधिकं बलम् ।,
followed by $14^{cd}$.

19 K5 om. 19 (cf. v.l. 1). — $^{a}$) T G1.2.4 M1.2.4 (*inf. lin.*) अस्य (for अद्य). D2 वदेम यद्यथा शक्यं. — $^{d}$) D1 जनेश्वर (for जना°).

20 K5 om. 20 (cf. v.l. 1). — $^{b}$) K2 D3.4.9 S °क्रोधानुसारिषु.

समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ २०

मध्ये तिष्ठन्हस्त्यनीकस्य मन्दो
रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतमन्युः
कृत्स्ना मयेयं पृथिवी जितेति ॥ २१

आशंसते धृतराष्ट्रस्य पुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलो नोपलभ्यो
बद्धं सन्तमागतं मन्यतेऽर्थम् ॥ २२

पर्यस्तेयं पृथिवी कालपक्वा
दुर्योधनार्थे पाण्डवान्योद्धुकामाः ।
समागताः सर्वयोधाः पृथिव्यां
राजानश्च क्षितिपालैः समेताः ॥ २३

सर्वे चैते कृतवैराः पुरस्ता-
त्त्वया राजानो हृतसाराश्च कृष्ण ।
तवोद्वेगात्संश्रिता धार्तराष्ट्रा-
न्सुसंहताः सह कर्णेन वीराः ॥ २४

त्यक्तात्मानः सह दुर्योधनेन
सृष्टा योद्धुं पाण्डवान्सर्वयोधाः ।
तेषां मध्ये प्रविशेथा यदि त्वं
न तन्मतं मम दाशार्ह वीर ॥ २५

तेषां समुपविष्टानां बहूनां दुष्टचेतसाम् ।
कथं मध्यं प्रपद्येथाः शत्रूणां शत्रुकर्शन ॥ २६

सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः ।
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ २७

या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव ।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ २८

C. 5. 3306
B. 5. 92. 29
K. 5. 92. 29

इति श्रीमहाभारते उद्योगपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

---

21 $K_5$ om. 21 (cf. v.l. 1). — $^{ab}$) S हस्तियूथस्य (for हस्त्य°). $K_2$ transp. मंदः and मूढः. — $^c$) $K_2$ $T_1$ $G_1$ जातमन्युः; $K_4$ B Dn $D_{5.6.10}$ वीतभीतिः; $Ca.d.s$ वीतमन्युः (as in text). — $^d$) $B_3$ $D_2$ G (except $G_1$) मम (for मया). $K_1$ विजिता महीति (for पृथिवी जितेति).

22 $K_5$ om. 22 (cf. v.l. 1). — $^a$) $K_4$ B D (except $D_{1.2.9}$) ins. वै after आशंसते. $K_1$ °ष्ट्रः सपुत्रो (for °ष्ट्रस्य पुत्रो). — $^b$) $G_1$ महद्राज्यम्; $M_{1.2}$ माहाराज्यम् (for महाराज्यम्). $T_1$ $G_1$ पृथिव्याः. — $22^{cd}$=(var.) 5. 26. $19^{cd}$. — $^c$) $K_2$ $G_5$ अस्मिन् (for तस्मिन्). Ds Cs क्षमः; $Ca.d$ क्षेमः (for शमः). $D_{1.4}$ केवले; S (except $M_{3.5}$) °लं; $Ca.d.s$ °लो (as in text). — $^d$) $K_1$ लब्धः सभां; $D_7$ लब्धं पुरस्तात्; $G_{3.5}$ यश्चासंतं (for बद्धं सन्तं). $K_2$ बद्धं स ह्यात्मगतं मन्यतेर्थं; $K_4$ B Dn Ds $D_{1.5.6.8.10}$ $Ca.d.s$ बद्धं संतं मन्यते ($D_{5.8}$ लभ्यते) लब्धमर्थं; $D_{3.4.9}$ पृथ्वीमिमां मन्यते वश्यगां च; T $G_{1.2}$ यश्चासंतं मन्यते प्राप्तमर्थं.

23 $K_5$ om. 23 (cf. v.l. 1). — $^c$) $G_1$ $M_{3-5}$ सर्वयौधाः. $K_2$ $Ds_2$ पृथिव्या. — $^d$) $K_{1.2}$ क्षितिपा वै; $D_7$ $Ca.s$ क्षितिपालाः; T G $M_{1.2}$ भूमिपालाः ($G_3$ °लान्); $M_{3-5}$ ये भूमिपालाः (for क्षितिपालैः). Cd cites क्षितिपाः.

24 $K_5$ om. 24 (cf. v.l. 1). — $^a$) $D_7$ सम° (for पुर°). — $^b$) $D_7$ राजानो वै (for त्वया राजानो). $K_{1.2.4}$ $D_{3.4.7.9}$ °रत्नाः; T $G_{1.2}$ °राज्याः; $G_4$ M °वैराः; Ca °साराः (as in text). — $^d$) $K_2$ $D_2$ T $G_{2.4}$ $M_{1.4.5}$ $Ca.d$ सुसंहिताः; B $D_4$ °हृताः; $G_1$ °श्रिताः; $G_3$ °हितान्; $G_5$ °शिताः (for °हताः). Cs cites संहताः. S चैव (for वीराः).

25 $K_5$ om. 25 (cf. v.l. 1). — $^a$) $D_{5.6.8}$ युक्ता°; $Ca.d$ त्यक्ता° (as in text). — $^b$) $K_4$ B $Dn_2$ Ds D (except $D_{3.4.9}$) $G_3$ हृष्टा; $Ca.d.s$ सृष्टा (as in text). $G_1$ $M_{1.2.5}$ °यौधाः (for °योधाः). — After $25^{ab}$, S ins.:

416* मृत्युर्जयो वेति कृतैकभावाः
कामात्मानो मन्युवशाविनीताः ।

26 $K_5$ om. 26 (cf. v.l. 1). — $^b$) $D_1$ पाप° (for दुष्ट°). — $^c$) $Ds_1$ (before corr.) $D_{1.8.9}$ मध्ये (for मध्यं).

27 $K_5$ om. 27 (cf. v.l. 1). — $^b$) $G_5$ सुदुःसहः (for दुरु°). — $^c$) $D_7$ प्रभावं बुद्धिशौर्यं च. — $^d$) $D_7$ transp. जानामि and तव.

28 $K_5$ om. 28 (cf. v.l. 1). — $^b$) $K_1$ $Dn_1$ $D_{3.4.7.8.10}$ भूयसी (for भूयः सा). — After 28, $K_4$ B Dn

# ९१

C. 5. 3308
B. 5. 93. 1
K. 5. 93. 2

भगवानुवाच ।

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः ।
यथा वाच्यस्त्वद्विधेन सुहृदा मद्विधः सुहृत् ॥ १
धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते ।
तथा वचनमुक्तोऽस्मि त्वयैतत्पितृमातृवत् ॥ २
सत्यं प्राप्तं च युक्तं चाप्येवमेव यथात्थ माम् ।
शृणुष्वागमने हेतुं विदुरावहितो भव ॥ ३
दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरिताम् ।
सर्वमेतदहं जानन्क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ४
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ॥ ५
धर्मकार्यं यतञ्शक्त्या न चेच्छक्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥ ६
मनसा चिन्तयन्पापं कर्मणा नाभिरोचयन् ।
न प्राप्नोति फलं तस्य एवं धर्मविदो विदुः ॥ ७
सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया ।
कुरूणां सृञ्जयानां च संग्रामे विनशिष्यताम् ॥ ८
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।

---

Ds D2 (marg.). 8–9 ins.:

417* या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ।
[In B4 Dn it is a *repetition*! Cf. v.l. 5. 87. 23.]

Colophon missing in K8; K5 om. it. — *Sub-parvan:* K1.2.4 B Dn Ds D1.2.5–8.10 T1 G1.5 M भगवद्यान. — *Adhy. name:* D1 T1 G1.5 विदुरवाक्यं; M विदुरमतं. — *Adhy. no.* (figures, words or both): D5 88; D6 84; D7 M1–3.5 93; T G2.4.5 94; G1 95; G3 M4 92. — *S'loka no.:* Dn D8 30.

## 91

☞ This adhy. is missing in K3.5 (cf. v.l. 5. 32. 15; 90. 1).

Before 1, K4 D8 S (except G1) ins.:

418* वैशंपायनः ।
विदुरस्य वचः श्रुत्वा प्रश्रितं पुरुषोत्तमः ।
इदं होवाच वचनं भगवान्मधुसूदनः ।

[(L. 1) G3 प्रश्रितः. K4 मधुसूदनः (for पुरुषो°). — (L. 2) D8 T1 G3 प्रोवाच (for होवाच).]

— K2 B3 Dn D1.2.7.10 T G1–3.5 M (except M2) श्रीभगवान्; G4 कृष्णः. — *c*) Ds T G1.2.5 तथा (for यथा). — *d*) K4 B D (except D2.4.7.9.10) भवता (for सुहृदा).

2 *a*) T1 G1 तत्त्वं (for तथ्यं). — *c*) Ds यथा (for तथा). — *d*) D2 यथैव; S क्षत्तस्ते (for त्वयैतत्). D3.4.9 पितृवन्मयि; Ca पितृमातृवत् (as in text).

3 *ab*) K1 एवं; K2 S सर्वं (for सत्यं). G4 ह्येवं (for युक्तं). K4 B4 D (except Dn1 D1–4.10) G3 M5 वा; G4 मे (for the second च). K1.2 T2 G2.4.5 om. अपि (leaving hiatus!). K1.2 D1.5.6.8.10 एतद् (for एव). T1 G2.5 यदा (for यथा). G4 यदा यत्त्वं यदात्थ मां. — *c*) S शृणु च (for शृणुष्व). — *d*) S मम (for भव).

4 *a*) K2 D7 S °राष्ट्राणां. — K4 om. 4*b*–5*b*. — *b*) K1 G5 वैरिणां; B D (except D1) T2 G2 वैरतां. — *d*) K1 D2 G5 अस्मि (for अद्य).

5 K4 om. 5*ab* (cf. v.l. 4). — *a*) S कृत्स्नां (for सर्वां). — *b*) D3.4.9 सहाश्वरथकुंजरां. — *c*) K1 अमोचयन्; K2 प्रमो°; D7 G2 यो मोच°. — *d*) K1.2 D7 प्राप्नुयां. K2 पुण्यम् (for धर्मम्).

6 *a*) D1 धर्मकार्यें. K1 D7.8 धर्मं कुर्वन्यथाशक्त्या; K2 धर्मकार्यें यतेच्छक्त्या; D2 धर्मकामार्थतां शक्त्या; D3.4.9 धर्मकामो यथाशक्ति; S धर्मं(G5 °र्में)कार्यें यतमानो. — *b*) B Dn Ds D10 नो (for न). N (except D1–4.9; K3.5 missing) M5 प्राप्नोति (for शक्नोति). — *d*) K2 T1 तत्र; D3.4.9 इति (for अत्र).

7 *a*) K2 S (except G4 M2.5) चिंतितं (for चिन्तयन्) — *b*) K1 उपपादयेत्; K2 (before corr.) उपपद्यते, and (after corr.) उपपादितं; K4 B2.4 Dn2 अतिरोचयन्; Dn1 D2.4 T2 G2 Cs अभिरोचयेत्; D7.10 उपपादयन्; T1 G1 समाचरेत्; G4.5 करोति यः; Ca अभिरोचयन् (as in text). — *cd*) K1 D7.8 अप्येवं; K4 B Dn Ds D1.2.5.6.10 इत्येवं (avoiding hiatus!); S इति (for एवं).

8 *a*) K1.2 (*sup. lin. sec. m.* as in text) Ds G5 प्रथमं; G2 च शमं (for प्रशमं).

9 *a*) K2 आपद्धीयं (for सेयमापन्). — *b*) K2 D1

कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ॥ ९
व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते ।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ १०
आ केशग्रहणान्मित्रमकार्यात्संनिवर्तयन् ।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ११
तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् ।
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति ॥ १२
हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च ।
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया ॥ १३
हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि ।
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति ॥ १४
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन मध्यस्थं न तन्मित्रं विदुर्बुधाः ॥ १५
न मां ब्रूयुरधर्मज्ञा मूढा असुहृदस्तथा ।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् ॥ १६
उभयोः साधयन्नर्थमहमागत इत्युत ।
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् ॥ १७
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ १८
अहापयन्पाण्डवार्थं यथाव-
च्छमं कुरूणां यदि चाचरेयम् ।
पुण्यं च मे स्याच्चरितं महार्थं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ १९
अपि वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन्धार्तराष्ट्राः समर्था
मां च प्राप्तं कुरवः पूजयेयुः ॥ २०
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ २१

**वैशंपायन उवाच ।**

इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा ।
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥ २२

C. 5. 3329
B. 5. 93. 22
K. 5. 93. 23

इति श्रीमहाभारते उद्योगपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

एवं. $D_9$ $T_1$ $G_1$ कुरुष्वेवमुपस्थिता. — c) $D_{2-4.9}$ कर्णदुर्योधनकृपाः; S (except $G_{3.4}$) °कृते. — d) $T_2$ दुःशासनकृते स्वयं.

10 a) $K_1$ $B_{1.2.4.5}$ D (except $D_{7.10}$) $T_1$ $G_1$ व्यसने; $B_3$ °नात् (for °नैः). $D_{3.4.9}$ च (for हि). — b) $K_1$ $D_{7.10}$ transp. यो and मित्रं. — c) $K_{1.2}$ $D_{1.7.8.10}$ अर्थज्ञो हि; $K_4$ $B_4$ $D_{5.6}$ Cn अनर्थाय (Cnp अनुनीय as in text); $B_2$ $D_8$ अन्वयाय; $D_2$ अर्थं ज्ञात्वा; $D_{3.4.9}$ अनर्थज्ञः; T $G_{1-3}$ अन्वानीय; $G_{4.5}$ अन्वयानि. — d) B $D_{2-4}$ S (except $T_1$ $M_3$) Cn तत् (for तं).

11 b) $K_2$ S (except $G_3$) संनिवर्तयेत्. — c) Hypermetric! $K_1$ $D_7$ Ca न वाच्यः (for अवाच्यः). $K_1$ $D_1$ $T_2$ $G_2$ कस्य; Ca. d कस्यचित् (as in text).

12 a) $K_{1.2}$ $D_7$ समीक्ष्य (for समर्थं).

13 a) $K_2$ $T_1$ $G_1$ हितं च; $B_{1.3.5}$ हिताय (for हितं हि). — b) S अथो ($T_2$ $G_2$ अथा-) हितं (for तथैव च). — d) $D_8$ करि° (for यति°).

15 a) $K_2$ $D_8$ $T_1$ $G_1$ च; $D_2$ तु (for हि). — b) $D_{3.4.9}$ अभिमन्यते (for °पद्यते). — c) $K_4$ $Dn_2$ $D_{1.5.9}$ माध्यस्थं; $B_{1.3.5}$ $D_2$ $T_2$ $G_{1.2}$ मध्यस्थ्यं; $B_{2.4}$ $D_8$ $D_{3.4.6}$ माध्यस्थ्यं.

16 a) $G_5$ M मा (for मां). N (except $K_1$ $D_7$; $K_{3.5}$ missing) $M_5$ अधर्मिष्ठा ($D_2$ °ष्ठं) (for °र्मज्ञा). — b) $K_{2.4}$ B Dn $D_8$ $D_{5-8.10}$ $G_3$ ह्य($K_2$ कु)सुहृदः; $D_{2-4.9}$ ह्यहृदयः (for असुहृदः). — c) $D_{3.4.9}$ transp. शक्तो and न. $D_8$ $D_8$ न वार°; $G_4$ नोवार° (for नावार°).

17 b) $D_1$ $T_2$ $G_3$ M अयं (for अहं). $G_{4.5}$ महाभाग इतीत्युत. — d) S धर्मस्यानृण्यतामियां.

18 =(var.) 5. 81. 4. — a) $K_1$ $D_{10}$ S धर्मार्थसंयुक्तं; $D_{5.6}$ °र्थमुक्तं हि. — c) $T_2$ $G_2$ हि दास्यते; Ca आदा° (as in text).

19 a) $K_1$ अवाप्यार्थं; $K_2$ $D_8$ अवाप्याहं; $D_2$ (corrupt) प्रश्रापयन् (m अहापयन्वै); $D_{3.4}$ अहाप्य वै (for अहापयन्). $Dn_2$ $D_8$ पांडवार्थैः. S अहं यतेयं पांडवानां हिता($G_{3.5}$ यथा-; $G_4$ शमा)र्थं. — b) $D_{1.2}$ अथ (for यदि). $K_{1.2}$ $Dn_1$ $D_{1-4.9.10}$ चेच्चरेयं; $B_3$ तैश्चरे°; $D_8$ वा चरे° (for चाचरे°). S शमं कुरूणां च सहेह ($T_1$ $G_1$ सह सर्वे-; $T_2$ $G_{2.4}$ च सहैव) राजभिः. — c) $K_4$ B (except $B_3$) $Dn_2$ $D_8$

## ९२

C. 5. 3330
B. 5. 94. 1
K. 5. 94. 1

वैशंपायन उवाच ।
तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा ।
शिवा नक्षत्रसंपन्ना सा व्यतीयाय शर्वरी ॥ १
धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः ।
शृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥ २
कथाभिरनुरूपाभिः कृष्णस्यामिततेजसः ।
अकामस्येव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ३
ततस्तु स्वरसंपन्ना बहवः सूतमागधाः ।
शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ४
तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम् ।
सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ॥ ५
कृतोदकार्यजप्यः स हुताग्निः समलंकृतः ।
तत आदित्यमुद्यन्तमुपातिष्ठत माधवः ॥ ६
अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
संध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ७
आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।

---

महात्मन्; $G_4$ महाफलं; $C_a$ महार्थं (as in text). — [d]) $D_5$ चेत्; $D_{3.4.9}$ वै (for च). S मुच्येरंश्चेन् ($G_4$ °रन्; $G_5$ °रंस्ते) मृत्युपाशाद्धि सर्वे.

20 [a]) S का($G_{3.5}$ र)स्यां; $C_{a.d}$ काव्यां (as in text). — [c]) $K_1$ आदेक्ष्यते; $T_2$ $G_2$ आचक्षेरन् (for अवेक्षे°). $K_1$ धार्तराष्ट्रः. $K_2$ $D_1$ समर्थां; $K_4$ B (except $B_3$) Dn $D_5$ $D_{2-10}$ शमार्थं; $T_1$ $G_1$ समग्रा; $T_2$ $G_2$ समाधौ; $G_3$ समस्तां; $G_{4.5}$ समस्ताः (for समर्थां). — [d]) $T_2$ $G_2$ प्रोक्तं (for प्राप्तं).

21 =5. 70. 86.

22 $D_{3.4.9}$ $T_1$ $G_4$ om. the ref. $K_5$ resumes! — [a]) $K_1$ $D_{3.4.7.9.10}$ स (for इति). $K_5$ एवमुक्त्वा तु वचनं. — [b]) $D_5$ वृषभस्; $M_2$ अधिपस्. $D_{3.4.9}$ $G_3$ तथा (for तदा). $G_4$ वृष्णिवीरः प्रतापवान्. — [d]) N (mostly) शिष्ये. $K_5$ भूयः (for यदु-).

Colophon missing in $K_3$; $K_5$ om. it. — *Sub-parvan:* $K_{1.2.4}$ B Dn $D_5$ $D_{1.3.5-8.10}$ $T_1$ $G_1$ M भगवद्यान. — *Adhy. name:* $T_1$ विदुरं प्रति भगवद्वचनं; M वासुदेव($M_1$ भगवन्)मतं. — *Adhy. no.* (figures, words or both): $D_5$ 89 (repeated); $D_6$ 85; $D_7$ $M_{1-3.5}$ 94; T $G_{2.4.5}$ 95; $G_1$ 96; $G_3$ $M_4$ 93. — *S'loka no.:* $Dn_1$ $D_8$ 21; $Dn_2$ 22.

### 92

☞ This adhy. is missing in $K_3$ (cf. v.l. 5. 32. 15).

1 [a]) $D_5$ S कथाः (for तथा). $K_{1.2.5}$ D (except $Dn_2$ $D_5$ $D_{5.6.10}$) $T_2$ $G_{2.5}$ एवं. — [b]) $D_5$ $D_2$ $G_{1.4}$ तथा ($Ds_2$ ततः) (for तदा). — [c]) $K_1$ नक्षत्रसहिता; $C_{a.d}$ as in text. — [d]) =$3^d$. $D_7$ व्यतीता च; $D_9$ °ताथ (for °याय). $T_2$ $G_2$ सा व्यतीता विभावरी. — After 1, $D_2$ $G_3$ read 4.

2 $K_4$ om. $2^a$–$3^b$; $M_2$ om. (hapl.) 2–3. — [a]) $K_{1.2.5}$ $B_{4.5}$ $D_{7.10}$ धर्मकामार्थवत्य($B_{4.5}$ °युक्त)श्च; $D_{1.3.4.9}$ धर्मार्थकामवत्यस्तु ($D_1$ °श्च); $D_2$ °बद्धाश्च; S ($M_2$ om.) धर्म्या रम्याश्चार्थवतीः. — [b]) $D_2$ विचित्राः सुपदाक्षराः.

3 $K_4$ om. $3^{ab}$; $K_5$ $M_2$ (cf. v.l. 2) om. 3. — [a]) $D_{1.2}$ S (except $M_5$; $M_2$ om.) °कूलाभिः (for °रूपाभिः). — [b]) $K_{1.2}$ हृतस्य; $D_2$ नु तस्य; $D_2$ एवं हि; T $G_{1.2}$ रक्तस्य; $G_3$ M ($M_2$ om.) रतस्य (for कृष्णस्य). $G_{4.5}$ क्षत्तुस्तस्यामितौजसः. — [c]) T G (except $G_4$) एव (for इव). — [d]) =$1^d$. $D_2$ व्यतीता च (for °याय).

4 $D_2$ $G_3$ read 4 after 1. — [a]) S (except $T_2$ $G_2$) ततः सुस्वरसंपन्ना. — [d]) $D_{1.2}$ समबोधयन्; $T_2$ $G_2$ प्रत्यपूजयन्; $M_{3.5}$ (*inf. lin.* as in text) °घोषयन् (for °बोधयन्). — After 4, $K_4$ S (except $G_4$) ins.:

419* ब्रह्मादिवसुदेवान्तं वंशं समनुकीर्तयन् ।
तुष्टुवुः केशवं तत्र बहवः सूतमागधाः ।
[ (L. 2) $K_4$ $T_1$ पुंडरीकाक्षं (for केशवं तत्र). ]

5 [b]) $K_2$ $D_1$ वृषभः. — [c]) $G_4$ तदाह्निकं (for आवश्यकं). — [d]) $G_{1.4}$ °कल्यं (for °कार्यं).

6 $K_5$ om. 6–7. — [a]) $K_1$ $D_2$ M कृतोदकार्थजप्यः स ($M_1$ सन्); $K_2$ °काग्निजप्यः स; $K_4$ B Dn $D_{5.6.8}$ कृतोदका($B_3$ कृताग्निको)नुजप्यः स; $D_{3.4.10}$ °कांतजप्यः स; $D_9$ °दको यथान्यायं; T G कृतोदकः कृतजपः. — [c]) $K_4$ $M_5$ तत्र (for तत). T G transp. आदित्यं and उद्यन्तं. B (except $B_3$) $Dn_1$ $D_{3.4}$ चादित्यम्. — [d]) $D_{1.3}$ $T_2$ $G_{2.5}$ उपतिष्ठत. $D_{1.2.7}$ $G_4$ केशवः (for माधवः).

7 $K_5$ om. 7 (cf. v.l. 6). — [a]) S ततो दुर्योधनः

कुरूंश्च भीष्मप्रमुखान्राज्ञः सर्वांश्च पार्थिवान् ॥ ८
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ९
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परंतपः ॥ १०
विसृष्टवन्तं रत्नानि दाशार्हमपराजितम् ।
तिष्ठन्तमुपसंगम्य ववन्दे सारथिस्तदा ॥ ११
तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः ।
महाभ्रघननिर्घोषं सर्वरत्नविभूषितम् ॥ १२
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ।
कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन् ॥ १३
कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ।
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः ॥ १४
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ।
सर्वप्राणभृतां श्रेष्ठं सर्वधर्मभृतां वरम् ॥ १५
ततो दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
द्वितीयेन रथेनैनमन्वयातां परंतपम् ॥ १६
सात्यकिः कृतवर्मा च वृष्णीनां च महारथाः ।
पृष्ठतोऽनुययुः कृष्णं रथैरश्वैर्गजैरपि ॥ १७
तेषां हेमपरिष्कारा युक्ताः परमवाजिभिः ।
गच्छतां घोषिणश्चित्राश्चारु बभ्राजिरे रथाः ॥ १८
संमृष्टसंसिक्तरजः प्रतिपेदे महापथम् ।

G. 5. 3349
B. 5. 94. 20
K. 5. 94. 32

---

कर्णः. — $^{c}$) $K_1$ $B_{1.3.5}$ $Dn_2$ $Ds_1$ $D_{1.5-7}$ अभ्येतां; $T_1$ $G_{1.4}$ अभ्यायन्; $T_2$ $G_{2.3.5}$ M अभ्यायात्; Ca अभ्यैतां (for अभ्येत्य). — $^{d}$) $D_7$ अमितौजसं (for अपरा°).

8 $^{a}$) $K_1$ $D_{1-4.8.9}$ च (for तु). $K_2$ ततस्तस्य (for तु कृष्णस्य). S आचख्युस्तेथ ($T_2$ °स्ते तु; $G_{2.5}$ °स्ते च) कृष्णाय. Cs cites आचक्षेतां (as in text). — $^{b}$) $M_{3.4}$ सभां गतं. — $^{d}$) S चैवाथ (for सर्वांश्च).

9 For S see below. — $^{a}$) $K_{1.2.5}$ $D_1$ अर्चयं($K_5$ °य)तः; $B_8$ $Ds_2$ अर्थय($Ds_2$ °यं)तः; Cs as in text. $K_1$ गोविंदं. — $K_5$ om. $9^{b}$–$10^{b}$. — For 9, S (transposing the lines) subst.:

420* तानभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ।
तेऽभ्यर्च्य देवकीपुत्रं दिवि शक्रमिवामराः ।

10 $K_5$ om. $10^{ab}$ (cf. v.l. 9). — $^{b}$) $G_3$ महायशाः (for जना°). — $^{c}$) $Ds_2$ $D_{1.9}$ $G_4$ हिरण्यवासांसि. — $^{d}$) $K_1$ $Ds_2$ $D_8$ परंतप; $D_2$ जनार्दनः. $K_2$ गाश्च रत्नानि सर्वशः.

11 $^{a}$) $K_4$ $B_{2.4}$ Dn Ds $D_{5.6.8}$ विसृज्य बहुरत्नानि. Ca.d cite निसृष्टवन्तं. — $^{d}$) $T_1$ $G_1$ ववंदे कृष्णसारथिः. — After 11, N ($K_3$ missing; $K_5$ om. line 2) ins.:

421* ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हयोत्तमयुजा शीघ्रमुपातिष्ठत दारुकः ।
[ Line 1 = 5. 129. $21^{ab}$. ]

On the other hand a passage given in App. I (No. 5) is ins. in S after 11; in $K_4$ after 421*.

12 $K_5$ om. $12^{ab}$. — $^{b}$) $D_1$ $G_4$ महात्मनः (for °मनाः). — $^{c}$) S °घनसंकाशं.

13 $D_7$ om. $13^{c}$–$14^{d}$. — $^{c}$) $D_{3.4.9}$ S आबध्य; Ca.d आमुच्य (as in text).

14 $D_7$ om. 14 (cf. v.l. 13). — $^{a}$) $G_4$ चापि (for कृष्णो). — $^{b}$) $T_2$ $G_4$ अपि संवृतः; $G_2$ अपि रक्षितः (for अभि°). — $^{c}$) $K_{1.2}$ प्रातिष्ठत; $G_{2-4}$ अतिष्ठत. — $^{d}$) $T_2$ °वल्लभः.

15 $^{b}$) $D_{3.4.9}$ चैव (for सर्व-). — $K_5$ om. $15^{cd}$; $D_9$ om. $15^{c}$–$16^{b}$. — $^{c}$) $T_2$ $G_{1.2}$ श्रेष्ठः. — $^{d}$) $K_2$ सर्वप्राणभृतां; $K_4$ B D (except $D_{7.10}$; $D_9$ om.) $M_2$ सर्वबुद्धिमतां. $B_{1.5}$ T $G_{1.2.4}$ $M_{1.2}$ वरः.

16 $D_9$ om. $16^{ab}$ (cf. v.l. 15). — $16^{ab}$ = (var.) $7^{ab}$. — $^{a}$) B (except $B_4$) तदा (for ततो). S कर्णः (for कृष्णं). — $^{c}$) Ds $D_8$ $T_2$ $G_2$ एवम्; $D_2$ एव; $D_9$ एतम् (for एनम्). — $^{d}$) $D_{3.4.9}$ अन्वयाता; $D_{5.8}$ अन्वायातां ($D_8$ °तं); $T_1$ $G_1$ अन्वयुस्ते; $T_2$ $G_{2-5}$ M अनु($G_3$ °भि)याताः. $K_5$ $Dn_1$ $Ds_2$ $D_7$ परंतप; $D_2$ परस्परं; $D_{3.4.9}$ अरिंदमं.

17 $^{b}$) $K_{2.4}$ B D (except $D_{7.10}$) अपरे रथाः ($K_2$ $Ds_1$ तथा) (for महा°). — $^{d}$) $K_{4.5}$ B D (except $D_{1-4.7.9}$) transp. रथैः and गजैः. $D_{1.2}$ तथा (for अपि).

18 $K_5$ om. 18–26. — $^{a}$) N (except $D_1$; $K_3$ missing; $K_5$ om.) $G_5$ Ca हेमपरिष्कारैः ($K_{1.2}$ °स्काराः; $G_5$ °ष्कार-). — $^{b}$) $D_5$(m as in text)$_{.6.8}$ $G_5$ मुक्ताः (for युक्ताः). — $^{c}$) $K_{1.2}$ $D_{1.7.10}$ प्रयांतः; $Ds_2$ गच्छंतः; $D_2$ व्रजंतः; $D_{3.4.9}$ जयिनः; S यास्यतां (for गच्छतां). $T_2$ $G_{2-4}$ घोषणाश्च. $B_4$ $D_{5.6.8}$ चित्र- (for चित्राश्च). — $^{d}$) $K_4$ B Dn Ds $D_{5.6.8}$ रथा राजन्विरेजिरे.

19 $K_5$ om. 19 (cf. v.l. 18). — $^{a}$) $K_{1.2}$ $D_{9.10}$ संमृष्टमथ संसिक्तं; Cap °संसिक्तरजं; Ca as in text. — $^{b}$) $Dn_2$ $Ds_2$ $D_{9.10}$ T $G_{2.3}$ $M_4$ महारथं; Ca as in text.

C. 5. 3349
B. 5. 94. 20
K. 5. 94. 32

राजर्षिचरितं काले कृष्णो धीमाञ्श्रिया ज्वलन् ॥ १९
ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः ।
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥ २०
प्रवीराः सर्वलोकस्य युवानः सिंहविक्रमाः ।
परिवार्य रथं शौरेरगच्छन्त परंतपाः ॥ २१
ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः ।
असिप्रासायुधधराः कृष्णस्यासन्पुरःसराः ॥ २२
गजाः परःशतास्तत्र वराश्वाश्वाः सहस्रशः ।
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् ॥ २३
पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम् ।
सवृद्धबालं सस्त्रीकं रथ्यागतमरिंदमम् ॥ २४

वेदिकापाश्रिताभिश्च समाक्रान्तान्यनेकशः ।
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत ॥ २५
संपूज्यमानः कुरुभिः संशृण्वन्विविधाः कथाः ।
यथार्हं प्रतिसत्कुर्वन्प्रेक्षमाणः शनैर्ययौ ॥ २६
ततः सभां समासाद्य केशवस्यानुयायिनः ।
सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् ॥ २७
ततः सा समितिः सर्वा राज्ञाममिततेजसाम् ।
संप्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ २८
ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः ।
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ २९
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ।

— After $19^{ab}$, $T_1$ $G_4$ read $24^{cd}$. — $^{c}$) $Dn_1$ $D_{1.9}$ $G_4$ राजर्षिचरिते ($D_9$ $G_4$ °तः) काले. — $^{d}$) S श्रिया परमया ज्वलन्.

20 $K_5$ om. 20 (cf. v.l. 18). — $^{b}$) $K_1$ प्राचोद्यंत; $K_2$ $D_{1.8.9}$ $T_2$ $G_{3-5}$ $M_5$ प्रवाद्यंत ($G_{3.5}$ °ते). T $G_{1.2.4.5}$ अथ पुष्कराः; $G_3$ M च पुष्कराः; Ca एकपुष्कलाः; Cd.s as in text. — $^{c}$) $D_{2-5.8.9}$ शंखांश्च. — $^{d}$) $T_2$ (m as in text) वाद्यभांडानि यानि च.

21 $K_5$ om. 21 (cf. v.l. 18). — $^{b}$) $D_2$ सत्य° (for सिंह°). — $^{d}$) $D_7$ अतिष्ठंत (for अगच्छन्त). $K_{1.2}$ परं शताः; $D_{3.4.9}$ $G_5$ °तप; $G_4$ °तपं.

22 $K_5$ om. 22 (cf. v.l. 18). — $^{ab}$) K ततो योधवरा हृष्टा विविधायुधपाणयः. — $^{c}$) $K_2$ असिचक्रायुधधराः. — After 22, $K_2$ ins.:

422* योधाः परशुहस्ताश्च शतशोऽथ सहस्रशः ।

After the above, $K_2$ reads $26^{ab}$, 25, $23^{cd}$, 24, $23^{ab}$, $26^{cd}$, etc.

23 $K_5$ om. 23 (cf. v.l. 18). For sequence of $K_2$ cf. v.l. 22. — $^{a}$) $K_2$ $D_{1.7}$ $G_{3.4}$ परशताः; $K_4$ $B_{1-3.5}$ $Dn_1$ $D_{5.6.8}$ पंचशताः; $B_4$ $Dn_2$ Ds $D_{3.4.9.10}$ पंचाशताः; M Cd परं शताः (for परःशताः). $T_2$ $G_2$ चात्र (for तत्र). — $^{b}$) $K_1$ T G (except $G_4$) व($T_1$ $G_5$ प)राश्वाश्च; $K_4$ B D रथाश्वासन् ($D_1$ °श्वाश्वाः; $D_{10}$ °श्चैव); $M_2$ पराश्वाश्वाः (for वराश्वाश्वाः). $D_{1.2}$ च सर्वशः; $G_3$ (*inf. lin.* as in text) परःशताः (for सहस्रशः). — $^{c}$) $K_2$ हृष्टास्तम्; B (except $B_1$) $Dn_2$ $Ds_2$ $D_{3.4.9}$ प्रायांतम्; $D_4$ प्रयातम्. $K_{1.2}$ $D_{1.2.10}$ $T_1$ $G_1$ M वीराः.

24 $K_5$ om. 24 (cf. v.l. 18). For sequence of $K_2$ cf. v.l. 22. — $^{a}$) Ds एवं (for पुरं). $G_{3.5}$ संद्रष्टुं; M उद्वृत्तं; Ca संस्यूतं (for संवृत्तं). — $^{b}$) $G_{3.5}$ यथा° (for द्रष्टु°). — $T_1$ $G_4$ read $24^{cd}$ after $19^{ab}$. — $^{c}$) $K_4$ Dn Ds $D_{5.6.8}$ स($D_8$ आ)बालवृद्धं (for सवृद्धबालं). $K_2$ $D_7$ सवृद्धबालसस्त्रीकं. — $^{d}$) $K_{2.4}$ $Dn_1$ $D_{7.10}$ $G_{3.5}$ $M_{1.2}$ अरिंदम.

25 $K_5$ om. 25 (cf. v.l. 18). For sequence of $K_2$ cf. v.l. 22. — $^{a}$) $K_4$ B D (except $D_1$) $G_2$ $M_1$ वेदिकामा($G_2$ °चक्रा)श्रिताभिश्च; $G_4$ °पाश्रयाभिश्च. — $25^{cd}$ =(var.) 5. 87. $9^{cd}$.

26 $K_5$ om. 26 (cf. v.l. 18). For sequence of $K_2$ cf. v.l. 22. — $^{a}$) B (except $B_5$) $Dn_2$ $D_{5.6}$ स पूज्यमानः. $G_3$ संपूज्यः कुरुभिः सर्वैः; $G_5$ माधवः कुरुभिः पूज्यः. — $^{b}$) $K_1$ $D_{2.3}$ $G_2$ $M_3$ स श्रृण्वन्; $K_2$ श्रृण्वंश्च. N (except $K_2$ $D_{1.2}$; $K_3$ missing; $K_5$ om.) मधुराः (for विविधाः). $K_2$ गिरः (for कथाः). — $^{c}$) $K_2$ यथावत् (for यथार्हं). $D_7$ प्रतिकुर्वन्वै. — $^{d}$) $D_3$ T $M_2$ प्रेक्ष्यमाणः. $K_2$ यथा; $D_7$ अपि (for ययौ).

27 $^{c}$) S °संमिश्रैः (for °निर्घोषैः). — $^{d}$) $B_4$ $D_{2-4.9}$ $G_4$ सर्वाभ्य($D_2$ °न्तु)नादयन्; $G_5$ सर्वा ह्यना°.

28 $K_5$ om. $28^{c}$–$29^{d}$. — $^{c}$) M (except $M_5$) प्राकंपत प्रहर्षेण.

29 $K_5$ om. 29 (cf. v.l. 28). — $^{a}$) $K_{1.2.4}$ B (except $B_4$) $D_{6-8.10}$ अभ्यासगते. — $^{b}$) $D_2$ $T_2$ (m as in text) $G_2$ समाहृष्टा (for समहृष्यन्). — $^{c}$) $K_1$ $D_{7.10}$ अथ (for तं).

30 $^{a}$) $K_{2.4}$ ततः प्राप्य (for आसाद्य तु). $M_{3-5}$ सभामृद्धाम् (for °द्वारम्). — $^{c}$) $K_{1.5}$ $D_7$ सोवतीर्य.

अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ३०
नगमेघप्रतीकाशां ज्वलन्तीमिव तेजसा ।
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ३१
पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ।
ज्योतींष्यादित्यवद्राजन्कुरून्प्रच्छादयञ्श्रिया ॥ ३२
अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ ।
वृष्णयः कृतवर्मा च आसन्कृष्णस्य पृष्ठतः ॥ ३३
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ३४
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्महामनाः ।
सहैव भीष्मद्रोणाभ्यामुदतिष्ठन्महायशाः ॥ ३५
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।
तानि राजसहस्राणि समुत्तस्थुः समन्ततः ॥ ३६
आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ।
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥ ३७
स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः ।
अभ्यभाषत धर्मात्मा राज्ञश्चान्यान्यथावयः ॥ ३८
तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ॥ ३९
तत्र तिष्ठन्स दाशार्हो राजमध्ये परंतपः ।
अपश्यदन्तरिक्षस्थानृषीन्परपुरंजयः ॥ ४०
ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ।
अभ्यभाषत दाशार्हो भीष्मं शांतनवं शनैः ॥ ४१
पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप । C. 5. 3372 B. 5. 94. 42 K. 5. 94. 54

— $^{d}$) A few N MSS. कैलाश°.

31 K5 om. 31–32. — $^{a}$) K4 B2–4 Dn Ds2 D1.5.7.8 नव°. — K1 om. $31^{bc}$. — $^{d}$) K2 transp. सभां and ततः.

32 K5 om. 32 (cf. v.l. 31). — $^{a}$) D2–4.9 पार्श्वे (for पाणौ). — $^{d}$) K4 B D (except D1.7) M3–5 प्रा(Dn1 आ)च्छा°.

33 D3.4.9 om. $33^{d}$–$34^{c}$. — $^{cd}$) K (K3 missing) B Dn Ds D1.5–8.10 अप्यासन् (K2 आसीत्); D2 ह्यासन् (for आसन्).

34 D3.4.9 om. $34^{abc}$ (cf. v.l. 33). — $^{b}$) Ds D7.8.10 तथा; D1 तु ते; D2 S च ते (for ततः). T2 G2 भीष्मद्रोणकृपास्ततः. — $34^{cd}$ = 5. 87. $14^{cd}$ (cf. v.l. 35).

35 =(var.) 5. 87. 13. — K5 om. 35. — $^{b}$) K4 B4 Dn Ds D5.6.8 नरेश्वरः; B1–3.5 नराधिपः (for महामनाः). — $^{c}$) K4 B D (except D2–4.8.9) G4 द्रोणभीष्माभ्यां (by transp.). — $^{d}$) G1.2.4 °मनाः (for °यशाः).

36 $^{a}$) M3.4 महाराज. — $^{b}$) D1 नरेश्वरे; D2 महात्मनि (for जने°). — $^{c}$) D2 सर्वे एव समुत्तस्थुः. — $^{d}$) K2 D7 सहस्रशः (for समन्ततः). D2 राजानो ये समागताः.

37 $^{a}$) M2 °मृष्टं (for °भद्रं). — $^{b}$) G4 सर्वरत्नविभूषितं. — K5 (which om. $38^{a}$–$40^{b}$) ins. after 37:

423* दुर्योधन उवाच ।
भीष्मद्रोणौ परित्यज्य त्वया मां मधुसूदन ।
किमर्थं पुण्डरीकाक्ष कृतं वृषलभोजनम् ।
भगवानुवाच ।
भक्तं पृच्छसि राजेन्द्र आदरं किं न पृच्छसि ।
भोजनं गतजीर्णं तु आदरमजरामरम् ।
आदरेणोपनीतानि शाकान्यपि फलानि च । [5]
प्रीणन्ति मम गात्राणि नामृतं मानवर्जितम् ।
वरं हालाहलं प्रीतं सद्यः प्राणहरं च यत् ।
न तु भुक्तं धनाढ्यस्य भ्रुवा कुटिलितेयुषे (sic) ।
न जातिः कारणं तात गुणाः कल्याणकारणम् ।
चाण्डालमपि सद्वृत्तं तं देवा ब्राह्मणं विदुः । [10]
कैवर्तीगर्भसंभूतो व्यासो नाम महामुनिः ।
तपसा ब्राह्मणो जातस्तस्माज्जातिर्न कारणम् ।

38 K5 om. $38^{a}$–$40^{b}$. — $^{a}$) D2–4.9 S च (for तु). — $^{b}$) T2 G2 भीष्मद्रोणैश्च. — $^{c}$) K2 दाशार्हः (for धर्मात्मा). — $^{d}$) T1 G1 यथार्हतः; T2 G4 M यथागतान्; G2.3.5 अथागतान्; M1 (*inf. lin.*) समागतान् (for यथावयः).

39 K5 om. 39 (cf. v.l. 38). — $^{a}$) K2 ते तु; D (except Dn D1.2.5.6) G4 ततः (for तत्र). — $^{b}$) K1 शुभं (for सभाम्). K2 सभामध्यगतं विभुं. — $^{c}$) K4 D5.8 प्रहृष्टाः; M3.5 राजानं. K2 संगताः (for पार्थिवाः).

40 K5 om. $40^{ab}$ (cf. v.l. 38). — $^{a}$) T1 G1 ततस् (for तत्र). B3 Ds D5–8.10 अतिष्ठंत; S तिष्ठंस्तु (for तिष्ठन्स). — $^{b}$) Dn1 Ds2 D3.4 परंतप.

42 $^{c}$) K1 Dn1 Ds2 D1.5.6.8.9 G2.5 निमंत्र्यताम्; K2 D3 T1 G1.4 निमंत्र्य तान्; G3 आमंत्र्यताम्. — $^{d}$) K5 संस्कारेणैव (for सत्कारेण च).

G. 5. 3372
B. 5. 94. 43
K. 5. 94. 55

निमन्त्र्यन्तामासनैश्च सत्कारेण च भूयसा ॥ ४२
नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् ।
पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् ॥ ४३
ऋषीन्शांतनवो दृष्ट्वा सभाद्वारमुपस्थितान् ।
त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् ॥ ४४
आसनान्यथ मृष्टानि महान्ति विपुलानि च ।
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः ॥ ४५
तेषु तत्रोपविष्टेषु गृहीतार्घेषु भारत ।
निषसादासने कृष्णो राजानश्च यथासनम् ॥ ४६
दुःशासनः सात्यकये ददावासनमुत्तमम् ।
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे ॥ ४७
अविदूरेऽथ कृष्णस्य कर्णदुर्योधनावुभौ ।
एकासने महात्मानौ निषीदतुरमर्षणौ ॥ ४८
गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः ।
निषसादासने राजा सहपुत्रो विशां पते ॥ ४९
विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे ।
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ॥ ५०
चिरस्य दृष्ट्वा दाशार्हं राजानः सर्वपार्थिवाः ।
अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम् ॥ ५१
अतसीपुष्पसंकाशः पीतवासा जनार्दनः ।
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ५२
ततस्तूष्णीं सर्वमासीद्गोविन्दगतमानसम् ।
न तत्र कश्चित्किंचिद्धि व्याजहार पुमान्क्वचित् ॥ ५३

इति श्रीमहाभारते उद्योगपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

44 [b]) B (except $B_4$) $D_{1-4.9}$ T $G_{1.2.5}$ उपागतान् (for उपस्थितान्). — $K_5$ om. 44[c]–53[d]. — [c]) $D_{2-4.9}$ भीष्मः (for भृत्यान्). — [d]) $D_{2-4.9}$ भृत्यानर्थं; $T_1$ $G_1$ आसनार्थं (for आसनानीति).

45 $K_5$ om. 45 (cf. v.l. 44). — [b]) विमलानि ($T_2$ $G_2$ विविधानि) (for विपुलानि). — [c]) $D_{4.9}$ °कांचनरत्नानि. — [d]) $K_2$ जना जह्रुस् (for समा°).

46 $K_5$ om. 46 (cf. v.l. 44). — [b]) $K_{1.2.4}$ $Dn_1$ $D_{4.6-9}$ गृहीतार्थेषु; B (except $B_4$) $Ds_1$ $D_{1.2}$ S गृहीतार्घ्येषु.

47 $K_5$ om. 47 (cf. v.l. 44). — [a]) $K_1$ Ds सात्यकाय; $G_3$ सात्यकिने. — $Ds_1$ om. 47[c]–48[b].

48 $K_5$ $D_6$ om. 48 (cf. v.l. 44); $Ds_1$ om. 48[ab] (cf. v.l. 47). — [a]) $K_4$ B D (except $Ds_2$; $Ds_1$ $D_6$ om.) तु (for ऽथ). $T_1$ $G_1$ अविदूरेण; $T_2$ $G_2$ अतिदूरेण (for °दूरेऽथ). — [d]) $K_1$ $D_7$ $T_1$ Cap निषेदतुः; $D_{1.3.4.9}$ न्य($D_1$ नि)षीदेतां; Ca निषीदतुः (as in text). $D_7$ S अरिंदमौ (for अमर्षणौ).

49 $K_5$ om. 49 (cf. v.l. 44). — [a]) $D_{4.9}$ विवेश शकुनिस्तत्र; $D_3$ विवेश तत्र शकुनिः. — [b]) $K_2$ अभिपूजितः; $G_3$ सर्वतो वृतः; M अभिसंवृतः (for °रक्षितः). — [c]) $K_1$ $D_{1.3.4.9}$ शुभ्रे; $K_2$ राजन् (for राजा). — [d]) $K_1$ $D_{1-4.7.9}$ T G (except $G_5$) $M_2$ सह पुत्रैर्; $M_{3-5}$ सह ताभ्यां (for °पुत्रो).

50 $K_5$ om. 50 (cf. v.l. 44). — [b]) $K_{2.4}$ $Ds_2$ $D_{5.6.8}$ $T_1$ $G_1$ शुक्लस्पर्ध्यं($T_1$ $G_1$ °साध्व)जिनोत्तरे.

51 $K_5$ om. 51 (cf. v.l. 44). — [ab]) $K_2$ transp. दाशार्हं and राजानः. $K_4$ B D (except $D_{1.2.10}$) सर्वं एव ते (for °पार्थिवाः).

52 $K_5$ om. 52 (cf. v.l. 44). — [c]) $D_{3.4.9}$ सदो° (for सभा°). — [d]) T G हेम्नी($T_2$ $G_2$ °म्ने; $G_3$ °म्ना)वोपचितो मणिः.

53 $K_5$ om. 53 (cf. v.l. 44). — [a]) $M_3$ तत्र (for ततस्). $D_{3.4.9}$ समासीरन् (for सर्वमासीद्). — [b]) $D_{3.4.9}$ °गतचेतसः; S °गतचेतनं ($G_4$ °सं). — [c]) Ds $D_2$ $T_2$ $G_2$ transp. कश्चित् and किंचित्. $K_4$ B D (except $D_{1.2.10}$) वा; $G_{2.4}$ च (for हि). — [d]) $D_{7.10}$ (*sup. lin.* as in text) तदा; S मुदा (for पुमान्).

Colophon missing in $K_3$. — *Sub-parvan:* $K_{1.4.5}$ B Dn Ds $D_{2.5-8.10}$ $T_1$ $G_1$ M भगवद्यान. — *Adhy. name:* $D_1$ कृष्णस्य पुनः सभागमनं; $T_1$ भगवतः सभाप्रवेशः; $G_1$ M सभाप्रवेशः; $G_5$ कृष्णसभाप्रवेशः. — *Adhy. no.* (figures, words or both): $D_5$ 90; $D_6$ 85 (repeated); $D_7$ $M_{1-3.5}$ 95; T $G_{2.4.5}$ 96; $G_1$ 97; $G_3$ $M_4$ 94. — *S'loka no.*: $Dn_1$ $D_3$ 53; $Dn_2$ 54.

## ९३

वैशंपायन उवाच ।
तेष्वासीनेषु सर्वेषु तूष्णींभूतेषु राजसु ।
वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः ॥ १
जीमूत इव घर्मान्ते सर्वां संश्रावयन्सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ २
कुरूणां पाण्डवानां च शमः स्यादिति भारत ।
अप्रयत्नेन वीराणामेतद्यतितुमागतः ॥ ३
राजन्नान्यत्प्रवक्तव्यं तव निःश्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिंदम ॥ ४
इदमद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥ ५
कृपानुकम्पा कारुण्यमानृशंस्यं च भारत ।
तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ॥ ६
तस्मिन्नेवंविधे राजन्कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ ७
त्वं हि वारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्या प्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ॥ ८
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ९
अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ भरतर्षभ ॥ १०
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ११
शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत । C. 5. 3395 B. 5. 95. 12 K. 5. 95. 12

93

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15).

1 [a]) K2.5 T1 G4.5 आसनेषु (for आसी°). — [d]) T2 G2 देवदुंदुभिनिस्वनः; G3.5 सुदंष्ट्रो भीमनिस्वनः.

2 [b]) D3 सर्वं; D6 G3 M3 सर्वान् (for सर्वां). K2 D1.2 S (except G4) विश्रा(D1 °श्रा)वयन् (for संश्रा°). — [d]) K1.2 समाभाष्य च; T1 समाभाषत (for समभा°). D7 समाभाष्य जनार्दनः.

3 Before 3, K1.4 Dn1 D7.10 श्रीभगवानुवाच; D3.4.8.9 भगवानुवाच (D3.4 om. उ°); T1 G1.5 श्रीकृष्णः; T2 श्रीगोविंदः. — [c]) K2 सुप्रसन्नेन; K4 B D (except D1.2.9) अप्रणाशेन (for अप्रयत्नेन). — [d]) K1.5 D2–4.9 T2 G2.3 वेदितुम्; B4 D8 याचितुम्; T1 G1 गदितुम्; G5 विदितुम् (for यतितुम्).

4 Before 4, M3–5 ins. वासुदेवः. — [a]) S अद्य (for नान्यत्). D2–6.8.9 राजन्मयैव वक्तव्यं. — [b]) K4 B (except B5) D (except D1–4.9.10) नैःश्रे° (for निःश्रे°). — [c]) B3 D1.7 तत् (for ते).

5 [a]) N (except D1; K3 missing) ह्यद्य (for अद्य). — [b]) K1.2.5 B2 D7.10 भारत (for पार्थिव). S पृथिव्यां सर्वराजसु. — K5 (which om. hapl. 5[c]–6[d]) ins. after 5[ab]:

424* त्वन्निमित्तं विशेषेण नेह युक्तं विशिष्यते ।

6 K5 om. 6 (cf. v.l. 5). — [c]) K2 दानं (for सत्यं). S सत्यं क्षमा(G4 तितिक्षा चा)र्जवं चैव. — [d]) D5 T G1.2.5 एव; D2 एवं (for एतद्). D3.4.9 विभाव्यते; S विशेषतः (for विशि°).

8 [a]) K2 D1 Ca.d वारयतां; K4 B2.4 Dn D10 धारयिता; G1 M4 पारयिता. K5 त्वं निवारयतां श्रेष्ठः. — [c]) D3.4 प्रचलतां. — [d]) B2 D5.6 S (except G1.2 M1) अभ्यंतरेषु.

9 [a]) B1.3 त्वत्-; B2.5 D5 D5.6.8 तत् (for ते). T1 G1 तव पुत्रास्तु कौरव्य. — [d]) K1 D10 प्रचलंति.

10 [a]) T G1.2.4 हृत° (for गत°). — [b]) K2 गतचेतसः; D9 हृत°; T1 G1 आहृत°. K1 B2 लोभोपह(B2 °हृ)तचेतसः. — [d]) T1 G3 विद्धि (for वेत्थ). B D (except D3.4.7.9) पुरुष° (for भरत°). G4 त्वमेतद्वेत्थ भारत.

11 K5 om. 11–14. — [a]) M (except M1) सोयं (for सेयं). — [b]) K1.2 D1.2.10 भरतान् (K2 भवतां; D2 भारतान्) प्रत्युपस्थिता; D3.4.9 T1 G1.4 कुरुष्वेवमुप(G4 °व व्यव)स्थिता; D7 भारतानामुपस्थिता. — [c]) Some MSS. उपेक्ष°. T2 G1.2 उपेक्ष्यमाणः. — [d]) T G1.2 घातयिष्यसि.

12 K5 om. 12 (cf. v.l. 11). — [b]) B4 D2 Cn न (Cnp त्वं as in text). B4 D2 Cn दित्ससि (Cnp इच्छसि as in text). — [c]) K1.2 T2 G1–4 M सुदुष्करो (for न दुष्करो). K1.2 T2 G2.4 M अपि (for हि). G5 दुष्करो-

C. 5. 3395
B. 5. 95. 12
K. 5. 95. 12

न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥ १२

त्वय्यधीनः शमो राजन्मयि चैव विशां पते ।
पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ १३

आज्ञा तव हि राजेन्द्र कार्या पुत्रैः सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ १४

तव चैव हितं राजन्पाण्डवानामथो हितम् ।
शमे प्रयतमानस्य मम शासनकाङ्क्षिणाम् ॥ १५

स्वयं निष्कलमालक्ष्य संविधत्स्व विशां पते ।
सहभूतास्तु भरतास्तवैव स्युर्जनेश्वर ॥ १६

धर्मार्थयोस्तिष्ठ राजन्पाण्डवैरभिरक्षितः ।
न हि शक्यास्तथाभूता यत्नादपि नराधिप ॥ १७

न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ १८

यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ १९

सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः ।
युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा ॥ २०

सात्यकिश्च महातेजा युयुत्सुश्च महारथः ।
को नु तान्विपरीतात्मा युध्येत भरतर्षभ ॥ २१

लोकस्येश्वरतां भूयः शत्रुभिश्चाप्रधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ २२

तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते ।

---

प्यत्र न शमो.

13 $K_5$ om. 13 (cf. v.l. 11). — $^b$) $K_4$ $D_{5.6.8}$ त्वयि (for मयि). — After $13^{ab}$, $D_7$ ins.:

425* सहभूतास्तथैवैते सर्वनाशाय भारत ।

— $^c$) $B_4$ राजेंद्र (for कौरव्य). — $^d$) $K_2$ चापरान् (for अहं परान्). — After 13, S (except $G_{3.4}$) ins.:

426* हितं हि धार्तराष्ट्राणां पाण्डवानां तथा हितम् ।
शमे प्रयतमानानां तव शासनकाङ्क्षिणाम् ।
[ With line 2, cf. 5. 90. $10^{cd}$. ]

14 $K_5$ om. 14 (cf. v.l. 11). — $D_{2-4.9}$ *repeat* $14^{ab}$ after 21. — $^a$) S अनुज्ञातं (for आज्ञा तव). $D_{5.7.8}$ transp. तव and हि. $T_2$ $G_2$ भगवता (for हि राजेन्द्र). $D_1$ कौरव्य; $T_1$ $G_{1.3-5}$ $M_1$ (*inf. lin.*) भवता; M भवतः (for राजेन्द्र). — $^b$) S सर्वैः (for कार्या). $B_{1.3.5}$ $D_7$ सहानुगैः ($D_7$ °जैः); $D_{3.4.9}$ सबांधवैः. — $^c$) $D_{3.4.9}$ बलं यद् (for बलवद्).

15 $G_4$ om. $15^a$–$17^b$. — $^a$) $D_1$ तथैव च (for तव चैव). $D_{3.4.9}$ हि राजेंद्र (for हितं राजन्). — $^b$) $K_2$ तथा; $T_2$ ततो (for अथो). — $M_5$ om. $15^{cd}$. — $15^{cd}$ = (var.) 5. 90. $10^{cd}$. — $^d$) K ($K_3$ om.) D (except $D_{3.4}$) $M_2$ तव (for मम). N $T_1$ $G_1$ °कांक्षिणः.

16 $G_4$ om. 16. — $^a$) $D_{10}$ शमं; Cs स्वयं (as in text). K ($K_3$ missing) B $D_{2.5-8.10}$ Cap निष्फलं ($D_5$ *sup. lin. sec. m.* निश्चयं); $D_1$ लक्षणं; Ca.d.s निष्कलं (as in text). $D_{3.4.9}$ स्वयं निष्कलुषं क्षत्रं; S ($G_4$ om.) तेषां ($T_2$ G °षु) निष्कल्मषं राजन्. — $^b$) $K_1$ $D_{3.4.9}$ त्वं विधत्स्व; Cs संवि° (as in text). — $^c$) $K_4$ B D (except $D_{1.7}$) सहायभूताः; $T_2$ $G_2$ समाहूतास्तु; Ca.d.s सहभूतास्तु (as in text). $Dn_2$ Ds $T_2$ $G_{2.3}$ भवता (for भरताः). — Ds om. (? hapl.) $16^d$–$17^c$. — $^d$) $K_{1.5}$ $D_1$ तथा; S सह (for तव). $K_5$ $D_{10}$ जनेश्वराः; $T_1$ $G_{3.5}$ M जनाधिप; $T_2$ $G_2$ जनाधिपाः; $G_1$ नराधिप.

17 Ds om. $17^{abc}$ (cf. v.l. 16); $G_4$ om. $17^{ab}$. — $^c$) S °रूपा (for °भूता). $D_{3.4.9}$ न हि शक्यस्तदा भूयः. — $^d$) $K_5$ यमेनापि नराधिप; S युद्धे जेतुं जना($T_1$ $G_{1.2}$ नरा)धिप.

18 $^a$) $T_1$ $G_5$ M त्वा (for त्वां). $K_2$ $T_1$ $G_{1.3.5}$ M जातु; $G_4$ साधु (for जेतुं).

19 $^a$) $K_2$ द्रोणश्च यत्र भीष्मश्च; $T_2$ $G_{2.4}$ यत्र भीष्मस्ततो ($G_4$ °था) द्रोणः. — $^b$) $K_5$ विशां पते (for विविं°). $K_2$ कर्णौ कृपविविंशतिः. — $^d$) $K_2$ $Ds_2$ $D_{3.4.9}$ च; G अपि (for अथ).

20 $^b$) A few MSS. कांभोजः. — $^d$) S उभौ (for तथा).

21 After $21^{ab}$, $D_{3.4.9}$ ins.:

427* को नु तान्युधि शत्रुघ्न सहितान्कुरुपाण्डवैः ।

— $^{cd}$) Ds एतान्; Ca तान् (as in text). $D_{3.4.9}$ परीतात्मा सुयुध्येत देवोपि भरतर्षभ; S तत्र युध्येत को राजञ्जीवितप्रेप्सुराहवे. — After 21, $D_{2-4.9}$ *repeat* $14^{ab}$.

22 $K_5$ om. (hapl.) 22–39. — $^a$) $D_{3m.4.9}$ प्राप्य (for भूयः). S गौरवं सर्वराज्ञां हि ($G_{3.5}$ च; $M_{1[inf. lin.].2}$ तु). — $^b$) $K_{1.4}$ B D (except $D_{3-5.9}$) $T_2$ $G_2$ $M_{3-5}$ अप्यधृष्यतां (for अप्र°). — $^{cd}$) $D_{3.4.9}$ प्राप्स्यसि त्वं महाराज लोकेषु सुमहद्यशः.

23 $K_5$ om. 23 (cf. v.l. 22). — $^a$) $D_{3.4.9}$ वश्यास् (for तस्य). — $^b$) $D_2$ च विशां पते (for पृथिवी°).

श्रेयांसश्चैव राजानः संधास्यन्ते परंतप ॥ २३
स त्वं पुत्रैश्च पौत्रैश्च भ्रातृभिः पितृभिस्तथा ।
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुम् ॥ २४
एतानेव पुरोधाय सत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ २५
एतैर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥ २६
तैरेवोपार्जितां भूमिं भोक्ष्यसे च परंतप ।
यदि संपत्स्यसे पुत्रैः सहामात्यैर्नराधिप ॥ २७
संयुगे वै महाराज दृश्यते सुमहान्क्षयः ।
क्षये चोभयतो राजन्कं धर्ममनुपश्यसि ॥ २८
पाण्डवैर्निहतैः संख्ये पुत्रैर्वापि महाबलैः ।
यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ ॥ २९
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान्रक्ष महतो भयात् ॥ ३०
न पश्येम कुरून्सर्वान्पाण्डवांश्चैव संयुगे ।
क्षीणानुभयतः शूरान्रथेभ्यो रथिभिर्हतान् ॥ ३१
समवेताः पृथिव्यां हि राजानो राजसत्तम ।
अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ॥ ३२
त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषं स्यात्कुरुनन्दन ॥ ३३
शुक्ला वदान्या ह्रीमन्त आर्याः पुण्याभिजातयः ।
अन्योन्यसचिवा राजंस्तान्पाहि महतो भयात् ॥ ३४
शिवेनेमे भूमिपालाः समागम्य परस्परम् ।

C. 5. 3418
B. 5. 94. 35
K. 5. 94. 35

---

24 $K_5$ om. 24 (cf. v.l. 22). — $^{b}$) $K_4$ B D (except $D_{7.9}$) transp. भ्रातृभिः and पितृभिः. — $^{d}$) $D_{2-4.9}$ प्राप्स्यसि; $T_2$ $G_2$ शक्योसि (for शक्ष्यसि).

25 $K_5$ om. 25 (cf. v.l. 22). — $^{b}$) T $G_{1.2}$ M -पुरं; $G_{8.5}$ -सुखं (for पुरा). — $^{c}$) $G_4$ अनिशं (for अखिलां). $K_2$ राजन्; $D_1$ चेमां (for सर्वां).

26 $K_5$ om. 26 (cf. v.l. 22). — $^{a}$) $T_1$ $G_1$ च (for हि). $G_4$ transp. सहितः and सर्वैः. $B_{1.2}$ $Dn_2$ $D_2$ $T_2$ $G_2$ सहितैः. — $^{b}$) $K_2$ पांडुपुत्रै° (for पाण्डवैः स्वै°). $K_1$ $Ds_2$ $D_{2.7.8}$ चैव; $D_{8.4.9}$ $T_1$ $G_2$ तैश्च (for स्वै°). — $^{c}$) $K_{1.2}$ $D_7$ सर्वान् (for अन्यान्). S बाधिष्यसे (for विजे°). — $^{d}$) $Dn_1$ $D_{5.6.8}$ अर्थिनः (for अखिलः).

27 $K_5$ om. 27 (cf. v.l. 22). — $^{a}$) $K_1$ $D_7$ निर्जितां; $D_1$ चार्जितां; S चार्जितं (for उपार्जितां). $T_1$ $G_5$ भुंक्ष्व; $T_2$ $G_2$ भुंक्ते; $G_1$ भुंजे; $G_{8.4}$ M भुंक्षे (for भूमिं). — $D_7$ $G_8$ om. $27^{cd}$. — $^{c}$) $K_1$ $Ds_2$ $D_9$ संपत्स्यते; $D_1$ $G_5$ संधत्स्यते; $D_2$ संपृच्छसे; $M_{1.2}$ संधास्यसे; $M_{8-5}$ संधत्स्यसे; Ca संधित्ससे; Cs as in text. S (except $T_1$; $G_8$ om.) राजन् (for पुत्रैः). — $^{d}$) $K_1$ $D_{2.10}$ परंतप; $B_2$ जनेश्वर; $D_{8.4.9}$ अरिंदम (for नराधिप). S (except $T_1$; $G_8$ om.) पांडवैश्च परंतप.

28 $K_5$ om. 28 (cf. v.l. 22). — $^{a}$) $Dn_1$ $D_{8.4.9}$ $T_2$ $G_2$ च; M तु (for वै). $G_4$ असंयोगे महाराज. — $^{b}$) $K_2$ तु महान्; $D_{8.4.9}$ अत्र महा-; T $G_{2.4}$ M वै महान्; $G_{8.5}$ च महान् (for सुमहान्). — $^{c}$) $K_2$ हि जगतो; $D_1$ वोभयतो; $D_{5.6}$ नोभयतो. Cs cites उभयोः. — $^{d}$) $D_{8.4.9}$ कं धर्मं संप्रपश्यसि.

29 $K_5$ om. 29 (cf. v.l. 22). — $^{a}$) Ds विजितैः; $B_8$ $D_{1.4-6.8.9}$ $G_4$ $M_{1.8.4}$ निहतः; $D_{10}$ हि हतैः; Cs विजितं (for निहतैः). — $^{b}$) $K_1$ $D_7$ $G_{8.5}$ $M_2$ च; Cs वा (as in text).

30 $K_5$ (cf. v.l. 22) $T_2$ $G_2$ om. 30. In $Dn_2$, the portion from 30 up to the end of stanza 33 of the next adhy. is lost on a missing fol. (86). — $^{a}$) $K_4$ $D_{1.2}$ एव; $G_4$ अधि- (for हि). $D_{6.7}$ कृतार्थाः (for कृतास्त्राः). — $^{b}$) $D_2$ $G_4$ सर्वे युद्धाभिनंदिनः. — $^{d}$) $D_{8.4.9}$ स्वान् (for तान्). S ($T_2$ $G_2$ om.) पाहि (for रक्ष).

31 $K_5$ om. 31; $Dn_2$ missing (cf. v.l. 22, 30); $K_4$ om. $31^{a}$–$32^{b}$. — $^{d}$) $B_4$ $Dn_1$ $D_{8.4.9.10}$ रथिनो (for रथेभ्यो).

32 $K_5$ om. 32; $Dn_2$ missing; $K_4$ om. $32^{ab}$ (cf. v.l. 22, 30, 31). — $^{a}$) $D_{4-6.8}$ पृथिव्या. $D_{4.9}$ नु; $T_1$ वा (for हि).

33 $K_5$ om. 33; $Dn_2$ missing (cf. v.l. 22, 30); $K_1$ $D_1$ $T_1$ $G_8$ om. (hapl.) $33^{ab}$. $D_8$ transp. $33^{ab}$ and $33^{cd}$. — $^{a}$) $Ds_2$ S ($T_1$ $G_8$ om.) इमान् लोकान् (for इमं लोकं). — $^{d}$) $K_2$ $D_{8.10}$ (*sup. lin.*) शमः; $B_{8.5}$ $D_{8.4.7.9}$ $T_2$ $G_{8-5}$ शेषः; $D_6$ दोषः (for शेषं). $K_2$ कुरुभिः सह; Ds $D_2$ $T_2$ $G_2$ कुरुसत्तम.

34 $K_5$ om. 34; $Dn_2$ missing (cf. v.l. 22, 30). — $^{a}$) $B_2$ शूरा; $D_2$ श्लक्ष्णा; $D_{8.4.8.9}$ शक्ता (for शुक्ला). — $^{c}$) $D_2$ m. $_{8.4.9}$ पुत्रान्ससचिवान्राजन्. — $^{d}$) $D_{2-4.9}$ त्वं (for तान्).

C. 5. 3416
B. 5. 94. 35
K. 5. 94. 35

सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ३५
सुवाससः स्रग्विणश्च सत्कृत्य भरतर्षभ ।
अमर्षांश्च निराकृत्य वैराणि च परंतप ॥ ३६
हार्दं यत्पाण्डवेष्वासीत्प्राप्तेऽस्मिन्नायुषः क्षये ।
तदेव ते भवत्वद्य शश्वच्च भरतर्षभ ॥ ३७
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान्पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ३८
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ३९
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च ।
भवतः शासनाद्दुःखमनुभूतं सहानुगैः ॥ ४०
द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः ।
त्रयोदशं तथाज्ञातैः सजने परिवत्सरम् ॥ ४१
स्थाता नः समये तस्मिन्पितेति कृतनिश्चयाः ।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ४२
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं संक्लेशिता राजन्स्वराज्यांशं लभेमहि ॥ ४३
त्वं धर्ममर्थं युञ्जानः सम्यङ्नस्त्रातुमर्हसि ।
गुरुत्वं भवति प्रेक्ष्य बहून्क्लेशांस्तितिक्ष्महे ॥ ४४
स भवान्मातृपितृवदस्मासु प्रतिपद्यताम् ।

---

35 K5 om. 35; Dn2 missing (cf. v.l. 22, 30). — a) K1 D7.10 सांत्वेन; T1 G1.3–5 M सुखेन; Ca.d शिवेन (as in text). T2 G2 सुखेन भूमिपालास्ते. — b) S परिष्वज्य (for समा°). — d) K1.2 D1.10 यथागृहान्; T2 G2 यथागतं.

36 K5 om. 36; Dn2 missing (cf. v.l. 22, 30). — b) K4 B D (except D1.2; Dn2 missing) सत्कृताः (for सत्कृत्य). — c) K4 B4 D (except D7.10; Dn2 missing) G4 अमर्षं.

37 K5 om. 37; Dn2 missing (cf. v.l. 22, 30). — b) S नागसाह्वये; Ca.d.s आयुषः क्षये (as in text). — d) K2 D1.2.9 T2 G2 यशश्च; K4 B2.4.5 Dn1 Ds D3–8.10 संधत्स्व (for शश्वच्च).

38 K5 om. 38; Dn2 missing (cf. v.l. 22, 30); D1 T1 om. (hapl.) 38–39. — a) K1 D7.10 त्वयैव रक्षिता बालाः. — b) K2 परिरक्षिताः. — d) K2 B (except B2) D3 मनुजेश्वर (for भरत°).

39 K5 D1 T1 om. 39; Dn2 missing (cf. v.l. 22, 38, 30). — a) K1.2 D2–4.10 अभि- (for हि). S (T1 om.) transp. रक्ष्याः and ते. — c) K1 D2–4 न (for मा).

40 Dn2 missing (cf. v.l. 30). — a) G5 M1.3.4 त्वा (for त्वां). — b) K1 प्रणम्य; B2.4 Ds2 °पद्य (for °साद्य). — c) K2 वचनाद् (for शासनाद्). — d) T2 G3–5 सहानुजैः.

41 Dn2 missing (cf. v.l. 30). — b) T G निरुषितानि (for निर्व्यु°). K1.2.5 D7.10 वने निर्व्युषिता वयं; D3.4.9 वने निर्व्युषिताश्चिरं. — c) S त्रयोदशम्. K1 D2 च सजनैः; K2 D1 च सजने; D3.4.9 च स्वजनैः (for तथाज्ञातैः). — d) K1 अज्ञाताः; K2 D1.2 अज्ञातैः; D3.4.9 ह्यज्ञाताः (for सजने). S उषितः परिवत्सरः.

42 =(var.) 5. 70. 10. — Dn2 missing (cf. v.l. 30). — a) K1.5 D1.2.7.10 स्थिताः स्म; K2 स्थितं च; K4 स्थाताः स्म; B3 D3.4.9 स्थाता वः; T G2.4 स्थापिताः; G3.5 स्थातारः; Cs स्थितानां (for स्थाता नः). K2 अस्माभिः; D7 नित्यं (for तस्मिन्). — b) D2–4.9 पितुस्ते; T G1.3 पित्रेति (for पितेति). — c) D2.9 न जहुः; D3.4 न जह्मः; T1 G1 तीर्णाः स्म; Ca नाहास्म (as in text). G4 राजन् (for तात).

43 Dn2 missing (cf. v.l. 30). — a) B3 वः; T2 G2 हि (for नः). — T2 G2 om. 43c–45b. — d) K1 D7 स्वराज्यं च; K2 निजं राज्यं; D2–4 स्वराज्यं सं-; G3.5 राज्यांशं च (for स्वराज्यांशं). — After 43, G4 reads 47c–48b, *repeating* the lines in their proper place.

44 Dn2 missing; T2 G2 om. 44 (cf. v.l. 30, 43); G4 om. 44ab. — a) G3.5 M तान् (for त्वं). K1.2 D1 युंजानान्; K4 B (except B3) Dn1 Ds D5.6.8.10 संजानन् (for युञ्जानः). D3.4.9 त्वं धर्ममथ जानासि; T1 G1 धर्ममर्थं च युंजानः. — b) D5.6.8 संपन्नः स्थातुमर्हसि. — D1 om. 44c–45d. — c) K1 तव सं-; K2 D7 त्वयि सं-; G5 भवतः (for भवति). — d) S (T2 G2 om.) सहा(T1 G1 क्षमा)महे (for तिति°).

45 Dn2 missing; D1 om. 45; T2 G2 om. 45ab (cf. v.l. 30, 44, 43). — a) B2 पितृमातृवद् (by transp.). — K5 om. from 45b up to the end of this adhy. — c) K1.2 D2–4.9 गुरोर्गरीयसीं वृत्तिं. — d) T G (except G3) स्यात् (for या). S (except G3) चेद् (for च). K1.2 अव(K2 °नु)तिष्ठस्व भारत; D2–4.9 यावच्छिष्यसि भारत. — After 45, K4 B D (except D1; D2.10 both marg.; Dn2 missing) ins.:

गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ ४५
पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः ।
संस्थापय पथिष्वस्मांस्तिष्ठ राजन्स्ववर्त्मनि ॥ ४६
आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ ।
धर्मज्ञेषु सभासत्सु नेह युक्तमसांप्रतम् ॥ ४७
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ४८
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ।
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ४९
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ।
ते सत्यमाहुर्धर्म्यं च न्याय्यं च भरतर्षभ ॥ ५०
शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर ।
ब्रुवन्तु वा महीपालाः सभायां ये समासते ।
धर्मार्थौ संप्रधार्यैव यदि सत्यं ब्रवीम्यहम् ॥ ५१
प्रमुञ्चेमान्मृत्युपाशात्क्षत्रियान्क्षत्रियर्षभ ।
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ॥ ५२
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान्परंतप ॥ ५३
अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा ।
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ॥ ५४
दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ।
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ॥ ५५
स तत्र निवसन्सर्वान्वशमानीय पार्थिवान् ।
त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्तत ॥ ५६
तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता ।

C. 5. 3441
B. 5. 95. 58
K. 5. 95. 58

428* वर्तामहे त्वयि च तां त्वं च वर्तस्व नस्तथा ।

46 $K_{5}$ om. 46; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) $K_{2}$ पुत्राः (for पित्रा). — $^{b}$) $K_{1}$ S (except $G_{1}$ $M_{5}$) आश्रिताः (for आस्थिताः). — $^{c}$) $D_{6}$ त्वं ह्यस्मांस्तु; $T_{2}$ $G_{2}$ प्रतिष्ठां तां (for पथिष्वस्मान्). — $^{d}$) $K_{2.4}$ B D (except $D_{1.7}$; $Dn_{2}$ missing) धर्मे (for राजन्). B सुवर्त्मनि; $D_{6}$ $M_{3.4}$ स्ववेश्मनि.

47 $K_{5}$ om. 47; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) $D_{1.3.4.9}$ एतां; S इमाः (for इमां). S परिषदः; Cs as in text. — $G_{4}$ reads $47^{c}$–$48^{b}$ (for the first time) after 43.

48 $K_{5}$ om. 48; $Dn_{2}$ missing (cf. v.l. 45, 30). For $G_{4}$ cf. v.l. 47. — $D_{1.6}$ om. (hapl.) $48^{b}$–$49^{a}$.

49 $K_{5}$ om. 49; $Dn_{2}$ missing; $D_{1.6}$ om. $49^{a}$ (cf. v.l. 45, 30, 48); $Ds_{2}$ om. 49. — $^{a}$) $T_{1}$ $G_{1.4}$ transp. विद्धो and धर्मो. — $^{b}$) $G_{3}$ $M_{5}$ सभा. $T_{1}$ $G_{1.4.5}$ उपपद्यते; $M_{5}$ प्रवर्तते (for प्रपद्यते). — $^{d}$) $D_{1}$ हता° (for विद्धा°).

50 $K_{5}$ om. 50; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) $T_{2}$ $G_{2}$ अनुपश्यंति. — $^{c}$) $K_{4}$ B $D_{2-4.7.10}$ धर्म्यं; Cs धर्मं (as in text). $K_{1}$ $D_{3}$ धर्मज्ञाः (for धर्मं च). $Dn_{1}$ सत्यमाहुश्च धर्मे च. — $^{d}$) $K_{1.2}$ $D_{1.3.9}$ T $G_{2.5}$ $M_{1}$ न्यायं.

51 $K_{5}$ om. 51; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{b}$) $K_{2}$ $T_{1}$ $G_{1.4}$ M (except $M_{1}$) नरे° (for जने°). — $^{c}$) $T_{2}$ $G_{2}$ शृण्वंतु; Cs ब्रुवंतु (as in text). $B_{4}$ $D_{3.10}$ ते (for वा). — $^{d}$) $K_{2}$ $D_{1-4.9}$ $G_{3.5}$ समागताः (for समासते). $D_{7}$ त्वयि (for यदि).

52 $K_{5}$ om. 52; $Dn_{2}$ missing (cf. v.l. 45, 30) — $^{a}$) $D_{2-4.8.9}$ प्रमुच्य (for °मुञ्च). — $^{b}$) $K_{2}$ $D_{3}$ $D_{1-4.8.9}$ $G_{2}$ भरत°; $K_{4}$ B $Dn_{1}$ $D_{5.6}$ पुरुष° (for क्षत्रिय°). — $^{d}$) $K_{2}$ $D_{2-4.9}$ मृत्यु° (for मन्यु°).

53 $K_{5}$ om. 53; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) $K_{2}$ प्रदाय स्वं (for °यांशं). — $^{c}$) $K_{2}$ सिद्धार्थो ज्ञातिसहितः.

54 $K_{5}$ om. 54; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{d}$) $T_{2}$ $G_{2}$ यो (for यां).

55 $K_{5}$ om. 55; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) S द्रोहितः; Ca.d दाहितः (as in text). — $^{b}$) $K_{1}$ $D_{1.7.10}$ अपाश्रितः; $D_{2.4.9}$ उपस्थितः; $T_{1}$ एवं श्रितः; $T_{2}$ $G_{2}$ अहं श्रितः; $G_{1.3-5}$ M इहाश्रितः (for उपाश्रितः). $K_{2}$ स त्वामेवाश्रितः पुनः. — $^{c}$) $K_{2}$ $D_{2}$ S इंद्रप्रस्थे.

56 $K_{5}$ om. 56; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) $D_{6}$ $T_{2}$ G पुत्रः (for तत्र). $B_{4.5}$ $D_{3}$ विवसन् (for निव°). — $^{b}$) $D_{3}$ समानीय च पार्थिवान्. — $^{d}$) T $G_{1.2}$ त्वा; M (except $M_{1}$) त्वत् (for त्वाम्). $B_{1-3}$ $D_{4}$ अभ्यवर्तत; $T_{1}$ $G_{1.3-5}$ $M_{1}$ सोत्यवर्तत; $T_{2}$ $G_{2}$ $M_{2-5}$ स न्यवर्तत; Ca अत्य° (as in text).

57 $K_{5}$ om. 57; $Dn_{2}$ missing (cf. v.l. 45, 30). — $^{a}$) $B_{3.5}$ अस्य (for तस्य). — $^{b}$) T G जिगीषता (for जिही°). — $D_{1}$ om. (hapl.) $57^{d}$–$59^{a}$. — $^{d}$) $K_{1}$ प्रयुक्त्वा; $K_{2}$ प्रयुक्तं; $Dn_{1}$ संयुक्त; $D_{3}$ प्रमुक्तः; $G_{1.4}$ प्रलुप्तः

C. 5. 3442
B. 5. 95. 59
K. 5. 96. 58

राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ॥ ५७
स तामवस्थां संप्राप्य कृष्णां प्रेक्ष्य सभागताम् ।
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ॥ ५८
अहं तु तव तेषां च श्रेय इच्छामि भारत ।
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ॥ ५९
अनर्थमर्थं मन्वाना अर्थं वानर्थमात्मनः ।
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशां पते ॥ ६०
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परंतप ॥ ६१
तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ६२

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## ९४

वैशंपायन उवाच ।
तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन्सर्वे सभासदः ॥ १
कः स्विदुत्तरमेतस्माद्वक्तुमुत्सहते पुमान् ।
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ॥ २
तथा तेषु च सर्वेषु तूष्णींभूतेषु राजसु ।

---

(for प्रयुक्तः). $K_2$ परमे पथि; $Dn_1$ $G_4$ परमोषधिः; $D_{6.7}$ $T_2$ $G_{2.3}$ $M_4$ परमो विधिः; $G_1$ $M_{2.3.5}$ परमोवधिः; Ca. n. s परमोपधिः (as in text). Cd cites उपधिः.

58 $K_5$ $D_1$ om. 58; $Dn_2$ missing (cf. v.l. 45, 57, 30). — [a]) $G_{3.5}$ °प्रेक्ष्य (for °प्राप्य). — [b]) $K_2$ दृष्ट्वा कृष्णां (for कृष्णां प्रेक्ष्य). $B_{3.5}$ $M_{3-5}$ सभां गतां.

59 $K_5$ om. 59; $Dn_2$ missing; $D_1$ om. 59[a] (cf. v.l. 45, 30, 57). — [a]) $K_{1.2}$ च (for तु), and $K_2$ तु (for च). — [d]) $D_3$ T $G_2$ नीनशुः; $G_{1.3-5}$ M (except $M_1$) विनशुः; Ca नीनशः (as in text).

60 $K_5$ om. 60; $Dn_2$ missing (cf. v.l. 45, 30). — [ab]) $K_1$ $M_4$ मन्वानां; $K_4$ B D ($Dn_2$ missing) °नः ($D_1$ °नान्); T $G_5$ $M_{1.2.5}$ °नान् (for °ना). $K_4$ B $Dn_1$ Ds $D_{3.5.6.8.10}$ अप्यर्थं; $D_{3.4.9}$ ह्यर्थं; T $G_2$ स्वार्थं; $G_{1.3.4}$ $M_1$ त्वर्थं (for अर्थं). $K_{1.4}$ B D (except $D_{9.10}$; $Dn_2$ missing) $T_2$ $G_{2.3}$ च (for वा). Ds सुखम् (for अनर्थम्). $G_5$ स्वार्थिनोनर्थमात्मनः. — [c]) $K_1$ $D_8$ लोभविप्रसृतान्; $K_2$ $D_{2-4.9}$ लोभेन प्रसृ°; $D_{5.6}$ लोभेभिप्र°; $T_1$ $G_1$ लोभातिप्र°. — [d]) $D_{3.4.9}$ प्रगृह्यस्व; Cs निगृह्णीयात्. $K_2$ नराधिप; $D_1$ परंतप (for विशां पते).

61 $K_5$ om. 61; $Dn_2$ missing (cf. v.l. 45, 30). — [c]) $T_1$ पथ्यं तु तं; $G_1$ पथ्यं मतं; $G_5$ पथ्यतरं.

62 $K_5$ om. 62; $Dn_2$ missing (cf. v.l. 45, 30). — Before 62, $Dn_1$ $T_2$ $G_2$ ins. वैशं° उ° (resp. वैशं°). — [b]) $K_2$ $B_2$ हृदये (for °यैः). — Ds om. 62[cd]. — [c]) $D_1$ वाचं (for कश्चिद्). — [d]) $K_2$ वाचः; $D_1$ कश्चित्; $D_{2-4.9}$ वाक्यं (for वाचं). $T_1$ $G_{1.5}$ प्राक्रमत; $T_2$ प्रक्रमते; M प्राक्रामत (for प्राक्रामद्). $K_2$ अच्युते (for अग्रतः). — After 62, $M_{3-5}$ read stanzas 1–2 of the next adhy.

Colophon missing in $K_3$ $Dn_2$; $K_5$ om. it. — *Sub-parvan:* $K_{1.2.4}$ B $Dn_1$ Ds $D_{2.5-8.10}$ $G_1$ M भगवद्यान. — *Adhy. name:* T $G_{1.2}$ वासुदेववाक्यं; $G_5$ संदेशकथनं; M संदेशा($M_3$ °शना)र्थकथनं. — *Adhy. no.* (figures, words or both): $D_5$ 91; $D_6$ 88; $D_7$ $M_{1-3.5}$ 96; T $G_{2.4.5}$ 97; $G_1$ 98; $G_3$ $M_4$ 95. — *S'loka no.:* $Dn_1$ 63; $D_3$ 51.

### 94

☞ This adhy. is missing in $K_3$ (cf. v.l. 5. 32. 15). For the lacuna in $Dn_2$ (which is missing up to st. 33 of this adhy.), cf. v.l. 5. 93. 30; the MS. is mostly ignored up to the end of the lacuna.

2 For $M_{3-5}$ cf. v.l. 5. 93. 62. — [a]) $G_5$ किंस्विद्; M कः स्विद् (as in text); the rest कश्चिद्. $D_{3.4.9}$ नोत्तरम् (for उत्तरम्). $K_{4.5}$ B $Dn_1$ Ds $D_{8-10}$ $T_2$ $G_4$ एतेषां; $D_2$ $T_2$ (*inf. lin.*) एतस्य (for एतस्माद्). — [b]) $G_5$ दातुम् (for वक्तुम्). N (except $K_{1.2}$ $D_1$; $K_3$ $Dn_2$ missing) नोत्सहते (for उत्सहते).

जामदग्न्य इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ३
इमामेकोपमां राजञ्शृणु सत्यामशङ्कितः ।
तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ॥ ४
राजा दम्भोद्भवो नाम सार्वभौमः पुराभवत् ।
अखिलां बुभुजे सर्वां पृथिवीमिति नः श्रुतम् ॥ ५
स स्म नित्यं निशापाये प्रातरुत्थाय वीर्यवान् ।
ब्राह्मणान्क्षत्रियांश्चैव पृच्छन्नास्ते महारथः ॥ ६
अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि ।
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वापि शस्त्रभृत् ॥ ७
इति ब्रुवन्नन्वचरत्स राजा पृथिवीमिमाम् ।
दर्पेण महता मत्तः कंचिदन्यमचिन्तयन् ॥ ८
तं स्म वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः ।
प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ९
प्रतिषिध्यमानोऽप्यसकृत्पृच्छत्येव स वै द्विजान् ।
अभिमानी श्रिया मत्तस्तमूचुर्ब्राह्मणास्तदा ॥ १०
तपस्विनो महात्मानो वेदव्रतसमन्विताः ।
उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ११
अनेकजननं सख्यं ययोः पुरुषसिंहयोः ।
तयोस्त्वं न समो राजन्भवितासि कदाचन ॥ १२
एवमुक्तः स राजा तु पुनः पप्रच्छ तान्द्विजान् ।
क्व तौ वीरौ क्वजन्मानौ किंकर्माणौ च कौ च तौ ॥ १३

ब्राह्मणा ऊचुः ।

नरो नारायणश्चैव तापसाविति नः श्रुतम् ।
आयातौ मानुषे लोके ताभ्यां युध्यस्व पार्थिव ॥ १४ C. 5. 3461 B. 5. 96. 14 K. 5. 96. 14

---

3 a) S तु तेषु (G3-5 कृतेषु) (for तेषु च). K2 तु (for च).

4 Before 4, T2 G1 ins. जामदाग्न्यः (T2 °ग्निः); G2 परशुरामः. — a) T2 इष्टाम् (for इमाम्). K1.2.5 D1.2 मेघोपमां; K4 B (except B3) Dn1 Ds D3.4.6–10 मे सोपमां (for एको°). N (except K2; K3 Dn2 missing) T2 (*inf. lin.*) G2 वाचं (for राजन्). — b) K1.5 D7 राजन्; D2 (by corr.).4 सभ्याम्; T1 G3.4 सत्यम् (for सत्याम्). K1.5 D7 न शंकितः; K2 T2 G3 अशंकितां. — c) K1.5 D1.7.8 T1 G (except G1) आधत्स्व.

5 a) S (mostly) डंभो°. — c) K1 D1 य इमां; K2 सोखिलां (for अखिलां). K2 राजन् (for सर्वां).

6 a) B3 शश्वत्; T1 G1.2.4 स वै (for स स्म). — c) S (except G4) वैश्यान् (for चैव). — d) K2 परंतप; D2 महाभुजः.

7 a) S (except G2) मद्विशिष्टः (for विशिष्टो वा). — b) S मत्समो (for मद्विधो). B3 Ds G2 वाभवद्. K5 क्वचित् (for युधि).

8 a) G3.5 ब्रुवाणः (for ब्रुवन्). B2 D1.2 (by corr.).5.8 अनुचर(D1 °रा)न् (for अन्वचरत्). — c) T G (except G2) आविष्टः (for मत्तः). — d) Ds2 T2 G2 M4 किंचिद्. D1 नान्यम् (for अन्यम्). D1 अचिंतयत्. K2 नैव चान्यदचिंतयत्; K5 न किंचिदवाचिंतयन्.

9 a) K4 B2.4.5 D (except D1.2.7; Dn2 missing) G3 च (for स्म). B2.5 M2 Ca सुकृपणाः; T2 ह्यकृपणाः; M2-4 त्वकृपणाः. — b) K1 अकुतोभयाः; Ds D5.6 T2 M3-5 सर्वतोभयात्.

10 a) Hypermetric! N (except B1.3 D1; K3 Dn2 missing) M1 नि° (for प्रति°). — b) D1 पुनः; T2 G3 सदा (for स वै). D1 पुनः (for द्विजान्). — B2 om. (hapl.) 10c–13b. — c) K2 अतिमानिनमुन्मत्तं; K4.5 B (B2 om.) D (except D1; Dn2 missing) अतिमानं श्रिया मत्तं.

11 B2 om. 11 (cf. v.l. 10). — b) B4 Cn वेदप्रत्ययदर्शिनः (Dn1 as in text!); Ds वेदव्रतसमाश्रिताः; D2 वेदवेदांगपारगाः. — After 11, D5 (marg. *sec. m.*).8 ins.:

429* तपस्विनौ महात्मानौ वेदप्रत्ययदर्शकौ ।

12 B2 om. 12 (cf. v.l. 10). — a) K4 B (B2 om.) Dn1 D2-6.9 Cap अनेकजयिनौ; T2 G2 °जन्मकं; Ca °जननौ; Cd.s °जननं (as in text). K4 B (B2 om.) Dn1 D1.5.6.9 संख्ये; D2-4 संख्यौ; Cs सख्यं (as in text). — b) K4 B (B2 om.) Dn1 D2 (marg. *sec. m.*).3-6.9 यौ वै पुरुषसत्तमौ. — c) S युद्धे (for राजन्). — d) K5 B3.5 D7.10 कथं° (for कदा°).

13 B2 om. 13ab (cf. v.l. 10). — a) T1 G1.4 वै (for तु). — b) S पृच्छत्येव (T1 G1.4 प्रत्युवाच) द्विजोत्तमान्. — c) T1 G1.4 क्वजननौ (for °जन्मानौ).

14 S transp. 14 and 15. D6.9 ब्राह्मण उ°; G2 द्विजाः; G4 M3-5 ब्राह्मणाः. — c) S अजातौ (for आयातौ). K1.2 D1.2 मानुषं लोकं. — d) Ca आभ्यां. B3.5 Ca भारत (Cap पार्थिव as in text). S ताभ्यां विहर संयुगे.

C. 5. 3462
B. 5. 96. 15
K. 5. 96. 15

श्रूयते तौ महात्मानौ नरनारायणावुभौ ।
तपो घोरमनिर्देश्यं तप्येते गन्धमादने ॥ १५

राम उवाच ।

स राजा महतीं सेनां योजयित्वा षडङ्गिनीम् ।
अमृष्यमाणः संप्रायाद्यत्र तावपराजितौ ॥ १६
स गत्वा विषमं घोरं पर्वतं गन्धमादनम् ।
मृगयाणोऽन्वगच्छत्तौ तापसावपराजितौ ॥ १७
तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसंततौ ।
शीतवातातपैश्चैव कर्शितौ पुरुषोत्तमौ ।
अभिगम्योपसंगृह्य पर्यपृच्छदनामयम् ॥ १८
तमर्चित्वा मूलफलैरासनेनोदकेन च ।
न्यमन्त्रयेतां राजानं किं कार्यं क्रियतामिति ॥ १९

दम्भोद्भव उवाच ।

बाहुभ्यां मे जिता भूमिर्निहताः सर्वशत्रवः ।
भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम् ।
आतिथ्यं दीयतामेतत्काङ्क्षितं मे चिरं प्रति ॥ २०

नरनारायणावूचतुः ।

अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम ।
न ह्यस्मिन्नाश्रमे युद्धं कुतः शस्त्रं कुतोऽनृजुः ।
अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ ॥ २१

राम उवाच ।

उच्यमानस्तथापि स्म भूय एवाभ्यभाषत ।
पुनः पुनः क्षम्यमाणः सान्त्व्यमानश्च भारत ।
दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ ॥ २२
ततो नरस्त्विषीकाणां मुष्टिमादाय कौरव ।
अब्रवीदेहि युध्यस्व युद्धकामुक क्षत्रिय ॥ २३
सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम् ।
अहं हि ते विनेष्यामि युद्धश्रद्धामितः परम् ॥ २४

---

15 S transp. 14 and 15. — $^{a}$) $K_{1.4}$ $B_{1.5}$ D (except $Dn_{1}$ $D_{S}$ $D_{1.8}$; $Dn_{2}$ missing) $G_{4}$ $M_{1}$ श्रूयेते. S महाभागौ ($G_{2}$ °बाहू). — $^{b}$) $K_{5}$ $D_{7}$ $M_{1}$ (*sup. lin.*) ऋषी (for उभौ). — $^{c}$) $D_{1}$ अनिर्देश्यौ; $T_{1}$ $G_{1.4}$ महच्चैव; $Ca.d$ as in text. — $^{d}$) $K_{2}$ तप्येतां; B (except $B_{2}$) $D_{1.7}$ $T_{2}$ $G_{2}$ तप्यते; $T_{1}$ $G_{1.4}$ चरंतौ (for तप्येते).

16 $K_{1.2.5}$ B $Dn_{1}$ $D_{S}$ $D_{1.2.5-7.10}$ S (except $M_{3-5}$) om. the ref. $D_{3.4.9}$ परशुराम उ° ($D_{4}$ om. उ°). — $^{b}$) $D_{S}$ वरूथिनीं (for षडङ्गिनीम्). — $^{c}$) $K_{2}$ $D_{S1}$ $D_{1}$ $M_{2-4}$ स प्रायाद्. — $^{d}$) $D_{3.4.9}$ °जयौ (for °जितौ).

17 $K_{5}$ $D_{7}$ $T_{2}$ $G_{2}$ om. (hapl.) 17. — $^{ab}$) $K_{2}$ transp. विषमं and पर्वतं. — $^{c}$) $K_{2}$ S ($T_{2}$ $G_{2}$ om.) मार्गमाणः; $Dn_{1}$ मृगमाणः; $Ca$ मृगयाणः (as in text). $K_{1.2}$ अध्यगच्छत्; $B_{1.3.5}$ $D_{2.4.5.8.9}$ $T_{1}$ $G_{1.3.5}$ $M_{3-5}$ अभ्यग°; $D_{1}$ प्रयच्छत्; $M_{1.2}$ ह्यगच्छ° (for अन्व°). — $^{d}$) $K_{2}$ इति नः श्रुतं; $K_{4}$ $D_{3-6.8.9}$ वनवासिनौ; B $Dn_{1}$ $D_{S}$ वनमाश्रितौ (for अपराजितौ).

18 $^{b}$) $D_{1}$ श्रांतौ (for कृशौ). — $^{c}$) T $G_{1.2.4}$ M उग्रैः (for चैव). $G_{3.5}$ शीतवातादिभिरुग्रैः. — $^{d}$) A few MSS. कर्षितौ. — $^{e}$) S (except $G_{1}$) °वाद्य (for °गम्य). — $^{f}$) $B_{3}$ पर्यपृच्छत भारत; $C_{S}$ as in text.

19 $^{a}$) $B_{2}$ T $G_{2.3}$ $M_{1}$ (before corr.) तमर्चयित्वा (hypermetric!); $G_{4}$ अर्चयित्वा (for तमर्चित्वा). $D_{1}$ फलैर्मूलैर् (for मूलफलैर्). — $^{c}$) S अ($T_{1}$ $G_{1.4}$ प्रा)ब्रूतां परवीरघ्नौ. — After 19, N ($K_{3}$ $Dn_{2}$ missing) ins.:

430* ततस्तामानुपूर्वीं स पुनरेवान्वकीर्तयत् ।

[ $D_{1.2}$ तौ (for ताम्). ]

20 $K_{1.2.4}$ B D ($Dn_{2}$ missing) om. the ref. $K_{5}$ राजा उ°; S (mostly) डंभोद्भवः. — $^{a}$) $K_{1}$ $D_{10}$ विजिता; $K_{5}$ च जिता (for मे जिता). — $^{b}$) $K_{1}$ $G_{3.5}$ निर्जिताः (for निहताः). $D_{1}$ निहतं सर्वशात्रवं; $T_{1}$ $G_{4}$ हताः सर्वत्र शत्रवः. — $^{e}$) $D_{1.2}$ क्रियताम् (for दीयताम्). $B_{3.5}$ अद्य (for एतत्). — $^{f}$) $K_{1.5}$ $D_{7.10}$ चिरंतनं; $K_{2}$ चिरं स्थितं; S चिरादपि ($G_{2}$ °दिति) (for चिरं प्रति). $D_{1}$ कांक्षितं समरं प्रति.

21 $K_{2}$ $B_{3.5}$ $G_{2}$ तावूचतुः. — $^{d}$) $D_{S}$ $T_{1}$ अनृजु. — $^{f}$) $K_{2}$ युधि; $G_{3.5}$ भुवि (for क्षितौ).

22 $K_{5}$ $T_{2}$ $G_{2}$ om. the ref. $D_{1}$ भार्गव (for राम). — $^{a}$) $G_{5}$ एष (for स्म). $K_{2}$ उच्यमानस्तदा सम्यक्. — $^{b}$) Only $Ca.d.s$ अत्यगृह्यत (for अभ्यभाषत)! — $^{cd}$) S (except $T_{1}$ $G_{1.4}$) transp. क्षम्यमाणः and सान्त्व्यमानः. — $^{e}$) S (mostly) डंभोद्भवः. — $K_{5}$ om. $22^{d}$–$23^{c}$.

23 $K_{5}$ om. $23^{abc}$ (cf. v.l. 22). — $^{b}$) $K_{4}$ B D (except $D_{10}$; $Dn_{2}$ missing) $G_{4}$ भारत (for कौरव). — $D_{1}$ om. (? hapl.) $23^{d}$–$24^{a}$. — $^{d}$) S युद्धकाम मया सह.

24 $D_{1}$ om. $24^{a}$ (cf. v.l. 23). — $^{a}$) $G_{3-5}$ आधत्स्व. — $^{b}$) S संयोजय (for योजयस्व). — After $24^{ab}$, S

दम्भोद्भव उवाच ।
यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे ।
एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः ॥ २५
राम उवाच ।
इत्युक्त्वा शरवर्षेण सर्वतः समवाकिरत् ।
दम्भोद्भवस्तापसं तं जिघांसुः सहसैनिकः ॥ २६
तस्य तानस्यतो घोरानिषून्परतनुच्छिदः ।
कदर्थीकृत्य स मुनिरिषीकाभिरपानुदत् ॥ २७
ततोऽस्मै प्रासृजद्घोरमैषीकमपराजितः ।
अस्त्रमप्रतिसंधेयं तदद्भुतमिवाभवत् ॥ २८
तेषामक्षीणि कर्णांश्च नस्तकांश्चैव मायया ।
निमित्तवेधी स मुनिरिषीकाभिः समर्पयत् ॥ २९
स दृष्ट्वा श्वेतमाकाशमिषीकाभिः समाचितम् ।
पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ॥ ३०
तमब्रवीन्नरो राजञ्शरण्यः शरणैषिणाम् ।
ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुनः कृथाः ॥ ३१
मा च दर्पसमाविष्टः क्षेप्सीः कांश्चित्कदाचन ।
अल्पीयांसं विशिष्टं वा तत्ते राजन्परं हितम् ॥ ३२
कृतप्रज्ञो वीतलोभो निरहंकार आत्मवान् ।
दान्तः क्षान्तो मृदुः क्षेमः प्रजाः पालय पार्थिव ॥ ३३
अनुज्ञातः स्वस्ति गच्छ मैवं भूयः समाचरेः ।
कुशलं ब्राह्मणान्पृच्छेरावयोर्वचनाद्भृशम् ॥ ३४

C. 5. 3487
B. 5. 96. 38
K. 5. 96. 38

ins. line 1 of 431*. — c) K1 तेच; K5 तेत्र (for हि ते). — d) K1.2 D1 M3-5 अतः (for इतः). B1.3 M2 परां. — K4 Dn1 D2-4.8.9 ins. after 24: S ins. line 1 after 24ab and line 2 after 24:

431* संनह्यस्व च वर्माणि यानि चान्यानि सन्ति ते ।
यदाह्वयसि दर्पेण ब्राह्मणप्रमुखाञ्जनान् ।

[ (L. 2) K4 Dn1 D3.4.8 गर्वे° (for दर्पे°). K4 Dn1 D2-4.8.9 व्रजन् (for जनान्). ]

25 K2 राजा; S (mostly) डंभोद्भवः. — b) G1.4 योक्तुं (for युक्तं). — D1 om. 25c-26d. — d) D2 T2 G2.4.5 M तु; T1 G1 त्वम् (for हि). T1 G1 इह (for अहम्). K5 युद्धार्थमहमागतः.

26 D1 om. 26 (cf. v.l. 25). K1.5 D7.10 G4 M1.2 om. the ref. — c) S तापसौ तौ (for तापसं तं). — d) D5.6.10 सह सैनिकैः; S बलदर्पितः.

27 a) S क्षिप्रं (for घोरान्). — c) T1 G1.4 शकलीकृत्य; Ca.s कदर्थी° (as in text). — d) K1.2 D1.7.8.10 उपानुदत्; K4 B (except B2) Ds D5.6 समार्पयत्; Dn1 समापतत्; D2 समर्थयत्; D3.4.9 उपाद्रवत् (for अपानुदत्).

28 G2 om. 28-29. — a) K2 ततोस्त्रं; S (G2 om.) तस्मै स (M1-3 सं-) (for ततोऽस्मै). K1 प्राहरद्घोराम् (for प्रासृजद्घोरम्). — b) B1.3.5 D1.2 T G1.4 M2 अपराजितं. K1 इषीकामपराजितां.

29 G2 om. 29 (cf. v.l. 28). — b) K1.4.5 B Ds2 D2-10 नासिकाः; K2 Dn1 नासिकां; S (G2 om.) मस्तकान्; Ca.s नस्तकान् (as in text). — c) D1 G3.4 निमित्तवेदी; Ca as in text. — d) K1.4 B D (except D2.7.9; Dn2 missing) Ca.s समार्पयत्.

30 a) S घोरम् (for श्वेतम्). — b) K2 S समावृ(G2 °मर्पि)तं; Cap °हितं; Ca °चितं (as in text). — c) K2 T G1-3 M अपतद्; K5 न्यप°; G5 त्वप° (for न्यप°). B3 T2 राजन् (for राजा). — d) D1 स्वस्तीति (for मेऽस्त्विति).

31 a) T2 G2 ततो (for नरो). — b) Ds वरेण्यः (for शरण्यः). K2 S (except T1 G1) शरणैषिणं. — c) K2 G3.5 M1.3.4 धर्मात्मन्. — d) K2 Ds D2-4.9 T G1.2.4 transp. च and स्म. K2 Ds मनः (for पुनः). — After 31, N (K3 Dn2 missing) ins.:

432* नैतादृक्पुरुषो राजन्क्षत्रधर्ममनुस्मरन् ।
मनसा नृपशार्दूल भवेत्पुरपुरंजयः ।

[ (L. 1) K5 समाचरन् (for अनुसरन्). — (L. 2) K5 भवान्; Ds भवन् (for भवेत्). K2 B3-5 D1.5.10 भवत्परिपुरंजयः (for the posterior half). ]

32 a) K2 वै; T1 G1.4 स्म (for च). — b) T2 क्षेशात्; G2 क्षेपात् (for क्षेप्सीः). K2 निर्भर्त्सय (for क्षेप्सीः कांश्चित्). K1 D7.8.10 कंचित्; K5 D1 T2 G2 किंचित् (for कांश्चित्). K4 B4 D (except D1.2.7.10; Dn2 missing) कथं° (for कदा°). — K5 om. 32c-33d. — c) S सदृशाञ्छ्रेयसो वापि. — d) K1.4 B D (except D3.4.9; Dn2 missing) Cs समाहितं (for परं हितम्).

33 K5 om. 33 (cf. v.l. 32). — a) K1.2 B3.5 D1.7.10 °शोको (for °लोभो). S जितक्रोधः कृ(G5 जि)तप्रज्ञः. — c) D2-4.7.9.10 T1 G5 M शांतः (for क्षान्तः). K1 क्षेम्यः; K2 क्षेमी; K4 B Dn1 Ds D2-6.8.9 सौम्यः; D7.10 क्षांतः; T G (except G3) M1.2 क्षेमं (for क्षेमः). — d) S सर्वदा (for पार्थिव). Ds प्रजापालनतत्परः. — After 33, N (K3 Dn2 missing) ins.:

C. 5. 3487
B. 5. 96. 39
K. 5. 96. 39

ततो राजा तयोः पादावभिवाद्य महात्मनोः ।
प्रत्याजगाम स्वपुरं धर्मं चैवाचिनोद्भृशम् ॥ ३५
सुमहच्चापि तत्कर्म यन्नरेण कृतं पुरा ।
ततो गुणैः सुबहुभिः श्रेष्ठो नारायणोऽभवत् ॥ ३६
तस्माद्यावद्धनुःश्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते ।
तावत्त्वं मानमुत्सृज्य गच्छ राजन्धनंजयम् ॥ ३७
काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा ।
संतानं नर्तनं घोरमास्यमोदकमष्टमम् ॥ ३८
एतैर्विद्धाः सर्व एव मरणं यान्ति मानवाः ।
उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञा विचेतसः ॥ ३९
स्वपन्ते च प्लवन्ते च छर्दयन्ति च मानवाः ।
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च ॥ ४०
असंख्येया गुणाः पार्थे तद्विशिष्टो जनार्दनः ।
त्वमेव भूयो जानासि कुन्तीपुत्रं धनंजयम् ॥ ४१
नरनारायणौ यौ तौ तावेवार्जुनकेशवौ ।
विजानीहि महाराज प्रवीरौ पुरुषर्षभौ ॥ ४२

---

433* मा स्म भूयः क्षिपेः कंचिदविदित्वा बलाबलम् ।

34 Dn2 resumes! — $^{b}$) K1.2 D2 (by corr.). 3.4.9 समाचर. S स्वगृहान्राजसत्तम. — $^{c}$) D3.4.9 transp. कुशलं and ब्राह्मणान्. — $^{d}$) K2 विभो (for भृशम्).

35 Before 35, K5 D3–6.8 ins. राम उ°. — $^{a}$) Ds पादं; T1 G1.5 M पादान् (for पादौ). — $^{b}$) T1 अभिवंद्य. — $^{c}$) S अभ्या° (for प्रत्या°). — $^{d}$) K1.4.5 B2.4 D (except D1.2) अचरत्; K2 अकरोत्; Ca अचिनोत् (as in text).

36 $^{a}$) S अनेकं चा(G5 °कधा)स्य (for सुमहच्चापि). Ds T2 G2.5 यत् (for तत्). — $^{c}$) K1.2 G5 M8 स (for सु-). T G1.2.4 गुणैः स बहुभिः श्रेष्ठः. — $^{d}$) D2 श्रेयान् (for श्रेष्ठो). D3.4.6 G3 भवेत्. T G1.2.4 नरनारायणोभव(T2 G2 °वे)त्.

37 $^{a}$) K1 युधां श्रेष्ठ (for धनुःश्रेष्ठे). — $^{b}$) A few N MSS. गांजीवे.

38 $^{a}$) Dn1 कांगदीकं; Cs काकुघ्नीकं; Ca. n काकुदीकं (as in text). B1.3 गुरुं; D1 स्वकं; Ca. s शुकं (as in text). Cs तोकं; Ca नाकं (as in text). K1 ककुदीकं सुकेचाकं; K2 D2 ककुदीकं शुकं पाकं (D2 चाकं); K4 ककुदं किंशुकं वाक्यं; B2 काकुदीदं सुतं नाम; T G कंकुदीपं कं(G3.5 पं)कुचापं; M ककुदीपं पंकु(M1 °गु-; M4.5 °क)चापं. — $^{b}$) K5 अक्षसंतर्जनं; D9 कक्षि°; T G1.2.4.5 M अक्षिसंतर्दनं; G3 अक्षि हंत धनं; Ca. s as in text. — $^{c}$) K4.5 B Dn Ds D1–6.8–10 नर्तकं; D7 नरकं; G5 संदनं; Ca. s नर्तनं (as in text). — $^{d}$) K1 G4.5 M5 हास्यमो(K1 °मा)दकं; D1.2 आस्यमोदनं; T G1.2 M1–4 हास्यं मोदकं (T2 G2 °नं); Ca. s आस्यमोदकं (as in text). B5 अष्टकं.

39 $^{a}$) K1.2 D1 T2 G2 नैतैर् (for एतैर्). — $^{b}$) D2 (before corr.) शरणं; S प्रमोहं (for मरणं). — After $39^{ab}$, Dn ins.:

434* कामक्रोधौ लोभमोहौ मदमानौ तथैव च ।
मात्सर्याहंकृती चैव क्रमादेत उदाहृताः ।

[ Cs cites this verse, attributing it to Devabodha (देवबोधपादास्तु…इति ।)! It is also cited in Ca, as giving the meaning of our stanza 38. Just this passage is unformably lost in Cd, on a missing fol.! Nīl. has incorporated it in his *text*, to preserve it presumably from being irrevocably lost! ]

— K2 om. $39^{cd}$; D8 om. (hapl.) $39^{c}$–$40^{b}$. — $^{c}$) K1 S तु (for च). S (except T2 G2 M2) विनश्यंति (for विचेष्टन्ते).

40 D8 om. $40^{ab}$ (cf. v.l. 39). — $^{a}$) N (except K1.2; K3 missing; D8 om.) स्वपंति. — $^{b}$) Ds छर्दयंते; D1 छादयंति; T G1–3.5 M प्रछर्दंति; G4 दीर्घयंति (for छर्दयन्ति). K1.2.5 D7 एव; T2 G3 इव (for च). — D3 om. $40^{cd}$. — $^{c}$) D10 (*sup. lin.* as in text) मूर्छयंते. — $^{d}$) K1.5 D2 T2 G2 M रोदंति; K2 रोदंते (for रुदन्ति). G1 विष्टंभंति हसंति च.

41 $^{a}$) K2 अतो गुणैः सुबहुभिः (marg. आसन्नेते गुणाः पार्थे); cf. $36^{c}$. — $^{b}$) K2 (m as in text) श्रेष्ठो देवो (for तद्विशिष्टो). S तद्विशिष्टा जनार्दने.

42 S reads 42 after 44. — $^{a}$) K2 चोभौ; T G1.2.4 यौ हि (for यौ तौ). — $^{b}$) S ता(T2 G2 या)वेतौ केशवार्जुनौ. — $^{c}$) S °प्राज्ञ (for °राज). — $^{d}$) K5 यौ वीरौ; S अजेयौ; Ca प्रवीरौ (as in text). K2 B1.3.4 Dn D1.2.6 T G M1 (*inf. lin.*). 3–5 पुरुषोत्तमौ; M1 (orig.). 2 कृष्णपांडवौ (for पुरुषर्षभौ). — After 42, K4 D (except Ds D1.7.10) S ins.:

435* निर्माता सर्वलोकानामीश्वरः सर्वकर्मकृत् ।
यस्य नारायणो बन्धुरर्जुनो दुःसहो युधि ।
कस्तमुत्सहते जेतुं त्रिषु लोकेषु भारत ।
वीरं कपिध्वजं जिष्णुं यस्य नास्ति समो युधि ।

[ (L. 1) Dn2 D2–4.9 °कर्माणाम् (for °लोकानाम्). K4

यद्येतदेवं जानासि न च मामतिशङ्कसे ।
आर्यां मतिं समास्थाय शाम्य भारत पाण्डवैः ॥ ४३
अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति ।
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः ॥ ४४
भवतां च कुरुश्रेष्ठ कुलं बहुमतं भुवि ।
तत्तथैवास्तु भद्रं ते स्वार्थमेवानुचिन्तय ॥ ४५

इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## ९५

वैशंपायन उवाच ।
जामदग्न्यवचः श्रुत्वा कण्वोऽपि भगवानृषिः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ १
अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः ।
तथैव भगवन्तौ तौ नरनारायणावृषी ॥ २
आदित्यानां हि सर्वेषां विष्णुरेकः सनातनः ।
अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः ॥ ३
निमित्तमरणास्त्वन्ये चन्द्रसूर्यौ मही जलम् ।
वायुरग्निस्तथाकाशं ग्रहास्तारागणास्तथा ॥ ४
ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा ।
क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुनः पुनः ॥ ५
मुहूर्तमरणास्त्वन्ये मानुषा मृगपक्षिणः ।
तिर्यग्योन्यश्च ये चान्ये जीवलोकचराः स्मृताः ॥ ६
भूयिष्ठेन तु राजानः श्रियं भुक्त्वायुषः क्षये ।

C. 5. 3507
B. 5. 97. 7
K. 5. 97. 7

D (except Ds D1.7.10) °वित् (for °कृत्). — (L. 2) T1 G1.4 यस्य भ्राता युधिष्ठिरः (for the posterior half). — (L. 3) T1 G1.4 तं जेतुं कः समर्थश्च (for the prior half). ]

43 a) D1 G5 एव (for एवं). — b) N (except K1 D7; K8 missing) T2 G2 अभि°; G3 अवि° (for अति°). — c) S साम्यमात्मनि चास्थाय.

44 a) Ds यदि त्वं (for अथ चेन्). S (G3 damaged) मन्यसे यदि वै (T G1.2 [by transp.] वै यदि) श्रेयो. — b) K2 मम (for न मे). K2 D1.2 खेदो (for भेदो). — K5 D1 om. (hapl.) $44^d$–$45^a$. — After 44, S reads 42 (followed by 435*).

45 K5 D1 om. $45^a$ (cf. v.l. 44). — a) K1 D7.10 S (except G4) हि (for च). — d) S अत्र (for एव). B D (except D1.2.4.7.9.10) उप° (for अनु°).

Colophon missing in K8. — *Sub-parvan:* K2.5 B1–4 Dn Ds D10 G1 M भगवद्यान. — *Adhy. name:* K1.4.5 B2–5 Dn Ds D2–7.9.10 T1 G1.4 M दं(G1.4 M डं)भोद्भवोपाख्यानं (K4 °द्भवाख्यानं; D9 दंभोरुपाख्यानं); G2 भार्गवरामवाक्यं; G5 जामदग्न्यवचनं and डंभोद्भवोपाख्यानं; to it K1.5 B4 D2.5.6.10 add समाप्तं. — *Adhy. no.* (figures, words or both): D5 92; D6 88 (repeated); D7 M1–3.5 97; T G1.2.4.5 98; G3 M4 96. — *S'loka no.:* Dn 52; Ds 54.

**95**

☞ This adhy. is missing in K8 (cf. v.l. 5. 32. 15).

2 Before 2, all MSS. except B1–3 D10 ins. कण्व उ° (resp. कण्वः). — b) D3.4.9 यथा (for ब्रह्मा).

3 a) K1.5 B2.4 D7.10 च (for हि). — c) K1.2.5 D1–4.7.9.10 अक्षयः; D5.6.8 T2 G1.2.4 Ca अजेयः (for अजय्यः).

4 a) K2 D7 निमित्तकारणाः; D1 निमित्तं कारणं; Cnp निमित्तकारणानि; Ca.s निमित्तमरणाः (as in text). B Dn Ds च (for तु). K4 D2–4.9 निमित्तकारणा ह्यन्ये; T2 (*inf. lin.* as in text) G1.4 निमित्तमात्रास्त्वन्ये च. — K5 om. (hapl.) $4^b$–$6^a$. — b) Dn D9 चंद्रः सूर्यः; D2 चंद्रादित्यौ (for चन्द्रसूर्यौ). K4 Ds2 D5–7.9.10 S महीतलं (for मही जलम्). — d) T1 G1.4 अंभः (for ग्रहाः).

5 K5 om. 5 (cf. v.l. 4). — c) D7 G2 ते (for वै). — D1 om. $5^d$–$6^a$.

6 K5 D1 om. $6^a$ (cf. v.l. 4, 5). — c) K1.5 Ds2 D1 M1.2 तिर्यग्योन्याः; K2 °ग्योनौ; B1.4 Dn D3.4 T2 तैर्यग्योन्यः; Ds D2.9 °ग्योनाः; D3.4 तैर्यग्यौनाः; D7 °ग्योन्यां; G2 °ग्योनिः; G5 °ग्योनः; M4 तैरन्योन्यः (for तिर्यग्योन्यः). — d) K1 जीवलोकपराः; Dn1 D8 °वराः; D3.4.9 °लोके चराः; T1 G1.4 °धराः. K4 B Dn Ds D1.2.5.6.8.9 T G1.2.4 तथा; D3.4.7.10 सदा (for स्मृताः).

7 a) K1.2.5 D7 भूयिष्ठमत्र; G5 °ष्ठैव तु (for °ष्ठेन तु).

C. 5. 3507
B. 5. 97. 7
K. 5. 97. 7

मरणं प्रतिगच्छन्ति भोक्तुं सुकृतदुष्कृतम् ॥ ७
स भवान्धर्मपुत्रेण शमं कर्तुमिहार्हति ।
पाण्डवाः कुरवश्चैव पालयन्तु वसुंधराम् ॥ ८
बलवानहमित्येव न मन्तव्यं सुयोधन ।
बलवन्तो हि बलिभिर्दृश्यन्ते पुरुषर्षभ ॥ ९
न बलं बलिनां मध्ये बलं भवति कौरव ।
बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमाः ॥ १०
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मातलेर्दातुकामस्य कन्यां मृगयतो वरम् ॥ ११
मतस्त्रैलोक्यराजस्य मातलिर्नाम सारथिः ।
तस्यैकैव कुले कन्या रूपतो लोकविश्रुता ॥ १२
गुणकेशीति विख्याता नाम्ना सा देवरूपिणी ।
श्रिया च वपुषा चैव स्त्रियोऽन्याः सातिरिच्यते ॥ १३
तस्याः प्रदानसमयं मातलिः सह भार्यया ।
ज्ञात्वा विममृशे राजंस्तत्परः परिचिन्तयन् ॥ १४

धिक्खल्वलघुशीलानामुच्छ्रितानां यशस्विनाम् ।
नराणामृद्धसत्त्वानां कुले कन्याप्ररोहणम् ॥ १५
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं संशयितं कुरुते कन्यका सताम् । १६
देवमानुषलोकौ द्वौ मानसेनैव चक्षुषा ।
अवगाह्यैव विचितौ न च मे रोचते वरः ॥ १७
न देवान्नैव दितिजान्न गन्धर्वान्न मानुषान् ।
अरोचयं वरकृते तथैव बहुलानृषीन् ॥ १८
भार्यया तु स संमन्त्र्य सह रात्रौ सुधर्मया ।
मातलिर्नागलोकाय चकार गमने मतिम् ॥ १९
न मे देवमनुष्येषु गुणकेश्याः समो वरः ।
रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् ॥ २०
इत्यामन्त्र्य सुधर्मां स कृत्वा चाभिप्रदक्षिणम् ।
कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

Dn1 D3.4.9 M2 च (for तु). — b) K1 युगक्षये; D1 ययुः क्षयं; D8 तथा क्षये (for [आ]युषः क्षये). — c) N (K3 missing) Cs तरुणाः (for मरणं). K4 B Dn Ds D2–6.7–9 Ca.s प्रतिपद्यंते; K5 कृतमिच्छंति; D1 प्रतिपत्स्यंते; D7.10 प्रेत्य गच्छंति. — d) K4.5 B D T G1.4.5 M3 (*inf. lin.*) °दुष्कृते.

9 a) K1.5 D7.10 अप्येवं; D5 T2 M2 इत्येवं (for इत्येव). — b) B2.4 कथंचन (for सुयोधन). — D7 om. $9^c$–$10^b$. — c) K4 B D (except D1; D7 om.) बलिभ्यो हि (B2 °भ्योपि; D2 °भ्योभि-); T2 G2 [ऽ]पि बलिभिः (for हि बलिभिः). — d) K1 मृष्यंते; T G1.2 भ्रश्यंते; G5 क्लिश्यंते; Ca दृश्यन्ते (as in text). D1.2 M भरत° (for पुरुष°).

11 ab) = 5. 35. $5^{ab}$; 104. $7^{ab}$; 131. $1^{ab}$. Cf. 5. 9. $2^{ab}$.

12 a) Dn Ds D10 मतस्त्रिलोकराज्यस्य; S °त्रैलोक्यनाथस्य. — c) K5 B2 D10 (by corr.) M2 एवैका; T2 एका च; G2 चैव (for एकैव). T2 अभवत् (for कुले). — d) K5 सर्वलक्षणसंयुता; D2 रूपतो विश्रुता भुवि.

13 K2 om. $13^{ab}$. — d) G2.3.5 M स्म (for सा). K5 स्त्रियोन्या व्यत्यरिच्यत.

14 a) K5 T1 तस्याः प्रदानसमये. — c) B2 दृष्ट्वा; D10 बुध्या (for ज्ञात्वा). Some N MSS. विममृषे. K1 संमंत्र्य विमृशे राजन्. — d) Dn1 तत्पदं; T G1.2 तद्वरं; G3–5 तं वरं (for तत्परः). T2 G2 प्रतिचिंतयन्.

15 a) D1 transp. धिक् and खलु. K5 D10 m बलं; Dn1 D2–6.8–10 अस्तु; G8 कुलं (for खलु). K2 लब्ध° शीलानां; K5 B2 Dn1 D1–6.8.9.10 m G8 लघुशीलानां; D10 गुणशीलानां; Ca अलघुशीलानां (as in text). — b) B2 D1 उत्थितानां; Ca.s उच्छ्रि° (as in text). K1 महात्मनां; D5.6.8 मनस्विनां (for यश°). — c) K5 D10 (*sup. lin.*) इद्ध°; B D (except D7.10) G4 मृदु° (for ऋद्ध°). — d) T G2.3.5 कन्यानिरूपणं (T2 G2 °णां); M °विरोपणं; Ca as in text.

16 c) Ds संशयितुं (for °यितं). — d) S सतीं (for सताम्).

17 b) K1.2 B (except B2) T2 M2 मानुषेण; K4 D3.4.9 T1 G1 मनसा च (for मानसेन). — D1 om. $17^c$–$18^b$; K3 om. $17^{cd}$. — c) B5 विदितौ; D2 विधिना; G3 चित्तेन (for विचितौ).

18 D1 om. $18^{ab}$ (cf. v.l. 17). Before 17, K4 B D (except D7; D1 om.) G1 ins. कण्व उ° (G1 om. उ°).

## ९६

कण्व उवाच ।

मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा ।
वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया ॥ १
नारदोऽथाब्रवीदेनं क्व भवान्गन्तुमुद्यतः ।
स्वेन वा सूत कार्येण शासनाद्वा शतक्रतोः ॥ २
मातलिर्नारदेनैवं संपृष्टः पथि गच्छता ।
यथावत्सर्वमाचष्ट स्वकार्यं वरुणं प्रति ॥ ३
तमुवाचाथ स मुनिर्गच्छावः सहिताविति ।
सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः ॥ ४
अहं ते सर्वमाख्यास्ये दर्शयन्वसुधातलम् ।
दृष्ट्वा तत्र वरं कंचिद्रोचयिष्याव मातले ॥ ५
अवगाह्य ततो भूमिमुभौ मातलिनारदौ ।
ददृशाते महात्मानौ लोकपालमपां पतिम् ॥ ६
तत्र देवर्षिसदृशीं पूजां प्राप स नारदः ।
महेन्द्रसदृशीं चैव मातलिः प्रत्यपद्यत ॥ ७
तावुभौ प्रीतमनसौ कार्यवत्तां निवेद्य ह ।
वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ॥ ८
नारदः सर्वभूतानामन्तर्भूमिनिवासिनाम् ।
जानंश्चकार व्याख्यानं यन्तुः सर्वमशेषतः ॥ ९

नारद उवाच ।

दृष्टस्ते वरुणस्तात पुत्रपौत्रसमावृतः ।
पश्योदकपतेः स्थानं सर्वतोभद्रमृद्धिमत् ॥ १०

C. 5. 3531
B. 5. 98. 10
K. 5. 98. 10

— [b]) $K_{1.2}$ गंधर्वांश्च च ($K_2$ °श्चैव) मानुषान्. — $K_5$ om. $18^{e}$–$19^{b}$. — [c]) $K_4$ B D (except $D_1$) $G_4$ Ca अरोचयद् (for °चयं). — [d]) $D_5$ $D_8$ यथा (for तथा). S त्रिषु लोकेषु वै (M नो) ऋषीन्.

19 $K_5$ om. $19^{ab}$ (cf. v.l. 18). — [a]) $K_{1.4}$ $B_4$ Dn नु; $K_2$ $T_2$ $G_2$ च (for तु). $D_{1.7.10}$ S (except $M_5$) सु- (for स). — [b]) $T_2$ $G_2$ पुत्र्या (for सह). S पुत्र्या ($T_2$ $G_2$ सह) (for रात्रौ). $D_5$ $T_1$ $G_4$ $M_4$ सधर्मया; Ca सु° (as in text). — [d]) $K_{1.2.5}$ $D_{10}$ $T_2$ $G_{2.5}$ M (except $M_1$) मनः (for मतिम्).

20 [a]) S वै (for मे). — [c]) $K_2$ संमतो; $D_1$ रूपेण (for रूपतो).

21 [a]) $D_{5.6}$ स° (for सु°). $K_2$ तु; $K_5$ तां; $D_9$ च (for स). — [b]) $K_{2.5}$ $B_{1.3}$ $D_{1.10}$ T G (except $G_3$) $M_1$ चापि; $D_7$ वारि- (for चाभि-). — [d]) $K_2$ $D_{1.2}$ $T_1$ $G_{1.4}$ रसा° (for मही°).

Colophon missing in $K_3$. — *Sub-parvan:* $K_{1.5}$ $B_{1-3}$ $D_{7.10}$ $G_{1.5}$ M भगवद्यान; to it $K_1$ $B_{1-3}$ $D_{10}$ $G_{1.5}$ M add मातलिवरान्वेषण. $K_{2.4}$ $B_{4.5}$ Dn Ds $D_{2.5.6.8}$ $T_1$ $G_{2.4}$ all om. sub-parvan name, mentioning only मातलिवरान्वेषण. — *Adhy. name:* $G_{2.5}$ कण्ववाक्यं; M मातलिगमनं. — *Adhy. no.* (figures, words or both): $D_5$ 93; $D_7$ T $G_{1.2.4.5}$ 99; $G_3$ $M_4$ 97; $M_{1-3.5}$ 98. — *S'loka no.:* $K_5$ 18; Dn 21.

### 96

☞ This adhy. is missing in $K_3$ (cf. v.l. 5. 32. 15).

1 [b]) $K_{2.4}$ $D_{3.4.9}$ S (except $G_{3.5}$ $M_{1.2}$) सुरर्षिणा (for मह°).

3 [a]) $Dn_1$ $D_{6.8.9}$ एव (for एवं). — [b]) $K_{1.2}$ $D_1$ स पृष्टः. — [d]) $D_6$ $G_3$ वरणं; M नारदं (for वरुणं). $B_{1.3.5}$ स्वकन्यावरणं प्रति.

4 [b]) $B_3$ Dn Ds $T_1$ $G_{3.4}$ M गच्छाव (for °वः). — [d]) $K_5$ अभि-; $T_1$ अस्मि (for अपि).

5 [a]) $K_1$m त्वां; $D_1$ तु (for ते). — [b]) $D_{3.4}$ वसुधातले; $G_{1.4}$ वै रसातलं; Ca as in text. — [d]) $B_5$ $D_1$ रोचयिष्यामि; $D_2$ °ष्यसि; $M_4$ (*inf. lin.*) °ष्याम.

6 [a]) $K_{1.4}$ $B_4$ $D_{7.10}$ तु तौ (for ततो). — [b]) $K_2$ उभौ नारदमातली. — [c]) $K_1$ $D_{7.10}$ $G_{3.4}$ महात्मानं.

7 [b]) Dn transp. प्राप and स. $K_2$ $B_{1.3}$ $T_2$ $G_2$ प्राप्य स; Ds $D_{5.6}$ संप्राप; $D_8$ संप्राप्य (for प्राप स). — [c]) $K_{1.5}$ $D_{7.10}$ तु (for च).

8 [a]) $K_5$ Ds $D_8$ प्रीति° (for प्रीत°). — [b]) $K_2$ कार्यतत्त्वं; $K_4$ $B_{3.4}$ Dn $D_{3-6.8.9}$ $G_{3.4}$ °वंतौ; $D_1$ °वृत्तं. $B_2$ $D_1$ $G_2$ $M_2$ च (for ह).

9 [c]) $D_{5.6.8.9}$ राजन् (for जानन्). $D_{3.4}$ चाख्यानं (for व्या°). — [d]) S अजानतः (for अशेषतः).

10 [a]) $K_4$ B D (except $D_{1-4.9}$) सूत (for तात). — [b]) $K_{1.2.5}$ $D_{1.7.10}$ M °समन्वितः. — [c]) $T_1$ $G_{1.3-5}$

